**नारीं पृच्छामि नेन्दुं कथयतु विजया न प्रमाणं यदीन्दु-**
**र्देव्या निह्नोतुमिच्छोरिति सुरसरितं शाठ्यमव्याद्विभोर्वः[१] ॥ १ ॥**

---

निर्दिश्य छलेनोत्तरयति—शशिकलेति । पुनरपि मया पृष्टाया एव युवत्याः शशिकलेति नाम स्यादिति मन्वानाया देव्या ऋजूक्तिः किं नु नामैतदस्या इति । पुनश्च शशिकलामेवोद्दिश्य अस्या इत्युभयसाधारण्येन शिवस्य छलोत्तरं—नामैवास्यास्तदेतत्परिचितमित्यादिना । कस्य हेतोरिति केन हेतुनेत्यर्थः । निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनमिति षष्ठी । ते इति शेषे षष्ठी । अथ परिचितशशिकलानामकथनव्याजेन मया बुभुत्सितां युवतिं निह्नुत इति शिवस्य कैतवं ज्ञात्वा जटाजूटनिलीनापरिचितनारीविषयकः प्रश्नः क्रियते न परिचितेन्दुविषय इति देव्याह—नारीं पृच्छामि नेन्दुमिति । तत्र नारीमिति एकस्मिन्नेव पदे पृच्छतेरप्रधानकर्मत्वं देव्यभिमतत्वेनापाद्य वाक्छलेन पुनरपि शिव उत्तरयति । यदि नारीं प्रति प्रश्नः क्रियते न तु मां प्रति इन्दुप्रधानकर्मकः तर्हि सजातीयत्वाद्विश्रम्भपात्रं ते सखी पृष्टा सती—कथयतु विजया न प्रमाणं यदीन्दुरिति । सुयोज्यमानोऽपीन्दुरूपोऽर्थः न प्रमाणं यदि तथ्यत्वेन न संमतश्चेदित्यर्थः । यद्वा । उभयोः कर्मकारकयोः संनिहितयोः सतोरेकस्य त्यागायोगात् नारीमिन्दुमित्युभयमपि अप्रधानकर्मत्वेनापाद्य शिव एवमाह । यदि नारीं प्रति प्रश्नः क्रियते नेन्दुं प्रति तर्हि—कथयतु विजया । न प्रमाणं यदीन्दुः विजातीयत्वादिन्दुः प्रष्टव्यत्वेन न संमतश्चेदित्यर्थः ।—देव्या निह्नोतुमिच्छोरिति सुरसरितं शाठ्यमव्याद्विभोर्वः इत्येवं प्रकारेण देव्याः सकाशाद्बुद्धिकृतापादानत्वविवक्षया पञ्चमी । सुरसरितं गङ्गां निह्नोतुमपलपितुमिच्छोर्वाक्छलेन देवीं वञ्चयत इति यावत् । विभोः परमेश्वरस्य शाठ्यं छलोक्तिरव्यात्पायादिति पद्यस्य वाच्योऽर्थः । अत्र वक्रोक्तिरलंकारः ।

'यदुक्तमन्यथावाक्यमन्यथात्वेन योज्यते ।
श्लेषेण काका विज्ञेया सा वक्रोक्तिस्तथा द्विधा ॥' इति लक्षणात् ।

तेन च वक्ष्यमाणं नाटकीयं वस्तु व्यज्यते । अतोऽलंकारेण वस्तुध्वनिः ॥ १ ॥

---

१ M reads र्नः for र्वः.

अपि च।

पादस्याविर्भवन्तीमवनतिमवने रक्षतः स्वैरपातैः
संकोचेनैव दोष्णां मुहुरभिनयतः सर्वलोकातिगानाम्।
दृष्टिं लक्ष्येषु नोग्रज्वलनकणमुचं बध्नतो दाहभीते-
रित्याधारानुरोधात्त्रिपुरविजयिनः पातु वो दुःखनृत्तम्॥ २॥

द्वितीयं नान्दीपद्यम्—पादस्येति। पादस्य स्वैरपातैः स्वच्छन्दस्फालनैरा-विर्भवन्तीं आविर्भविष्यन्तीम्। 'वर्त्तमानसामीप्ये वर्त्तमानवद्वा' इति लट्। अवनेः पृथिव्याः अवनतिं न्यग्भावम्। भङ्गमिति यावत्। रक्षतः परिहरतः। अवनिभङ्गभीत्या शनैः पादौ निक्षिपत इत्यर्थः। चोरं रक्षतीत्यत्र चोरस्य स्वच्छन्दचारनिषेधवदत्रावनेरवनत्याविर्भावनिषेधो रक्षतेरर्थः। संकोचे-नेति—सर्वांल्लोकानूर्ध्वं तिरश्चातिक्रम्य गन्तुं समर्थानाम्। अतिविस्तार-भाजां दोष्णां भुजानां संकोचेनैव भुजाघातेन लोकाः संहृता मा भूव-न्निति भुजानां क्रोडीकरणेनैव मुहुरभिनयतः अङ्गविक्षेपं कुर्वतः। 'अङ्ग-हारोऽङ्गविक्षेपो व्यञ्जकाभिनयौ समौ' इत्यमरः। दृष्टिमिति—उग्रज्वलन-कणमुचं तीव्रविस्फुलिङ्गकिरं दृष्टिं भाललोचनं लक्ष्येषु दृगभिनयद-र्शनीयेषु वस्तुषु दाहभीतेर्दग्धानि मा भूवन्निति न बध्नतः न निक्षिपतः। इतीति—इत्याधारानुरोधादित्येवमुक्तस्याधारस्य नृत्तक्रियाश्रयस्य पृथि-व्यादेरनुरोधाद्यथाक्रमं भङ्गसंहरणदाहा मा भूवन्निति अनुक्रोशात्त्रिपुर-विजयिनः शिवस्य दुःखनृत्तं दुःखेन कृच्छ्रेण यथाकथंचित्सायंतनाव-श्यकविधितयाङ्गवैकल्येनाप्यनुष्ठीयमानं नृत्तं वः पातु इति पद्यस्य वाच्योऽर्थः। नन्वत्र तृतीयलोचनाभिनयासंभवान्नृत्तवैकल्यप्रसञ्जनमयुक्तं तत्पिधायापि द्वाभ्यामेव लोचनाभ्यां लक्ष्याभिनयस्य सुकरत्वादिति चेन्मैवम्। द्विलोचनस्यैकस्मिंल्लोचने विकलेऽन्येनाभिनयवैकल्यवत्त्रिलोचन-स्यापि तथात्वोपपत्तेः। तस्मादुक्तं दृगभिनयवैकल्यप्रयुक्तदुःखनृत्तत्वप्रसञ्जनं समञ्जसमिति संतोष्टव्यम्। अत्र त्रिपुरविजयिन इति पदेन यथा पुरविज-

1 For नोग्र we have नोग्रां in B. and for बध्नतो P. R. read बिभ्रतो. The Calcutta edition with Dhuṇḍhirâja's commentary has बिभ्रता. 2 For वो M. has नो; for नृत्तम् we have नृत्तम् in B. and N.

यिना विशिखवह्निना त्रिपुरं दग्धम्, एवं क्रोधाग्निना नन्दवंशवत्सराक्षसं मलयकेतुं दग्धुं समर्थस्यापि चाणक्यस्य राक्षससंजिघृक्षानुरोधात्कुचक्रेण कुटिलनीतिप्रयोगाभिनिवेश इति ध्वनितम् । अत्र अवन्यादीनामवनत्याद्ययोगेऽपि योगकल्पनात्संबन्धातिशयोक्तिरलंकारः 'संबन्धातिशयोक्तिः स्यादयोगे योगकल्पनम्' इति तल्लक्षणात् । त्रिपुरविजयिन इति साभिप्रायविशेषणात्परिकरालंकारश्च । ताभ्यां कौटिल्यनीतिरूपवस्तुध्वनिः ॥ २ ॥ अनयैव रीत्या गणपतिस्तुतिपरमस्मदीयं पद्यम्—

'शेषाहेः फणभङ्गभीरुरवनौ मन्दं निधत्ते पदं
चीत्कारं जगदण्डसंपुटभिदाभीत्या विधत्ते मनाक् ।
नोड्डीयेत जगज्जवादिति शनैः कर्णाञ्चलं दोलय-
त्येवंयोऽखिललोकरक्षणचणः पायाद्गणेशः स वः ॥'

अत्र पूर्वनान्दीपद्ये—

'नान्दीपद्येऽभिधातव्यं चन्द्रनामेति शासनात् ।
इन्दुरित्यमृतं बीजमायुःप्रदमुदीरितम् ॥
सनामा सूचितस्तेन चन्द्रगुप्तोऽपि नायकः ॥
लक्ष्मीकुन्मगणश्चोक्तस्तल्लक्ष्मीस्थैर्यसूचकः ॥
नान्दीपद्येषु कुर्वीत मनाक्काव्यार्थसूचनम् ।
इति शास्त्रात्कविः किंचिद्वस्त्वेवं समसूसुचत् ॥
शृङ्गारो वाथवा वीरो मुख्यः स्यान्नाटके रसः ।
करुणाद्भुतहासाद्यास्तयोरङ्गतया मताः ॥
वीरो रसः प्रधानं स्यान्मुद्राराक्षसनाटके ।
अत्यद्भुतकरी शाठ्यनीतिरत्राङ्गमिष्यते ॥
नीतिर्द्विधेरिता धर्मशाठ्यप्राधान्यभेदतः ।
धर्मशाठ्ये संदधतो द्विविधा सा यथायथम् ॥
आद्या युधिष्ठिरादिभ्यो विदुरादिभिरीरिता ।
अन्योक्ता धृतराष्ट्राय दुर्दान्तैः कणिकादिभिः ॥
अत्यद्भुतविधादत्र संविधानान्महाकविः ।
प्रपञ्चयति चाणक्यमुखेन कुटिलं नयम् ॥
दण्डनीतिर्विनयनाल्लोकस्थितिविधायिनी ।
ऐशी तनुर्द्विधा सा स्याच्छिवा घोरा विभेदतः ॥

शिवा धर्मानुविद्धा स्याद्धोरा कौटिल्यगर्भिता ।
साध्वाचारः साधुनेति न्यायाद्योज्या द्वयोर्द्वयोः ॥
उमा सत्त्वप्रधानत्वादृजुनीतितयेष्यते ।
गङ्गा कुटिलगामित्वात्कुटिला नीतिरिष्यते ॥
तां धर्मनीतेर्निह्नुत्य प्रपञ्चयितुमुत्सुकः ।
चाणक्योऽद्भुतधीरत्र विभुशब्देन सूचितः ॥
आधारवशतो दुःखनृत्तमित्युत्तरेण च ।
पद्येन ध्वनितं कृच्छ्राच्छाठ्यनीतिप्रकल्पनम् ॥
आधारो राक्षसो मौर्यराज्यनिर्वाहकत्वतः ।
तत्संजिघृक्षयाधत्त कौटिल्यः कुटिलं नयम् ॥
कलौ पापिनि कौटिल्यनीतिः सद्यःफलप्रदा ।
इत्यभिप्रेत्य कौटिल्यस्तामेवात्र प्रयुक्तवान् ॥
इत्याधारानुरोधादित्युक्त्या राक्षसरक्षणम् ।
यत्नाद्विधेयं ध्वनितं क्रुद्धान्मलयकेतुतः ॥
भागुरायणवाक्येन तदेतत्स्फुटयिष्यते ।
रक्षणीया राक्षसस्य प्राणा इत्यादिना पुरः ॥
सचिवायत्तसिद्धित्वात्पौरुषं स्वमदर्शयन् ।
गभीरात्मा चन्द्रगुप्तो धीरोदात्तोऽत्र नायकः
तद्राज्याङ्गधुरं वोढुं धृतिमान्राक्षसोऽर्हति ।
तत्संग्रहोऽत एवात्र साध्यो नीतिस्तु साधनम् ॥'

एवमत्रार्थत इन्दुःशाठ्यमिति शब्दतश्च मनाक्काव्यार्थो ध्वनितः ।

'उदीरितस्त्र्यम्बकार्यैर्नान्दीपद्यध्वनिः शुभः ।
स एष ढुण्ढिनाकारि कारिकाडिण्डिमैः स्फुटः॥'

अथ नाटकादिलक्षणानि निरूप्यन्ते—

'रूप्यतेऽभिनयैर्यत्र वस्तु तद्रूपकं विदुः ।
नाटकाद्यैर्दशविधं तदित्यन्यत्र विस्तरः ॥'

तदुक्तं दशरूपके—

नाटकं सप्रकरणं भाणः प्रहसनं डिमः ।
व्यायोगसमवाकारौ वीथ्यङ्केहामृगा इति ॥'

एतेषां लक्षणानि विस्तरभयान्नेहोच्यन्ते ।

अथैषां सामग्री निरूप्यते । तत्र पञ्चसंधयः—'मुखं प्रतिमुखं गर्भः सविमर्शो निबर्हणम्' इति । संधिर्नाम एकेन प्रयोजनेनान्वितानां कथांशानामवान्तरप्रयोजनसंबन्धः । तत्रारम्भबीजसंबन्धो मुखसंधिः । यत्नबिन्दुसंबन्धः प्रतिमुखसंधिः । प्राप्त्याशापताकयोः संबन्धो गर्भसंधिः । नियताप्तिप्रकर्षसंबन्धो विमर्शसंधिः । फलागमकार्ययोः संबन्धो निबर्हणसंधिः ।

'बीजबिन्दुपताकाख्यप्रकरीकार्यलक्षणाः ।
आरम्भयत्नप्राप्त्याशानियताप्तिफलागमाः ॥
अर्थप्रकृतयः पञ्च पञ्चावस्थासमन्विताः ।
यथासंख्येन जायन्ते मुखाद्याः पञ्चसंधयः ॥' इति ॥

अर्थप्रकृतयः कार्यसिद्धिहेतवः बीजादयः पञ्चारम्भादिपञ्चावस्थासमन्विताः सन्तः यथासंख्यं मुखाद्याः पञ्चसंधयो जायन्त इत्यर्थः ।

आरम्भादीनां लक्षणं निरूपितं दशरूपके—

'औत्सुक्यमात्रमारम्भः फललाभाय भूयसे ।
प्रयत्नस्तु तदप्राप्तौ व्यापारोऽतित्वरान्वितः ॥
उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसंभवः ।
अपायाभावतः प्राप्तिर्नियताप्तिः सुनिश्चिता ।
समग्रफलसंपत्तिः फलयोग उदाहृतः ॥'

अथ बीजादिपञ्चकं निरूप्यते—

'स्तोकोद्दिष्टः कार्यहेतुर्बीजं विस्तार्यनेकधा ।
अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम् ॥
प्रतिपाद्यकथाङ्गं स्यात्पताका व्यापिनी कथा ।
अव्यापिनी प्रकरिका कार्यं निर्वाहकृत्फले ॥'

इति लक्षणसंग्रहः ॥

अथ नान्दीस्वरूपं निरूप्यते—

'अर्थतः शब्दतो वापि मनाक्काव्यार्थसूचनम्
यत्राष्टभिर्द्वादशभिरष्टादशभिरेव वा ।
द्वाविंशत्या पदैर्वापि सा नान्दी परिकीर्तिता ॥'

नाटकादिरूपकाणामादौ विहितं पद्यं नान्दीत्युच्यते । कैश्चिन्नान्द्यां पदनियमो नाभ्युपमन्यते । अतोऽत्र नाटके पदनियमो नादृतः । यद्वा—पदशब्दः पादवचनः । तथा च पद्यद्वयेनाष्टपदा नान्दी कृतेति ज्ञेयम् । अत्र नाटके वीरो रसः । अतिगहनकौटिल्यनीतिरूपोऽद्भुतरसः प्रधानमङ्गम् । अन्ये शृङ्गारकरुणादयो यथायथं द्रष्टव्याः । धीरोदात्तो नायकः । प्रख्यातमिति वृत्तम् । 'इतिहासनिबन्धनं प्रख्यातम्' इति लक्षणात् । चाणक्यकृतस्य नन्दवंशोद्धरणस्य चन्द्रगुप्ताभिषेकस्य च विष्णुपुराण—बृहत्कथा—कामन्दकादिषु संक्षेपेणोक्तत्वात् ।

विष्णुपुराणे—

'नव चैतान्नन्दान्कौटिल्यो ब्राह्मणः समुद्धरिष्यति । कौटिल्य एव चन्द्रगुप्तं राज्येऽभिषेक्ष्यति । अतःपरं शूद्राः पृथिवीं भोक्ष्यन्ति ॥' इति ।

बृहत्कथायाम्—

'चाणक्यनाम्ना तेनाथ शकटारगृहे रहः ।
कृत्यां विधाय सप्ताहात्सपुत्रो निहतो नृपः ॥'
शकटारः क्षपणकलिङ्गधारी चाणक्यमित्रं इन्दुशर्मा ।
'योगानन्दे यशःशेषे पूर्वनन्दसुतस्ततः ।
चन्द्रगुप्तः कृतो राज्ये चाणक्येन महौजसा ॥'

कामन्दके—

'वंशे विशालवंशानामृषीणामिव भूयसाम् ।
अप्रतिग्राहकाणां यो बभूव भुवि विश्रुतः ॥
जातवेदा इवार्चिष्मान्वेदान्वेदविदां वरः ।
योऽधीतवान्सुचतुरश्चतुरोऽप्येकवेदवत् ॥
यस्याभिचारवज्रेण वज्रज्वलनतेजसः ।
पपात मूलतः श्रीमान्सुपर्वा नन्दपर्वतः ॥
एकाकी मन्त्रशक्त्या यः शक्तः शक्तिधरोपमः ।
आजहार नृचन्द्राय चन्द्रगुप्ताय मेदिनीम् ॥
नीतिशास्त्रामृतं धीमानर्थशास्त्रमहोदधेः ।
य उद्दध्रे नमस्तस्मै विष्णुगुप्ताय वेधसे ॥' इति ॥

( नान्द्यन्ते )

**सूत्रधारः**—अलमतिप्रसङ्गेन[1] । आज्ञापितोऽस्मि परिषदा यथाद्य त्वया सामन्तवटेश्वरदत्तपौत्रस्य[2] महाराजपदभाक्पृथुसूनोः कवेर्विशाखदत्तस्य[3] कृतिरभिनवं मुद्राराक्षसं नाम नाटकं नाटयितव्यमिति । यत्सत्यं काव्यविशेषवेदिन्यां परिषदि प्रयुञ्जानस्य ममापि[4] सुमहान्परितोषः प्रादुर्भवति[5] । कुतः ।

चीयते बालिशस्यापि सत्क्षेत्रपतिता[6] कृषिः ।
न शालेः[7] स्तम्बकरिता वप्तुर्गुणमपेक्षते ॥ ३ ॥

---

नान्द्यनन्तरप्रविष्टेन सूत्रधारेण रङ्गप्रसादनपुरःसरं मृदुमधुरपदैः पद्यैः भारतीवृत्त्याश्रयणेन काव्यार्थः सूचनीयः । तदुक्तम्—

'रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः ।
ऋतुं कंचिदुपादाय भारतीं वृत्तिमाश्रयेत् ॥' इति ।

तदेतदाह—अलमिति । परिषदा संदिष्टार्थस्य क्षिप्रं कर्तव्यत्वाद्वाचामतिप्रसङ्गो वारणीय इत्यर्थः । 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यमरः । यत्सत्यमिति संघातो ध्रुवमित्यर्थे । अत्र भारतीवृत्तेरङ्गं परिषदभिमुखीकरणफला कविकाव्यनटादीनां प्रशंसारूपा प्ररोचना कृता । तथा हि—सामन्तवटेश्वरेति महाकुलप्रसूतत्वकथनेन कविप्रशंसा । काव्यविशेषवेदिन्यामिति काव्यपरिषदोः प्रशंसा ॥

बालिशस्येति । स्वस्य बालिशकृषीवलदृष्टान्ताद्विनयप्रदर्शनेनात्मश्ला-

---

१ R. has अलमलमति &c. for प्रसङ्गेन P. has विस्तरेण; (also the Bengal commentary edition ). २ Om. in B. E; for वटेश्वर M. has वत्सेश्वर; स्य in पौत्रस्य om. in P. P. and Bengal commentary edition om. पदभाक्; for पृथु K. reads पृथक्. ३ For दत्तस्य E. B. and the Nâgpur MSS. read देवस्य; R. reads कवेः after, not before विशाखदत्तस्य; for अभिनवं P. has अपूर्वं; B. E. and the Nâgpur MSS. omit it. ४ After ममापि A., B., E. and N. add चेतसि; the Bengal commentary edition omits it. A. omits सु in सुमहान्. ५ For प्रादुर्भवति P. has प्रादुर्भविष्यति; B. om. कुतः. ६ For सत् K. A. M. R. have सु. ७ For शाले M. reads शालि and B. R. P. read शालेः. For अपेक्षते E. reads अवेक्षते.

**तद्यावदिदानीं गृहं गत्वा गृहिणीमाहूय[1] गृहजनेन सह संगीतकमनुतिष्ठामि[2] । (परिक्रम्यावलोक्य च ।) इमे नो गृहाः ।**

---

घापराङ्मुखत्वरूपमहागुणकथनान्नटस्तुतिः । बालिशस्य बीजावापानभिज्ञस्यापि सुक्षेत्रपतिता कृषिः कर्षणम् । कृषिर्लक्षणया तत्संबन्धि बीजमित्यर्थः । चीयते उपचिता अभिवृद्धा भवति । शालेः एकस्य शाल्यङ्कुरस्य स्तम्बकरिता सुक्षेत्रगुणकृतनिबिडीभवनशीलता वप्तुः बीजावापकर्तुः गुणं दक्षत्वादिकं नापेक्षते । किंतु स्वयमेव भूसारगुणेनोपचिता भवतीत्यर्थः । अत्र सुक्षेत्रदृष्टान्तोऽपि परिषत्प्रशंसैव । स्तम्बं स्तोमं करोतीति स्तम्बकरिः । 'स्तम्बशकृतोरिन् । व्रीहिवत्सयोरिति वक्तव्यम्' इत्यनुशासनात्स्तम्बशब्दे उपपदे कृञ इन्प्रत्ययः ॥ ३ ॥ अनुतिष्ठामीति । अनुष्ठास्यामीत्यर्थः । 'यावत्पुरानिपातयोः' इति लट् । इदमामुखम् । तदुक्तम्—

'सूत्रधारो नटीं ब्रूते मारिषं वा विदूषकम् ।
स्वकार्यप्रस्तुतापेक्षी चित्रोक्त्या यत्तदामुखम् ॥
प्रस्तावना वा तत्र स्यात्कथोद्घातः प्रवृत्तकम् ।
प्रयोगातिशयश्चेति त्रीण्यङ्गान्यामुखस्य हि ॥' इति ।

एषामङ्गानां स्वरूपं निरूपितं दशरूपके—

'स्वेतिवृत्तसमं वाक्यमर्थं वा यत्र सूत्रिणः ।
गृहीत्वा प्रविशेत्पात्रं कथोद्घातो द्विधैव सः ॥
प्रस्तूयमानपात्रस्य गुणवर्णनया स्वतः ।
प्रविशेत्सूचितं पात्रं यत्र तत्स्यात्प्रवृत्तकम् ॥
एषोऽयमित्युपक्षेपात्सूत्रधारप्रयोगतः ।
पात्रप्रवेशो यत्रायं प्रयोगातिशयो मतः ॥' इति ।
'वीथ्यङ्गान्यामुखाङ्गत्वादुच्यन्तेऽत्र स्वभावतः ।
उद्घात्यकावलगिते प्रपञ्चत्रिगते छलम् ॥
वाक्केल्यधिबले गण्डमवस्यन्दितनालिके ।
असत्प्रलापव्याहारमृदवानि त्रयोदश ॥' इति ।

---

१ गृ-य om. in M. P. R. २ N. reads संगीतमनु°. For °मि, A. K. M. R. have °मीति. From इमे to प्रविश्यावलोक्य च om. in M.

तद्यावत्प्रविशामि[1] । (नाट्येन प्रविश्यावलोक्य च ।) अये, तत्किमिदमस्मद्गृहेषु[2] महोत्सव इव दृश्यते । स्वस्वकर्मण्यधिकतरमभियुक्तः परिजनः । तथा हि[3] ।

वहति जलमियं पिनष्टि गन्धा-
 न्नियमियमुद्ग्रथते[4] स्रजो विचित्राः ।
मुसलमिदमियं[5] च पातकाले
 मुहुरनुयाति कलेन हुंकृतेन ॥ ४ ॥

भवतु । कुटुम्बिनीमाहूय[6] पृच्छामि । (नेपथ्याभिमुखमवलोक्य ।)

---

एषां लक्षणानि—'गूढार्थपदपर्यायमालारूपेण प्रश्नोत्तरमालारूपेण च द्विविधमुद्धात्यकम् । अवलगितमपि द्विविधम्—अन्यकार्यछद्मनान्यकार्यकरणम्, अन्यकार्यप्रसङ्गात्प्रकृतकार्यसिद्धिः' इति । असद्भूतं मिथःस्तोत्रं प्रपञ्चः । पूर्वरङ्गे नटादिभिः साम्यादनेकार्थप्रयोजनं त्रिगतम् । प्रियसदृशैर्वाक्यैरप्रियैर्लोभनं छलम् । साकाङ्क्षस्य वाक्यस्य निवर्त्तनमुक्तिप्रत्युक्तिर्वा वाक्केलिः । स्पर्धयान्योन्यवाक्याधिक्यमधिबलम् । सहसोदितं प्रस्तुतविरोधि गण्डम् । रसावेशादुक्तान्यथाव्याख्यानमवस्यन्दितम् । सोपहासनिगूढार्थप्रहेलिका नालिका । प्रहेलिकावहेलनवचनम् । असंबद्धकथाप्रायः प्रलापोऽसत्प्रलापः । अन्यार्थं हास्यप्रलोभनकरं वचनं व्याहारः । दोषाणां गुणवत्प्रतिपादनं मृदवमिति । एषां यथासंभवं कतिचित्प्रस्तावनायां प्रयोक्तव्यानि । अत्र अये तत्किमिदमित्यादिना गृहकृत्यप्रसङ्गेन क्रूरग्रहः स केतुरिति प्रस्तावनारूपकार्यसिद्धेः अवलगनादवलगितं नाम आमुखाङ्गम् ॥

वहति जलमिति स्वभावोक्तिरलंकारः ॥ ४ ॥

---

१ For तद्यावत् P. has यावत् and R. तावत्. For °मि R. has °मीति; °मिद° om. in R. २ °मस्मद्गृ...महोत्सवो दृश्यते K. गृहोत्सव इवाद्य स्व° P; one स्व om. in E. ३ हि om. in E. ४ °नियमयमु° A. ५ For मुसल, A. P. E. read मुशल; For °मिद° M. R. read °मिय°. ६ For कुटुम्बिनीमाहूय K. M. R. read कुटुम्बिनीं तावदाहूय.

गुणवत्युपायनिलये[1] स्थितिहेतोः साधिके त्रिवर्गस्य ।
मद्भवननीतिविद्ये कार्याचार्ये[2] द्रुतमुपेहि ॥ ५ ॥

( प्रविश्य )

**नटी**—अज्ज[3], इअह्मि । अण्णाणिओएण मं अज्जो अणुगेह्लदु । (क)

( क ) आर्य, इयमस्मि । आज्ञानियोगेन मामार्योऽनुगृह्णातु ।

गुणवत्युपायेत्यार्या अल्पसमासा ऋजुपदा भारती वृत्तिः । अत्र भार्याविषये सौशील्यगृहकृत्यदक्षत्वादयो गुणा उपायाश्च । नीतिविषये गुणाः संधिविग्रहादयः षट् सामादय उपायाश्चत्वारः । विहितकार्योपदेष्टृत्वात्कार्याचार्यत्वमुभयत्र समम् । गार्हस्थ्यस्थितिहेतुत्रिवर्गसाधकत्वं पत्न्याः श्रुतिस्मृतिषु प्रसिद्धम् । नीतिविषये 'क्षयः स्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम्' इति उक्तलक्षणत्रिवर्गो राज्यस्थितिहेतुः । अत्र 'ऋतुं कंचिदुपादाय भारतीं वृत्तिमाश्रयेत्' इति वचनात्तृतीयाङ्के वर्णयिष्यमाणशरदृतूपादानं कृतमिति बोद्धव्यम् । तथा हि—अम्भःप्रसादादिगुणवति विजिगीषूणां सामाद्युपायनिलये तेषामेव दिग्विजयावसरप्रदायित्वेनार्थसाधिके तन्निबन्धनत्वाद्धर्मकामयोस्तत्साधिके च । एवं लोकस्थितिहेतुत्रिवर्गस्य साधिके जैत्रयात्रादिकार्याणामाचार्येऽनुकूलत्वेन प्रवर्त्तिके भोः शरद्भुतमुपेहीति विजिगीषुणा चन्द्रगुप्तेन शरदागमः प्रार्थ्यते तन्मन्त्रिणा चाणक्येन राक्षसातिसंधानार्थं स्वकुलविद्यानीतिरभिमुखीक्रियत इति च ध्वनितम् । उपायनिलये इत्यत्र निलीयतेऽत्रेति योगेन निलयशब्दो विशेष्यनिघ्नः । शरदृतोर्विजययात्रानुकूलत्वम् 'सरितः कुर्वती गाधाः पथश्चाश्यानकर्दमान् । यात्रायै नोदयामास तं शक्तेः प्रथमं शरत् ॥' इत्यादि सर्वैर्महाकविभिः बहुशः प्रपञ्चितम् । अत्र श्लेषोऽलंकारः—'नानार्थसंश्रयः श्लेषो वर्ण्यावर्ण्योभयास्पदः' इति तल्लक्षणात् । अत्रासद्भूतं भार्यास्तोत्रं प्रपञ्चः । साम्यादनेकार्थप्रयोजनं त्रिगतं चामुखाङ्गं त्रिष्वनुगतत्वादन्वर्थम् ॥ ५ ॥

१ °य for °ये. B.; B. E. om. the visarga. °ध° for °धि° M. २ कार्यादार्ये for कार्याचार्ये B. E. N. P; उपैहि B. E. K. P. M. ३ अज्जउत्त B. E. aud N.; ई for इ P. and N.; E. reads आणा;° K. has अणुग्गेह्लदु; P. अणुगेह्लादु; E. reads अज्जउत्तो अणुगिह्लेदु; R. has अणुगंणादु अज्जो; B. अणुगेह्लदु अज्जो; M. अणुगेहादु अज्जो and N. अज्जो अणुगिह्लेदु.

**सूत्रधारः**—आर्ये,[1] तिष्ठतु तावदाज्ञानियोगः। कथय किमद्य भवत्या तत्रभवतां[2] ब्राह्मणानामुपनिमन्त्रणेन कुटुम्बकमनुगृहीतमभिमता वा भवनमतिथयः संप्राप्ता[3] यत एष पाकविशेषारम्भः।

**नटी**—अज्ज[4] आमन्तिदा मए भअवन्तो बह्मणा। (क)

**सूत्रधारः**—कथय[5] कस्मिन्निमित्ते।

**नटी**—उवरज्जदि[6] किल भअवं चन्दो त्ति। (ख)

**सूत्रधारः**—आर्ये,[7] क एवमाह।

**नटी**—एवं[8] खु णअरवासी जणो मन्तेदि। (ग)

---

(क) आर्य, आमन्त्रिता मया भगवन्तो ब्राह्मणाः।

(ख) उपरज्यते किल भगवान् चन्द्र इति।

(ग) एवं खलु नगरवासी जनो मन्त्रयते।

---

आर्ये तिष्ठत्विति। इयं साकाङ्क्षस्य वाक्यस्य निवर्त्तनरूपा वाक्केलिः। कथयेत्यादि। इदमन्यार्थं पाकक्रियासाफल्यार्थं कुटुम्बकमनुगृहीतमिति प्रलोभनकरं वचनं व्याहारः॥

कस्मिन्निति। केन निमित्तेनेत्यर्थः। सर्वासां प्रायदर्शनस्योक्तत्वात्॥

उवरज्जदीति। इदं प्रियसदृशैर्वाक्यैर्विलोभनं छलम्। वक्ष्यति च विप्रलब्धासीति॥

एवमिति। अयं असंबद्धकथाप्रायः प्रलापः असत्प्रलापः॥

---

१ Om. R. and M.; कथयतु for कथय A. भवत्या Om. R. and M. २ For तत्रभवतां, भगवतां, B. E. M. R. and N. ब्राह्मणानामामन्त्रणेन M. R. after which B. adds एतत्, B. and E. read अथवा अभिमता भ° and E. adds another वा before भ°; P. adds भवत्या after वा in text. ३ सं om. in B. E. M. R; For यत एष K. reads यत एवैष. B. E. and M. read यदेष. ४ अजउत्त. E.; उवणिमन्तिदा for आमान्तिदा P. ५ A. M. K. begin this speech with आर्ये; and P. has अथ for कथय. ६ A has उपरज्जति; M. उपरज्जइ. P. begins this speech with अज्ज. ७ B. M. R. om. आर्ये. ८ एव्वं K; B. reads वखु; K has णअरणिवासि.; R. reads आमन्तेदि.

सूत्रधारः—आर्ये, कृतश्रमो[1]ऽस्मि चतुःषष्ठ्यङ्गे ज्योतिःशास्त्रे। तत्प्रवर्त्यतां [2]भगवतो ब्राह्मणानुद्दिश्य पाकः। चन्द्रोपरागं प्रति तु केनापि विप्रलब्धासि। पश्य[3]।

क्रूरग्रहः सकेतुश्चन्द्रम[4]संपूर्णमण्डलमिदानीम्।
अभिभवितुमिच्छति बलात्[5]

अत्र वृथा पाकारम्भरूपदोषस्य तत्प्रवर्त्त्यतामिति गुणवत्प्रतिपादनं मृदवं नामाङ्गम्॥

क्रूरग्रह इति। नेपथ्ये स्थितस्य चाणक्यस्येदं सहसोदितं प्रस्तुतस्य चन्द्रग्रहस्य विरोधि गण्डम्। क्रूरग्रहः स प्रसिद्धः केतुः राहुरित्यर्थः। उभयोरेकशरीरत्वेनाभेदव्यपदेशः। चन्द्रमसमिन्दुमिदानीमद्य पौर्णमास्यां पूर्णमण्डलमभिभवितुं ग्रसितुं बलादिच्छति परंतु बुधस्य ग्रहस्य योगः संबन्ध एनं चन्द्रमसं रक्षतीति। तथा च ज्योतिःशास्त्रे व्याससंहितायां गर्गवचनम्—

'ग्रहपञ्चकसंयोगं दृष्ट्वा न ग्रहणं वदेत्।
यदि न स्याद्बुधस्तत्र युद्धं दृष्ट्वा ग्रहं वदेत्॥' इति।

चाणक्यावगतार्थस्तु क्रूरो घोरः ग्रहः चन्द्रगुप्ताभिभवं प्रति आग्रहो यस्य स क्रूरग्रहो राक्षसः केतुना मलयकेतुना सहितः सकेतुः भीमो भीमसेन इतिवत्। चन्द्रं असंपूर्णमण्डलमिति छेदः। चन्द्रं चन्द्रगुप्तमिदानीमसंपूर्णमण्डलमवशीकृतसर्वराष्ट्रमद्याप्यरूढमूलमिति यावत्। बलान्महता म्लेच्छबलेनाभिभवितुं पराभवितुमिच्छतीति। एनं तु बुधस्य नयज्ञस्य चाणक्यस्य योग उपायो रक्षतीति प्रस्तावनार्थः। 'प्रस्तावना वा तत्र स्यात्कथोद्घातप्रवर्तिका' इति लक्षणात् इयं प्रस्तावना। अत्र वाशब्दस्य समुच्चयार्थत्वात् आमुखप्रस्तावनयोः समुच्चयः कृत इति बोध्यम्। अत्र मुद्रानामालंकारः। 'सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः' इति लक्षणात्॥ ६॥

१ A and K. read परिश्रमो.; M. and R. om. च...ङ्गे.; प्रवर्ततां. A. K. P. २ भ...तो om. in. P.; तु om. in E.; after तु M. K. R. E. add त्वं.; N. reads त्वं for तु. ३ This is followed by the figure 2 in R. ४ चन्द्रं संपूर्ण. E. and P. ५ B. P. add इत्यर्धोक्ते after बलात्.

( नेपथ्ये । )

[1]आः, क एष मयि स्थिते–

**सूत्रधारः**—

[2]रक्षत्येनं तु बुधयोगः ॥ ६ ॥

**नटी**—[3]अज्ज, को उण एसो धरणीगोअरो भविअ चन्दं ग्ग-हाभिजो[4]आदो रक्खिदुं इच्छदि । (क)

**सूत्रधारः**—[5]आर्ये, यत्सत्यं मयापि नोपलक्षितः । भवतु । भूयोऽभियुक्तः स्वरव्यक्तिमुपल[6]प्स्ये । ( 'क्रूरग्रहः–' इत्यादि पुनस्तदेव पठति ।)

(ने[7]पथ्ये ।)

[8]आः, क एष मयि स्थिते चन्द्रगुप्तमभिभवितुमिच्छति ।

**सूत्रधारः**—([9]आकर्ण्य ।) आर्ये, ज्ञातम् । कौटिल्यः ।

---

(क) आर्य, कः पुनरेष धरणीगोचरो भूत्वा चंद्रं ग्रहाभियोगाद्रक्षितु-मिच्छति ।

---

अज्ज इति । इदं सोपहासं निगूढार्थप्रहेलिका नालिका ॥

क एष इति । इदं स्पर्द्धयान्योन्यवाक्याधिक्यरूपमधिबलम् ॥

---

१ Om. in R. M. and N.; After स्थिते P. has चन्द्रगुप्तमभिभवितुमिच्छति, B has चन्द्रमभिभवितुमिच्छति बलात् with which the Râjâ's Ms. ( Nágpur ) agrees. २ रक्षत्वेनं K. ३ Om. in R., अज्जउत्त अध E., अज्ज अध. N.; उणो for उण M.; om. in P.; एसो Om. in A. and N.; णि for णी. M.R.B.E.; हविअ for भविअ M. ४ गहाभिओआदो A.; do. with यो for ओ and गा for आ P.R.; do. with ओगा for ओआ E.K. which however has ग्र for ग; M. reads गहाहिभआदो अहिरक्षिदुं; M. reads चन्दं केतुगहाभिओगादो; M. and R. इच्छइ for इच्छदि. ५ Om. in P., तत् for यत् N., अपि om. in A. °क्षितम् for °क्षित M. E.; यतः for भवतु E. N.; A. M. and K. add सन् after °युक्तः. ६ °लक्ष्ये for °लप्स्ये K.; P. and N. place पुनस्तदेव before क्रूर°. For इत्यादि A. has इति; M. K. R. E. have °हः सकेतुरिति; R. M. and K. om. तदेव. ७ पुनर्नेपथ्ये P. E. ८ Om. in A. and M.; K. and E. have कथय after it; B. adds बलात् and E. ग्रहाभियोगतः after इच्छति. ९ Om. R. M.; For आर्ये B and E. have आः; E. adds खल्वयम् after कौटिल्यः.

( नटी भयं [3]नाटयति । )

**सूत्रधारः—**

[1]कौटिल्यः कुटिलमतिः स एष येन
क्रोधाग्नौ प्रसभमदाहि नन्दवंशः ।
चन्द्रस्य ग्रहणमिति श्रुतेः सनाम्नो
मौर्येन्दोर्द्विषदभियोग [3]इत्यवैति ॥ ७ ॥

---

कौटिल्य इति । चन्द्रस्य ग्रहणमिति श्रुतेः श्रवणात्सनाम्नः समाननामकस्य मौर्येन्दोश्चन्द्रगुप्तस्य द्विषदभियोगः द्विषता मलयकेतुनाभियोगो निरोधः । अभिषेणनमिति यावत् । इत्यवैति एवं जानातीत्यर्थः ॥ ७ ॥ अत्र सनाम्नो मौर्येन्दोः द्विषदभियोग इत्यवैतीति रसावेशादुक्तान्यथाव्याख्यानमवस्यन्दितं नामामुखाङ्गम् । गूढार्थपदपर्यायमालारूपं प्रश्नोत्तरमालारूपं च द्विविधमप्युद्धात्यकं नामाद्यमङ्गमाद्ये नान्दीपद्ये कृतमामुखाङ्गत्वेन संग्राह्यम् । नान्दीपद्यस्याप्यामुखप्राक्कालिकत्वेनामुखान्तर्भूतत्वस्याप्युचितत्वात् । यदि नान्दी आमुखबहिर्भूतैवेत्याग्रहस्तर्हि क्रूरग्रहः सकेतुरित्यत्रैव गूढार्थपदपर्यायरूपमुद्धात्यकं बोध्यम् । अत्र रक्षत्येनं तु बुधयोग इति 'स्वेतिवृत्तसमं वाक्यमर्थं वा यत्र सूत्रिण' इति लक्षणात्कथोद्धातः । येन क्रोधाग्नौ प्रसभमदाहि नन्दवंश इति प्रस्तूयमानकार्यस्य गुणवर्णनया स्वत इति लक्षणसत्त्वात्प्रवृत्तकम् । स एष इति पदाभ्यां 'एषोऽयमित्युपक्षेपात्सूत्रधारप्रयोगत' इति लक्षणस्य च सत्त्वात्प्रयोगातिशयश्चेति त्रीण्यङ्गानि प्रस्तावनाया उक्तानि । इति वीथ्यङ्गैस्त्रयोदशभिः स्वाङ्गैश्च त्रिभिः सहिता षोडशाङ्गा प्रस्तावना निरूपिता। अत्र प्रथमाङ्के—

'वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ।
संक्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः ॥'

इत्युक्तलक्षणो विष्कम्भो न कृतः । प्रस्तावनयैव क्रोधाग्नौ प्रसभमदाहि नन्दवंश इति वृत्तकथांशस्य मौर्येन्दोः द्विषदभियोग इति वर्तिष्यमाणक-

---

१ E. adds कोऽसौ कौटिल्यः. २ B. has a—here instead of this. ३ For इत्यवैति B. has इत्युपैति. After this P. adds again नटी भयं नाटयति.

[1]तदित आवां गच्छावः । ( इति निष्क्रान्तौ । )

( प्रस्तावना । )

---

( ततः प्रविशति मुक्तां शिखां [2]परामृशंश्चाणक्यः । )

**चाणक्यः**—[3]कथय । क एष मयि स्थिते चन्द्रगुप्तमभिभवितुमिच्छति । [4]पश्य ।

---

थांशस्य च निदर्शनात् । यद्वा ।'अन्तर्जवनिकान्तस्थैश्चूलिकार्थस्य सूचना' इति लक्षणान्नेपथ्यगतेनैव चाणक्येन नाटकीयार्थस्य सूचनात् प्रस्तावनान्तर्गतैव चूलिका कृतेति बोध्यम् । अथ प्रकृते नाटके मुखसंधिरारभ्यते ।

संधेः सामान्यलक्षणानि दशरूपके—'अवान्तरार्थसंबन्धः संधिरेकान्वये सति' इति । एकेन प्रयोजनेनान्वितानां कथांशानां अवान्तरप्रयोजनेन संबन्धः संधिः । तत्रारम्भबीजसंबन्धो मुखसंधिः ।

'यत्र बीजसमुत्पत्तिर्नानार्थरससंभवा ।
प्रारम्भेण समायुक्ता तन्मुखं परिकीर्तितम् ॥'

इति मुखसंधिलक्षणम् ॥

ततः प्रविशति इत्यादिसंदर्भो मुखसंधिः । मौर्यलक्ष्मीस्थैर्यहेतुराक्षससंग्रहरूपमुख्यप्रयोजनार्थायाश्चाणक्योपायविचारकथाया अनुकूलदैवकृतराक्षसमुद्रालाभाद्यवान्तरप्रयोजनेन सह संबन्धस्य सामान्यलक्षणस्यारम्भबीजसंबन्धस्य च वक्ष्यमाणविशेषलक्षणस्य वक्ष्यमाणाया बीजसमुत्पत्तेश्च सत्त्वात् ।

मुक्तां शिखामिति । नन्दकुलवधप्रतिज्ञावसरे मुक्ता शिखा न बद्धा चन्द्रगुप्तलक्ष्मीस्थैर्यस्याद्याप्यनिष्पन्नत्वात् । अत्र सिंहवदतिक्रूरमपि मां परिभूय मया महता संरम्भेण साधितां मौर्यलक्ष्मीं राक्षसो हर्तुमिच्छतीति

---

१ E. has before this तन्न युक्तं कुपितस्य पुरतः स्थातुम्. २ परिमृशन्सक्रोधश्चा° A. K.; °सकोप for °सक्रोध M. R.; N. and E. merely add सकोप. before चाणक्यः in text. ३. Om. M. and R.; A. substitutes आः for it. K. and P. add आः before it. N. has it twice.; B. adds बलात् after इच्छति; E. has for the whole speech simply आः कथयति. ४ B. and R. om. पश्य.

आस्वादितद्विरदशोणितशोणशोभां
संध्यारुणामिव कलां शशलाञ्छनस्य ।
जृम्भाविदारितमुखस्य मुखात्स्फुरन्तीं
को हर्तुमिच्छति हरेः परिभूय दंष्ट्राम्[1] ॥ ८ ॥

अपि च ।

नन्दकुलकालभुजगीं कोपानलबहुल[2]नीलधूमलताम् ।
अद्यापि बध्यमानां वध्यः को[3] नेच्छति शिखां मे ॥ ९ ॥

---

रूपकातिशयोक्त्या ध्वनितम् । 'रूपकातिशयोक्तिः स्यान्निगीर्याध्यवसानतः' इति लक्षणात् । को नामेति राक्षसस्य साहसिकत्वदुःसाध्यसाधकत्वादयो गुणाः सूचिताः । हरेर्दंष्ट्रामिति मौर्यश्रियो दुरुद्धरत्वं सूचितम् । आस्वादितेति अचिरकृतनन्दवंशवधरोषोऽद्यापि न शान्त इति सूचितम् । संध्यारुणचन्द्रकलादृष्टान्तेन मौर्यश्रीरभिनवा वर्द्धिष्णुर्विश्वाभिनन्द्येति च सूचितम् । जृम्भाविदारितमुखस्येति स्वस्यास्मिन्विषयेऽतिजाग्रत्ता ध्वनिता । स्फुरन्तीमिति समग्राङ्गतया लक्ष्म्या वैरिदुःसाध्यत्वमुक्तम् । एव जाग्रतोऽपि मम पौरुषं परिभूय अवज्ञाय मौर्यलक्ष्मीं हर्तुं यतत इत्यहोऽतिशूरो दण्डनीतिपारदृश्वा स्वामिकार्यधुर्यो राक्षसोऽवश्यं संग्राह्य इति चाणक्यौत्सुक्यमात्ररूपा बीजस्यारम्भावस्थार्थतः सूचिता । चन्द्रगुप्तलक्ष्मीस्थैर्यफलकस्य राक्षससंग्रहरूपकार्यस्य हेतुरनुकूलदैवश्चाणक्यनीतिप्रयोगो बीजम् । यथा रत्नावल्यां वत्सराजस्य सागरिकाप्राप्तिहेतुरनुकूलदैवो यौगंधरायणोद्योगः । यथा वा वेणीसंहारे द्रौपदीकेशसंयमनहेतुर्भीमक्रोधोपचितो युधिष्ठिरोत्साहो बीजम् । तच्च बीजं महाकार्यावान्तरकार्यभेदादनेकप्रकारमित्यनेकधाविस्तारीत्युक्तम् । राक्षससंग्रहश्च मलयकेतुनिग्रहं विना न घटत इति निग्रहोऽप्यवान्तरप्रयोजनत्वेन सूचनीयः ॥ ८ ॥

तदेतदाह—नन्देति । नैल्यकौटिल्यगुणेन कालभुजगीधूमलतात्वेन नि-

---

1 This stanza om. in E. as also the following अपि च. 2 om. in P.; बहल B. E. N.; लोल for नील B.; नोल P. 3 After को R. and M. add नाम.

अपि[1] च ।

उल्लङ्घयन्[2]मम समुज्ज्वलतः प्रतापं
कोपस्य नन्दकुलकाननधूमकेतोः ।
सद्यः परात्मपरिमाण[3]विवेकमूढः
कः शालभेन विधिना लभतां विनाशम् ॥ १० ॥

शार्ङ्गरव शार्ङ्गरव[4] ।

( प्रविश्य )

**शिष्यः**—उपाध्याय, आज्ञापय ।

**चाणक्यः**—वत्स, उपवेष्टुमिच्छामि ।

**शिष्यः**—उपाध्याय[5], नन्वियं संनिहितवेत्रासनैव द्वारप्रकोष्ठशाला । तदस्या[6]मुपवेष्टुमर्हत्युपाध्यायः ।

**चाणक्यः**—वत्स, कार्या[7]भिनियोग एवास्मान्व्याकुलयति

---

रूपणम् । वेध्यो मलयकेतुरित्यर्थः । मलयकेतुनिग्रहं विना शिखां न बध्नामीति पद्यस्य निष्कृष्टोऽर्थः ॥ ९ ॥

इममेव संरम्भं वीररसेनोपोद्बलयति—उल्लङ्घयन्निति । मम मदीयस्य समुज्ज्वलतः प्रदीप्तस्य नन्दकुलवनदाहकवह्निरूपस्य कोपस्य प्रतापमुग्रत्वं ज्वालां चोल्लङ्घयन् । अतिक्रमिष्यन्नित्यर्थः । कः मलयकेतुःपरात्मनः परिमाणं तारतम्यं तद्विवेकशून्यः शालभेन विधिना दहनज्वालापतयालुशलभरीत्या विनाशं लभताम् । अत्र पद्यद्वयेऽनुभयताद्रूप्यरूपकालंकारः । 'विषय्यभेदताद्रूप्यं रञ्जनं विषयस्य यत् । रूपकं तु त्रिधाधिक्यन्यूनत्वानुभयोक्तिभिः ॥' इति लक्षणात् ॥ १० ॥

कार्यसंरम्भवैयग्र्येण द्विरुक्तिः—शार्ङ्गरवेति ॥

वत्सेति । इदमुपालम्भगर्भवचनम् । अधुनाप्यासनं त्वया न सज्जीकृतमित्याशयः ॥

वत्स, कार्याभिनियोग इति । कार्यं राक्षससंग्रहं प्रति अभिनि-

---

१ किं च A. K. R. M. and Nâgpur MSS. २ उल्लासयन् R. ३ परिणाम B. K. R. and Nâgpur MSS. ४ Om. in M. K. P. R. and Nâgpur MSS. ५ Om. in P.; After इयं K. P. and R. add सदा. ६ K. has simply तस्यामु°. ७ °र्याभियोग. M. R. K.; for एवास्मान् K. P. R. M. read एवमस्मान्; B. E. N. P. read °नाकुल; °for° न्याकुल°. For शिष्यजने further on M. R. have °जन.

न पुनरुपाध्यायसहभूः शिष्यजने दुःशीलता । (नाट्येनोपविश्यात्मगतम् ।) कथं प्रकाशतां गतोऽयमर्थः पौरेषु यथा किल नन्दकुलविनाशजनितरोषो[1] राक्षसः पितृवधामर्षितेन सकलनन्दराज्यपरिपणनप्रोत्साहितेन पर्वतकपुत्रेण मलयकेतुना सह[2] संधाय तदुपगृहीतेन च महता म्लेच्छराजबलेन[3] परिवृतो वृषलमभियोक्तुमुद्यत इति । (विचिन्त्य ।) अथवा येन मया सर्वलोकप्रकाशनन्दवंशवधं प्रतिज्ञाय निस्तीर्णा दुस्तरा प्रतिज्ञासरित्सोऽहमिदानीं प्रकाशीभवन्तमप्येनमर्थं[4] न समर्थः किं प्रशमयितुम् । कुतः ।

---

योगोऽभिनिवेशः एवं त्वदुपालम्भकत्वेनास्मान्व्याकुलयति । न पुनरुपाध्यायसहभूरुपाध्यायत्वव्याप्येत्यर्थः । शिष्यजने विषये दुःशीलता उपालम्भनशीलता । अल्पेऽप्यपराधे शिष्यजनं प्रति उपालम्भनमुपाध्यायानां सहजो दोष इत्यर्थः । त्वं तु सेवायामत्यन्तं समवहितोऽसि कार्यव्यग्रत्वादहं त्वामुपालब्धवानस्मीत्यर्थः । अत्र कार्याभिनियोग इत्यनेनानिर्वाहणाद्विन्द्वादिरूपेणानेकधा विस्तारिणः कार्यहेतोश्चाणक्योद्योगस्य बीजस्य स्तोकोद्देशः कृत इति बोध्यम् । अथास्य संधेरङ्गान्युच्यन्ते— 'अङ्गानि द्वादशैतस्य बीजारम्भसमन्वयात् ।' बीजारम्भानुगुण्येन मुखसंधेरङ्गानि प्रयोक्तव्यानि—

'उपक्षेपः परिकरः परिन्यासो विलोभनम् ।
युक्तिः प्राप्तिः समाधानं विधानं परिभावना ।
उद्भेदभेदकरणान्यन्वर्थानि यथाक्रमम् ॥' इति ।

कथमित्यादि । अयमाशयः—पुरं सर्वं नन्दमौलबलाक्रान्तं प्रकृतयश्च सर्वा नन्दकुलामात्ये राक्षसेऽनुरक्ताः । अतस्तदुद्यममुपश्रुत्य महान्त-

---

१ रोषामर्षो M. R. °नन्दकुलराज्य° P. परिपणप्रो° P. E. २ सह संधाय om. in M. and R. ३ म्लेच्छराजेन B; म्लेच्छबलेन M. R.; R. and E. om. च before महता. ४ °प्येतन्° K. For न समर्थः किम्. A. M. and K. the Nâgpur. MSS. and R. read समर्थः P. has किमसमर्थः B. has असमर्थः किम्. K omits प्र. B. and E. add इति. B. E. and Nâgpur MSS. add एतत् after कुतः.

यस्य मम

श्यामीकृत्याननेन्दूनरियुवतिदिशां संततैः शोकधूमैः
कामं मन्त्रिद्रुमेभ्यो नयपवनहृतं मोहभस्म प्रकीर्य ।
दग्ध्वा संभ्रान्तपौरद्विजगणरहितान्नन्दवंशप्ररोहा-
न्दाह्याभावान्न खेदाज्ज्वलन इव वने शाम्यति क्रोधवह्निः ॥ ११ ॥

अपि च ।

शोचन्तोऽवनतैर्नराधिपभयाद्धिक्शब्दगर्भैर्मुखै-
र्मामग्रासनतोऽवकृष्टमवशं हे दृष्टवन्तः पुरा ।
ते पश्यन्ति तथैव संप्रति जना नन्दं मया सान्वयं
सिंहेनेव गजेन्द्रमद्रिशिखरात्सिंहासनात्पातितम् ॥ १२ ॥

मन्तःकोपमुत्पादयेयुस्ततश्च महत्संकटमापतितं कथं कर्त्तव्यमिति चिन्ता। अथ वेति चिन्तापरिहारः । समागतमप्येनं दण्डेन निग्रहीतुं समर्थ इत्यर्थः ।

सामर्थ्यमेवोद्भावयति द्वाभ्याम्—श्यामीकृत्येति । अरियुवतय एव दिश इत्यादिरूपकम् । मन्त्रिद्रुमेभ्य इति । 'क्रियया यमभिप्रैति स संप्रदानम्' इति मोहभस्मविक्षेपक्रिययाभिप्रेतानां मन्त्रिद्रुमाणां संप्रदानत्वं 'पत्ये शेते' इतिवत् । राक्षसवक्रनासादीन्मन्त्रिणः स्वमन्त्रशक्त्या मोहयित्वा प्रतिविधातुमसमर्थान् कृत्वेत्यर्थः । पौरद्विजेति । वेणुवनदाहे द्विजगणाः पक्षिगणा उड्डीय पलायन्त इति भावः । मन्त्रिणः पौरांश्च हित्वा यत्प्रतिज्ञातं नन्दसंहरणं तदेव मया कृतमिति स्वस्योचितकारित्वं सूचितम् । न खेदान्न निर्वेदात् । संप्रति दाह्यो वध्यो मलयकेतुः प्राप्तस्तस्मिन् क्रोधवह्निर्ज्वलिष्यतीति भावः ॥ ११ ॥

शोचन्त इति । अवशं तदानीं प्रतिकर्तुमसमर्थं तथैव यथाग्रासनतोऽहमवकृष्टस्तथैवेत्यर्थः । ते पश्यन्तीति । ईदृशो मदीयः क्रोधः सर्वलोकप्रत्यक्ष इति भावः ॥ १२ ॥

शस्त्रं उद्योगम् । अयं बीजन्यास उपक्षेपः अङ्गम् । 'काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः' । राक्षससंग्रहरूपकार्यबीजस्य स्वोद्योगस्य बीज-

१ B. E. N. K. read °न्दूत्रिपुयुव.° For दिशां P. reads दशा. २ °पभिया धि° P. ३ °र्थ्या° B. and P. (?) ४ पश्यन्तु B. E. N. R. मया नन्दं जनाः M. ५ सिंहेनैव K.

सोऽहमिदानीमवसितप्रतिज्ञाभारो[1]ऽपि वृषलापेक्षया शस्त्रं धारयामि । येन मया

समुत्खाता नन्दा नव हृदयरोगा[2] इव भुवः
कृता मौर्ये लक्ष्मीः सरसि नलिनीव[3] स्थिरपदा ।
द्वयोः सारं तुल्यं द्वितयमभियुक्तेन मनसा
फलं कोपप्रीत्योर्द्विषति[4] च विभक्तं सुहृदि च ॥ १३ ॥

अथ वा अगृहीते राक्षसे किमुत्खातं नन्दवंशस्य किं वा स्थैर्यमुत्पादितं चन्द्रगुप्तलक्ष्म्याः । (विचिन्त्य[5] ।) अहो राक्षसस्य नन्दवंशे निरतिशयो भक्तिगुणः । स खलु कस्मिंश्चिदपि जीवति नन्दान्वयावयवे वृषलस्य साचिव्यं ग्राहयितुं न शक्यते । तदभियोगं[6] प्रति निरुद्योगः शक्योऽव्यवस्थापयितुमस्माभिः । अनयैव बुद्ध्या तपोवन-

न्यासादुपक्षेपात् । शस्त्रधारणमावश्यकमित्याह—येनेति । सारं न्याय्यम् । 'सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु' इत्यमरः । फलं निग्रहानुग्रहरूपमभियुक्तेन निग्रहानुग्रहाभिनिवेशवता मनसा द्विषत्सुहृदोस्तुल्यं युगपद्विभक्तं विभज्य स्थापितमित्यर्थः ॥ १३ ॥ सोऽहमिति पूर्वेणान्वयः । इदं बीजस्य बहुलीकरणं परिकरः । चन्द्रगुप्तलक्ष्मीस्थैर्योत्पादनहेतोर्बीजस्यावश्य कर्त्तव्यत्वेन प्रचुरीकरणाद्द्वितीयमङ्गम् । अहो इति । इयं बीजविषये आश्चर्यावेशः परिभावना तृतीयमङ्गम् । राक्षसभक्तिगुणविषयकाश्चर्यावेशस्य तत्संग्रहबीजविषयत्वोपपत्तेः । अहो एवं श्लाघ्यो मदीयोद्योग इति । स खल्विति । तस्य नन्दान्वयावयवस्याभियोगं प्रति प्रतिष्ठापनाभिमानं प्रति निरुद्योगो व्यवसायहीनश्चेद्वशे स्थापयितुं शक्य इत्यर्थः । 'तदभियोगं प्रति निरुद्यमो वावस्थाप्येत' इति पाठान्तरम् । वा अथवा तदभियोगं प्रति निरुद्यमो व्यवसायहीनोऽवस्थाप्यते वशीक्रियेतेत्यर्थः ।

१ भरो for भारो B. M. R. and N. २ शल्या for रोगा P. रागा B. ३ बिसिनीव P. ४ द्विषदि K. P. R. M. ५ Om. R.; E. has before it इति. ६ अतः before this B. E. P.; K. has नन्दवंशोद्यमं प्रति ( om. शक्यः ). R. M add तु after प्रति. B reads निरुद्योगैरस्माभिरवस्थातुमयुक्तमित्यनयैव &c. P. and E. agree, but P. reads नयुक्तं for °मयुक्तं and अस्माभिः before अनयैव; E. न before निरुद्योगैः and युज्यते for °अयुक्तं omitting एव after अनया.

गतोऽपि घातितस्तपस्वी नन्दवंशीयः सर्वार्थसिद्धिः। यावदसौ मलयकेतुमङ्गीकृत्यास्मदुच्छेदाय विपुलतरं प्रयत्नमुपदर्शयत्येव । (प्रत्यक्षवदाकाशे लक्ष्यं बद्ध्वा ।) साधु अमात्य राक्षस, साधु । साधु श्रोत्रिय, साधु । साधु मन्त्रिबृहस्पते, साधु । कुतः ।

ऐश्वर्यादनपेतमीश्वरमयं लोकोऽर्थतः सेवते
तं गच्छन्त्यनु ये विपत्तिषु पुनस्ते तत्प्रतिष्ठाशया ।
भर्तुर्ये प्रलयेऽपि पूर्वसुकृतासङ्गेन निःसङ्गया
भक्त्या कार्यधुरं वहन्ति बहवस्ते दुर्लभास्त्वादृशाः ॥ १४ ॥

अत एवास्माकं त्वत्संग्रहे यत्नः कथमसौ वृषलस्य साचिव्यग्रहणेन सानुग्रहः स्यादिति । कुतः ।

---

अस्माभिरिति । इदं गूढबीजप्रकाशनमुद्भेदः । पूर्वं गूढतया कृतस्य बीजस्य प्रकाशनात् । यावदेवं सत्यपि नन्दान्वये समूलमुन्मूलितेऽपीत्यर्थः ।

साधुत्वमेवाह—ऐश्वर्यादिति । बहवो दुर्लभा भवानेको जगति दिष्ट्योपलब्धोऽस्माभिरित्यर्थः । 'कृतिनः' इति कचित्पाठः । कुशला इत्यर्थः । तस्य भर्तुः पुनःप्रतिष्ठाशयानुगच्छन्तीत्यनुषज्यते । पूर्वसुकृतासङ्गेन पुराकृतसंरक्षणादिसुकृताविस्मरणेनेत्यर्थः । निःसङ्गया संप्रति निरुपाधिकया फलाशारहितयेत्यर्थः । इदं बीजगुणवर्णनं विलोभननामाङ्गम् । कार्यगुणवर्णनेन कारणगुणवर्णनस्यार्थसिद्धत्वात् ॥ १४ ॥

अत एवेति । अत्रौत्सुक्यमात्रमारम्भः स्पष्टमभिहितः ।

---

१ °केतुमूरीकृत्य M. R.; °केतुमुररीकृत्य P.; विमलतरं M.; प्रपञ्चं E. P. N.; यत्नं A.; P. has अस्मदुच्छेदाय after this. २ K. and P. om. one साधु before श्रोत्रिय; R. repeats साध्वमात्य and omits one साधु before and one after श्रोत्रिय; N. adds मंत्रि before श्रोत्रियः; B. omits all after राक्षस साधु to मन्त्रि; E. has मंत्रि for साधु before श्रोत्रिय; and omits साधु before मन्त्रिबृहस्पते. ३ R. M. have यत्. ४ धुरां B. R. M. A.; कृतिनः for बहवः B. E. P. ५ संग्रहणे P. and N.; प्रयत्नः P. B.; °मस्य for °मसौ. M.; ग्रहणेसा° E. ६ सानुरागः R. N.; P. om. इति.

[1]अप्राज्ञेन च कातरेण च गुणः स्याद्भक्तियुक्तेन कः
प्रज्ञाविक्रमशालिनोऽपि हि भवेत्किं भक्तिहीनात्फलम् ।
प्रज्ञाविक्रमभक्तयः समुदिता येषां गुणा भूतये
ते भृत्या नृपतेः कलत्रमितरे संपत्सु चापत्सु च ॥ १५ ॥

तन्मयाप्यस्मिन्वस्तुनि नशयानेन [2]स्थीयते । यथाशक्ति क्रियते [3]तद्ग्रहणं प्रति यत्नः । कथमिव । अत्र तावद्वृषलपर्वतकयोरन्यतर-[4]विनाशेनापि चाणक्यस्यापकृतं भवतीति विषकन्यया राक्षसेना-स्माकमत्यन्तोपका[5]रि मित्रं घातितस्तपस्वी पर्वतक इति संचारितो

अप्राज्ञेनेति । ते भृत्या नृपतेर्भूतये भवन्ति इतरे उक्तविलक्षणाः संपत्सु चापत्सु च कलत्रं कुटुम्बवत् केवलं पोष्याः । न कापि तैः स्वामिकार्यसिद्धिरिति भावः । इदं बीजगुणप्रोत्साहनं भेदः अङ्गम् । कार्यगुणैः स्वोद्योगस्य बीजस्य प्रोत्सहनादुपबृंहणात् ॥ १५ ॥

नशयानेनेति । नशब्देन समासः । सावधानेन स्थीयत इत्यर्थः । इदं बीजसंविधानं समाधानमङ्गं बीजस्य सम्यग्विधानात् ।

लोक इति । लोका अयमेवार्थस्तथ्य इति यथा मन्येरन् यथा चास्मासु विश्वसेयुस्तदर्थम् । किंचास्यैव लोकप्रतीतस्यार्थस्याभिव्य-क्तये निर्वहणसंधौ कथं राक्षसेन घातितस्तातो न चाणक्येनेत्येवं म-लयकेतुं प्रत्यमुमेवार्थमभिव्यञ्जयितुं प्रत्यापयितुमित्यर्थः । भागुराय-णनाम्ना स्वाप्ततमेन मलयकेतोः कृतकाप्तीकृतेन गूढप्रणिधिना अप-वाहितः कटकान्निःसारितः । मलयकेतुरर्धराज्यप्रदानेनात्रैव स्था-पितश्चेद्राक्षस उदासीनः अन्यत्र क्वापि गच्छेत् । अमर्षाद्वान्यं कंचि-त्प्रबलं प्रतिपक्षमुत्थाप्य प्रत्यवतिष्ठेत नास्मद्वशमेयात् । अपवाहिते

१ अज्ञानेन. P.; °त्सानुरागेण for °द्भक्तियुक्तेन in all the Mss. except E. २ अवस्थीयते. M. R. K. ३ तत्संग्रहणं; प्रति P.; तत्त्व (*sic*) द्ग्रहणे. Nâgpur MSS.; °मिति for °मिव B. E. P. N.; तत्र P. ४ °विनाशेपि A. M. R.; कन्यकया E. and Nâgpur MSS. ५ कारी. R. M. B. and Nâgpur MSS.; पर्वतेश्वर B. P.

[१]जगति जनापवादः। लोकप्रत्ययार्थमस्यैवार्थस्याभिव्यक्तये पिता ते चाणक्येन घातित इति रहसि त्रासयित्वा भागुरायणेनापवाहितः पर्वतकपुत्रो मलयकेतुः। शक्यः खल्वेष राक्षसमतिपरिगृहीतोऽपि व्यु[२]त्तिष्ठमानः प्रज्ञया निग्रहीतुम्। न पुनरस्य निग्रहात्पर्वतकवधोत्पन्नं रा[३]क्षसस्यायशः प्रकाशीभवत्प्रमार्ष्टुमिच्छामि। प्रयुक्ताश्च स्वपक्षपरपक्षयोरनुरक्तापरक्तजनजिज्ञासया बहुविधदेशवे[४]षभाषाचारसंचारवेदिनो नानाव्यञ्जनाः प्रणिधयः। अ[५]न्विष्यते च कुसुमपुरवासिनां नन्दामात्यसुहृदां निपु[६]णं प्रचारगतम्। तत्तत्कारणमुत्पाद्य कृतकृत्यता-

---

तु मलयकेतौ प्राय एनमेव परिगृह्य प्रत्यवतिष्ठेत। तदानेनैव जनापवादेन निर्वहणे जीवसिद्धिप्रत्यायितेन राक्षसमलयकेत्वोर्विरोधं संपाद्य कार्यप्रनाड्या राक्षसो वशयितुं शक्यः स्यादिति भावः। वक्ष्यति चैतद्वनगज इव तस्मात्सोऽभ्युपायैर्विनेय इति।

प्रज्ञयेति। प्रज्ञया निर्वहणे संपत्स्यमानयाधुनैव निग्रहीतुं शक्यः। तन्न युक्तमित्याह—न पुनरस्येति। मलयकेतुर्निगृहीतश्चेत् पर्वतकवधोऽपि मयैव कृत इति स्यात्। ततश्च राक्षसोपरि पातितमयशः परिमार्जितं स्यात्तथा सति निर्वहणे कुटिलनयेन संविधास्यमानो राक्षसमलयकेतुविरोधो न सिद्ध्येदिति भावः।

निपुणेति। निपुणं गूढत्वेन क्रियमाणं प्रचारगतं कपटाचरणप्रकारः तत्तत्कारणं 'स्त्रीमद्यमृगयाशीलौ' इत्यादि तृतीयाङ्के (१७२ पृष्ठे) वक्ष्यमाण-

---

१ जगति om. in A.; जगतीं M.; R. and M. have °स्यानभिव्यक्तये; E; has अस्य चार्थस्यैवाभिव्यक्तये. २ R. has उत्ति.°; बुद्ध्या for प्रज्ञया B; निवारयितुम् B. E. and N. ३ राक्षसस्य om. B. E. P. N.; °स्यापयशः for स्यायशः. R. M.; प्रमार्ष्टुमिति E.; प्रमार्ष्टुमलमिति. B.; B. and N. add अन्यच्च before प्रयु° for which N. E. read सुनियुक्ताश्च.; B. नियुक्ताश्च.; B. adds मया. after प्रयु° and om. one पक्ष. ४ B. and R. omit वेष., B. reading वेश after भाषा. ५ अन्विष्यन्ते and गतयः at the end of the sentence B. E. and Nâgpur MSS.; B. E. and M. read निवासिनाम्. ६ निपुणतरं B.; °मापाद्य. for °मुत्पाद्य P.; तत्तत्कृत्यतायामापा° P.

मापादिताश्चन्द्रगुप्तसहोत्थायिनो भद्रभटप्रभृतयः प्रधानपुरुषाः। श-त्रुप्रयुक्तानां च तीक्ष्णरसदायिनां [1]प्रतिविधानं प्रत्यग्रमादिनः परी-क्षितभक्तयः क्षितिपतिप्रत्यासन्नाः [2]नियोजितास्तत्राप्तपुरुषाः । अस्ति चास्माकं सहा[3]ध्यायि मित्रमिन्दुशर्मा नाम ब्राह्मणः। स चौ[4]शनस्यां दण्डनीत्यां चतुःषष्ट्यङ्गे ज्योतिःशास्त्रे च परं प्रावी-ण्यमुपगतः। स[5] मया क्षपणकलिङ्गधारी नन्दवंशवधप्रतिज्ञानन्तरमेव कुसुमपुरमुपनीय [6]सर्वनन्दामात्यैः सह सख्यं ग्राहितो विशेषतश्च त-स्मिन्रा[7]क्षसः समुत्पन्नविश्रम्भः। तेनेदानीं महत्प्रयोजनमनुष्ठेयं भ-विष्यति। [8]तदेवमस्मत्तो न किंचित्परिहास्यते। वृषल एव केवलं प्रधान[9]प्रकृतिष्वस्मास्वारोपितराज्यतन्त्रभारः सततमुदास्ते। अथ वा

---

मुत्पाद्य इतो निःसार्य मलयकेतुना सह संधाय कृतकृत्यतां 'एते वयं देवस्य कार्येऽवहिताः स्मः' इत्येवंरूपां (१७२ पृष्ठे) वक्ष्यमाणां आपादिताः सहोत्थायिनो बाल्यात्प्रभृति स्वसमानतया दानमानादिभिर्वर्धिता इत्यर्थः। इदानीं कार्यनिर्वहणप्रसङ्गसमय इत्यर्थः। 'यथाशक्ति क्रियते' इत्या-रभ्य 'भविष्यति' इत्यन्तं बीजानुगुणप्रस्तुतकार्यारम्भः करणम्। अत्रैव करणे। अत्र तावत् 'वृषल' इत्यारभ्य 'प्रमार्ष्टुमिच्छामि' इत्यन्तः संदर्भः बीजानुकूलसंघटनप्रयोजनविचारो युक्तिः। 'शत्रुप्रयुक्तानाम्' इत्यादि 'त-त्राप्तपुरुषाः' इत्यन्तं बीजसुखदुःखहेतुर्विधानम्। सुखदुःखहेतोर्विचारस्यात्र विधानात्। तीक्ष्णरसदायिनो दुःखहेतवः तत्प्रतिविधानं प्रति अप्रमादिनः सुखहेतवः।

न किंचित्परिहास्यत इति। परिहीनं न्यूनं न भविष्यतीत्यर्थः। इयं बीजनिष्पत्तिः परिन्यासः। न किंचित्परिहास्यते सर्वं समाहित-मिति परितः सर्वैरुपायैर्बीजस्य न्यासात्।

---

१ Om in R. २ नियुक्तास्तत्रा° B.; निरूपितास्तत्र तत्रा° E. and Nâgpur MSS. ३ °ध्यायी. E; °त्रं विष्णुशर्मा B. ४ औशनस्य...नीतौ B. and E. ५ स च. B. E.; लिङ्गवेषधारी R. B; om. वंश. ६ सर्वामात्यैः A. P.; सच (*sic*) नन्दा° Nâgpur MSS. ७ राक्षसे R.; °सश्च E.; समुत्पन्नः R.; महदत्र प्रयो.° R भवति P. ८ तदेवास्मत्तो E.; किंचिदपि R. M.; परिहीयते P. ९ प्रकृतिरस्मास्वारो° B. E. and the Nâgpur MSS.; प्रकृतिष्वारो° M.

[1]यत्स्वयमभियोगदुःखैरसाधारणैरपाकृतं तदेव राज्यं सुखयति । कुतः।

स्वयमाहृत्य[2] भुञ्जाना बलिनोऽपि स्वभावतः ।
गजेन्द्राश्च नरेन्द्राश्च प्रायः सीदन्ति दुःखिताः ॥ १६ ॥

( ततः प्रविशति यम[3]पटेन चरः । )

चरः—

पणमह [4]जमस्स चलणे किं कज्जं देवएहि अण्णेहिं ।
ए[5]सो खु अण्णभत्ताणं हरइ जीअं चडपडन्तम् ॥ १७ ॥ (क)

अवि अ ।

पु[6]रिसस्स जीविदव्वं विसमादो होइ भत्तिगहिआदो ।
मा[7]रेइ सव्वलोअं जो तेण जमेण जीआमो ॥ १८ ॥ ( ख )

---

(क) प्रणमत यमस्य चरणं किं कार्यं दैवतैरन्यैः ।
एष खल्वन्यभक्तानां हरति जीवं परिस्फुरन्तम् ॥

(ख) अपि च ।

पुरुषस्य जीवितव्यं विषमाद्भवति भक्तिगृहीतात् ।
मारयति सर्वलोकं यस्तेन यमेन जीवामः ॥

---

अभियोगदुःखैः कार्याभिनिवेशजनितखेदैरित्यर्थः । अयं बीजसुखागमः प्राप्तिर्नामाङ्गम् । बीजेन स्वनीतिप्रयोगेण वृषलस्य सुखा—गमात्सुखप्राप्तेः इत्थं मुखसंधेर्द्वादशाङ्गानि निरूपितानि । अतः परं यमपटचरवृत्तान्तः सर्वोऽपि 'अवान्तरार्थसंबन्धः संधिरेकान्वये सति' इत्युक्तस्य स्वपरपक्षानुरक्तापरक्तजनजिज्ञासाराक्षसमुद्रालाभाद्यवान्तरप्रयोजनसंबन्धस्य कथनार्थः। प्रयुक्ताश्च परपक्षेत्यनेन सूचितस्य यमपटचरस्य प्रवेशः ।

चडपडन्तमिति देशीयं क्रियमाणमित्यर्थः ।

---

१ P. om this.; °रपावृत्तं P. २ माहृत. K. ३ B. has सह before यम°. ४ यम° E.; जमस K.; चलणं A and Nâgpur MSS.; चलने E.; करिह E.; B. has देवेहिं; M. देवदेहिं; R. देवहिं. ५ एस्सो E.; क्खु B. E.; For जीअं M. R. read जीविअं. For च…न्तम् B. थडफडन्तम्.; E. चधनफडन्तम्.; N. धणफडन्तम्. ६ °पुरु M. R.; °विसमाउ M. K.; °मायु R.; °मा अपि. E.; माद्धं Nâgpur MSS.; this is followed by वि in A. K. P.; होदि for होइ A. K P.; भक्तिरहि° M. K. R. For °आदो, °यादो P.; °आदे K.; आओ Nâgpur MSS. ७ मारेदि P.; °सर्वं E.; देण for तेण M.; जमेन E.; जीवामो M. R.; जीयामो E.

जाव[1] एदं गेहं पविसिअ जमपडं दंसअन्तो गीआइं गाआमि। ([2]इति परिक्रामति।) (क)

**शिष्यः**—(विलोक्य।) भद्र[3], न प्रवेष्टव्यम्।

**चरः**—[4]हंहो बह्मण, कस्स एदं गेहम्। (ख)

**शिष्यः**—अस्माकमुपाध्यायस्य सुगृहीतनाम्न[5] आर्यचाणक्यस्य।

**चरः**—(विहस्य।) [6]हंहो बह्मण, अत्तकेरकस्स जेव्व मह धम्मभादुणो[7] घरं होदि। ता देहि मे पवेसं जाव दे उवज्झाअस्स जमपडं[8] पसारिअ धम्मं उपदिसामि। (ग)

---

(क) यावदिदं गृहं प्रविश्य यमपटं दर्शयन्गीतानि गायामि।

(ख) अहो ब्राह्मण, कस्येदं गृहम्।

(ग) अहो ब्राह्मण, आत्मीयस्यैव मम धर्मभ्रातुर्गृहं भवति। तस्माद्देहि मे प्रवेशं यावत्तवोपाध्यायस्य यमपटं प्रसार्य धर्ममुपदिशामि।

---

विषमादपि क्रूरादपि यमाद्भक्तिगृहीताद्भक्तिवशीकृतात्। भक्तितोषितादिति यावत्। पुरुषस्य जीवितव्यं जीवनं भवतीत्यर्थः। यमभक्तिरपमृत्युहारिणीति तात्पर्यम्। अनेन गीतिद्वयेन चाणक्यस्य यमवत्क्रूरस्य स्वपक्षपरपक्षानुग्रहनिग्रहसामर्थ्यं द्योतयन् स्वस्य गूढचरत्वं सूचयति।

---

१ ता. for जाव B; एअं Nâgpur MSS. E; जमपडअं B; यमपडं A; तंस° K; दंसयन्तो R; दंसअन्दो E; गीदआणि Nâgpur MSS.; गीदानि E; om. B; गाएमि B. and N; गायामि A; °अम्भि M. २ E. K. om. इति. ३ भद्रभद्र E. ४ अह्मो R; ब्र° P; ब्ब Nâgpur MSS; °म्म° B. E; °णा B. E. N. K; कस्य P; एअं E. ५ नामधेयस्य R. M; आचार्यचाण° M. K. and Nâgpur MSS; आर्यस्य चा° P. ६ See note 4. अत्तणो ज्जेव केरअस्य B; अत्तणोकेरकस्य E. R; अत्तजस्स A; अत्तणोकेरअस्स Nâgpur MSS; एदं for जेव्वमह B; जेव E; व्वमम A; जेव्वमम P; जेव्व एदस्स N. ७ For भादुणो R. has भाउणो; E °भाउकस्स; B. भादुअस्स. For होदिं E. reads भोदि; K. reads आत्तकेरखेऊव्वसम्हद्धम्मभादुणो घरं होदि देहि मे प्रवेसं; om. M. K. R; °वेशं P; याव N; उपज्जा° A. P; उवज्जा° E. ८ पटं K. E.; B. and Nâgpur MSS. om. this and following word; उव° B. R. E. and Nâgpur MSS; उवदे° M.

शिष्यः—(सक्रोधम्।) धिङ्मूर्ख[1], किं भवानस्मदुपाध्यायादपि धर्मवित्तरः[2]।

चरः—[3]हंहो बह्मण, मा कुप्प। णहि सव्वो सव्वं जाणादि। ता किंवि[4] ते उवज्झाओ जाणादि, किंवि अह्मारिसा जाणन्दि। (क)

शिष्यः[5]—मूर्ख, सर्वज्ञतामुपाध्यायस्य चोरयितुमिच्छसि।

चरः—[6]हंहो बह्मण, जइ तव उवज्झाओ सव्वं जाणादि ताँ जाणादु दाव कस्स चन्दो अँणभिप्पेदो[7] त्ति। (ख)

शिष्यः—[8]मूर्ख, किमनेन ज्ञातेनाज्ञातेन वा।

---

(क) अहो ब्राह्मण, मा कुप्य। नहि सर्वः सर्वं जानाति। तत्किमपि त उपाध्यायो जानाति, किमप्यस्मादृशा जानन्ति।

(ख) अहो ब्राह्मण, यदि तवोपाध्यायः सर्वं जानाति तर्हि जानातु तावत्कस्य चन्द्रोऽनभिप्रेत इति।

---

धर्मस्य राजकार्यस्य भ्राता प्रवर्त्तकः धर्मं पुरवृत्तान्तं निवेदयामीति गूढाभिसंधानवचनम्। याचकस्य सर्वेऽपि धर्मतो भ्रातर एवेति बहिरर्थः।

चोरयितुमपलपितुम्। चन्द्रगुप्तोऽनभिप्रेत इति गूढम्।

---

१ धिक्मू° B. K. E. २ °त्तमः B. E. ३ As before; न for ण A.; B. has क्खु after हि ४. B. and the Nâgpur MSS. have पि for वि; दे for ते M. K. R. E; °वज्जा A; °अज्जा° E; ज्झायो P; °ना° for °णा° A; पि for वि as above °म्मारिआ B; °ह्मसारिसा A; °णन्ति R; °नन्दि A; °णन्ति B. and Nâgpur MSS. ५ B. E. A. add सक्रोधम् after this; M. has °च्छति भवान्. ६ As before; A. om. it; जयि P; दे B; तुह M. R; तुअ K; °वज्जा° A. E; °ज्झायो R; B. E. omit ता. ७ अनभि° E. and Nâgpur MSS; °भिपेद्दो R; °भिपेखिदो M; °भिमदो B. ८ Om. in A. P.; E. has गुरोः after this; ज्ञानेन E. omitting all that follows; ज्ञातेन वाज्ञा° R; the Nâgpur MSS. add गुरोर्भविष्यति after वा; B. substitutes it for अज्ञातेन वा.

**चरः**—[1]तव उवज्झाओ एव्व जाणिस्सदि जं इमिणा जाणिदेण होदि[2] । तुमं दाव एत्तिअं जाणासि कमलाणं चन्दो अणभिप्पेदो त्ति । णं पेक्ख ।

कमलाणं [3]मणहराणं वि रूआहिन्तो विसंवदइ शीलम् ।
संपुण्णमण्डले[4]म्मि वि जाइं चन्दे विरुद्धाइं ॥ १९ ॥ (क)

**चाणक्यः**—( आकर्ण्यात्मगतम् । ) [5]अये, चन्द्रगुप्तादपरक्तान् पुरुषान् जानामीत्युपक्षिप्तमनेन ।

**शिष्यः**—[6]मूर्ख, किमिदमसंवद्धमभिधीयते ।

**चरः**—[7]हंहो बह्मण, सुसंबद्धं ज्जेव्व एदं भवे । ( ख )

---

(क) तवोपाध्याय एव ज्ञास्यति यदेतेन ज्ञातेन भवति । त्वं तावदेतावत् जानासि कमलानां चन्द्रोऽनभिप्रेत इति । ननु पश्य ।

कमलानां मनोहराणामपि रूपाद्विसंवदति शीलम् ।
संपूर्णमण्डलेऽपि यानि चन्द्रे विरुद्धानि ॥

(ख) अहो ब्राह्मण, सुसंबद्धमेवैतद्भवेत् ।

---

कमलानामित्यनेन पद्येन मनोहरगुणस्यापि राक्षसपक्षपातिजनस्य स्वरूपाननुगुणं शीलमसंपूर्णमण्डले चन्द्रगुप्ते विरुद्धमाचरतीति गूढार्थः सूचितः । चन्द्रगुप्तस्य भाविसंपूर्णमण्डलत्वं न सहत इति यावत् ।

---

१ B. and E. have हंहो बम्मणा before this; for तव B. and Nâgpur MSS. have तुअ; M. K. have तुह; E. omits it; °वज्जा° A; ज्जेव B. E; एव A; जेव्व K; ज्जेव्व Nâgpur MSS. २ भोदि B. E; °दिति R; B. adds after this उजूअबुद्धिआ; तुअं K. E. ( वाव for दाव ); B. has इत्ति°; जाणेसि... °लानां E; °भिमदो° B. and Nâgpur MSS; °पेहो R. ३ °णोह° B. R; वि रुअदो P; °आदो for °अहिंतो B; रूप आयितो R; रूवाहितो E; रूआदो अहिंतो M; °वअइ B; वइ A. M; वदेइ E; °सव्वअइ K; °दइव. P; सीलं P. ४ लेवि. R; णंमिवि E; B. and P. om. वि; K. has ई in जाइं and विरुद्धाइं; the Nâgpur MSS. °द्धाई only. ५ °यमेव. R. ६ om. in M. K. R; °द्धमेव म°. B. ७ As before एव्व R. M; जेव्व K. P; ज्जेव Nâgpur MSS.

[1]शिष्यः—यदि किं स्यात् ।

चरः—[2]जेदि सुणिदुं जाणन्तं लहे । (क)

चाण[3]क्यः—भद्र, विश्रब्धं प्रविश । लप्स्यसे श्रोतारं ज्ञातारं च ।

चरः—एसो [4]पविसामि । (प्रविश्योपसृत्य च ।) जेदु अज्जो । (ख)

चाणक्यः—(विलोक्यात्मगतम् ।) [5]कथमयं प्रकृतिचित्तपरिज्ञाने नियुक्तो निपुणकः । (प्रकाशम् ।) भद्र, स्वागतम् । उपवि[6]श ।

चरः—[7]जं अज्जो आणवेदि । (भूमावुपविष्टः ।) (ग)

चाणक्यः—भद्र, [8]वर्णयेदानीं स्वनियोगवृत्तान्तम् । अपि वृषलमनुरक्ताः प्रकृतयः ।

चरः—[9]अह इं । अज्जेण खु तेसु तेसु विराअकारणेसु परिहरि-

---

(क) यदि श्रोतुं जानन्तं लभे ।

(ख) एष प्रविशामि । जयत्वार्यः ।

(ग) यदार्य आज्ञापयति ।

(घ) अथ किम् । आर्येण खलु तेषु तेषु विरागकारणेषु परिह्रियमा-

---

१ M. R. om. this speech; A. om यादि. २ यदि A. E; जइ B.and Nâgpur MSS; °णन्तं B. and Nâgpur MSS; °णदुं M; सुणित्तारं E; जाणअन्तं K; °णिअन्तं R; जाणित्तारं E; °णदं M; °णिदुं A. P; after this B. has अजणं; the Nâgpur MSS. have जणं. ३ B. and Nâgpur MSS. add विलोक्य here; for विश्रब्धम् B. has सुखम्; E. भद्र; M. R. K. omit; P reads विश for प्रविश. ४ B., Nâgpur MSS. and R. read पप; इति प्र० P; परिक्रम्य for प्र० Nâgpur MSS; च om. B. P. E; जयदु E., twice in Nâgpur MSS., जेदु twice in B. ५ B. has कथं प्रभूतत्वात्कार्याणां कस्य परिज्ञाने नियुक्तो निपुणक इति न ज्ञायते । आः ज्ञातम् ॥ अये कथमयं &c. all which including विलोक्यात्मगतम् occurs after उपविश in E. but having आं for आः, अये तत्कथम् for अये कथमयं, and after प्रकाशम्, भद्र निपुणक स्वागतम्; R. has °ज्ञान for °ज्ञाने. ६ ° श्यताम् for °श E. K. B. and Nâgpur MSS. ७ जदेवो. M; जं देवो R. B. and Nâgpur MSS; M. and R. add °ति after आणवेदि; P. has °दीति; °शति for °ष्टः B. and Nâgpur MSS. ८ B. has उपव.° ९ E. and the Nâgpur° MSS. have अज्ज before this; B. E. and Nâgpur MSS. have अध for अह; B. and Nâgpur MSS. have क्खु; M. has दे°; P. has तेत्सुते वि.°; A. and P. read रागका°.

अन्तेसु[1] सुगहीदनामहेए देवे चन्दउत्ते दिढं अणुरत्ताओ पकि-दिओ। किंदु[2] उण अत्थि एत्थ णअरे अमच्चरक्खसेण सह पढमं समुप्पण्णसिणेहबहुमाणा[3] तिण्णि पुरिसा देवस्स चन्दसिरिणो सिरिं ण[4] सहन्दि। (घ)

**चाणक्यः**—(सक्रोधम्[5]।) ननु वक्तव्यं स्वजीवितं न सहन्त इति[6]। भद्र, अपि ज्ञायन्ते नामधेयतः।

**चरः**—कहं[7] अजाणिअणामहेया अज्जस्स णिवेदिअन्ति। (क)

**चाणक्यः**—तेन हि श्रोतुमिच्छामि।

---

णेषु सुगृहीतनामधेये देवे चन्द्रगुप्ते दृढमनुरक्ताः प्रकृतयः। किंतु पुनर-स्त्यत्र नगरे अमात्यराक्षसेन सह प्रथमं समुत्पन्नस्नेहबहुमानास्त्रयः पुरुषाः देवस्य चन्द्रश्रियः श्रियं न सहन्ते।

(क) कथमज्ञातनामधेया आर्यस्य निवेद्यन्ते।

---

न सहन्ते इति यत्तदस्तीति वाक्यार्थः कर्ता।

---

१ °अत्ते° for °अन्ते° E; °ते B.; A. E. and M. have गि for ग; K. has गी. The Nâgpur MSS. have हि for ही, and K. has त for द; णा for ना M; धे for हे B Nâgpur MSS. and E; अ for ए. P; अं E; यं Nâgpur MSS.; E. and Nâgpur om. देवे; B. has देए; K. and R. देव्वे; °उत्तं E. and Nâgpur; दिडं R; पइ° B; पगि° E. २ E. and B. om. दु; सन्दि A. P; सन्ति B; अन्धि R. K; अस्यां E. before अत्थि; अन्ध for एत्थ R; अत्थ M; पुड° R. M. K; पड° B. ३ M. R. °प°; °स्सा M K. R. Nâgpur MSS. after which जे A. P. B; देअस्स B; देव्व° R. M; देवस्य A. ४ न E. I; °न्ति B. and A. ५ E. adds आत्मगतम्; एवं after ननु E. ६ E. adds before this प्रकाशम्; E. has °त्ते for °न्ते. ७ अज्ज Nâgpur and E. before this; °धं for °हं E. B; असुणिद B; असुणिअ E; अजाणिअं A. P; °धेया B.; °धेआ E; ध्येआ Nâgpur MSS; °हेआ K.; या° om. R; अस्स for अज्जस्स A; °दीअन्ति B; °यन्दि P; अन्दि M. K; °दयदि R.

चरः—सुणादु[1] अज्जो । पढमं दाव अज्जस्स रिपुपक्खे बद्ध-पक्खवादो[2] खवणओ जीवसिद्धी । (क)

चाणक्यः—(सहर्षमात्मगतम् ।) अस्मद्रिपुपक्षे[3] बद्धपक्षपातः क्षपणकः ।

चरः—जीवसिद्धी[4] णाम सो जेण सा अमच्चरक्खसप्पउत्ता विसकण्णा[5] देवे पव्वदीसरे समावेसिदा । (ख)

चाणक्यः—(स्वगतम्[6] ।) जीवसिद्धिरेष तावदस्मत्प्रणिधिः । (प्रकाशम् ।) भद्र, अथापरः कः ।

---

(क) शृणोत्वार्यः । प्रथमं तावदार्यस्य रिपुपक्षे बद्धपक्षपातः क्षपणको जीवसिद्धिः ।

(ख) जीवसिद्धिर्नाम स येन सा अमात्यराक्षसप्रयुक्ता विषकन्या देवे पर्वतेश्वरे समावेशिता ।

---

चरवाक्ये—आर्यस्य रिपुपक्ष इति तव शत्रुष्वित्यर्थः । क्षपणको जैनाकृतिः ।

सहर्षमात्मगतमिति । अयमभिसंधिः । अस्मत्सहाध्यायि मित्र-मिन्दुशर्मा नाम ब्राह्मणः । तेनेदानीं महत्प्रयोजनमनुष्ठेयं भविष्यतीति पूर्वोक्तः क्षपणको रिपुपक्षपातित्वेन दृढां प्रसिद्धिं गतः ।

---

१ °तु A; °ड Nâgpur MSS.; पुडमो R; पुडमं M; पुढमं K; पडमं B; ताव E; धाव K; अज्जस्स Om. in B. K. R; रिवु M. K; °वक्खे K. B. M. २ व for प K. M; क्खवण° B. Nâgpur MSS.; R. reads °ज्झी for °द्धी; E. omits जी and adds नामा after द्धी; Nâgpur MSS. and B. omit जी...द्धी. ३ स्मद्वन्धुप° E. ४ °द्धि P. N; द्धिर्णा° K. E; °ज्झी R; °सेणपउत्ता B; °सप° K. N; पवु M. ५ कण्णआ B; ण्या A; देव्वे for देवे M. R; °देस्स° B; दिस° P. In Ch.'s speech after क्षपणकः B.has प्रकाशम् किंनामधेयो हि सः; then the Chara's speech up to णाम, then Ch.'s अस्मद्रिपुपक्षे बद्धपक्षपातः क्षपणक इति कथमवगतं भवता; then the Chara's beginning with जेण omitting सो. With this E. and N. agree except that E. has ततः. for किं नाम°—सः and N. has किं नामधेयः सः, and except that both omit Ch.'s speech अस्मद्रिपु &c. N. also has the सो after णाम in the Chara's speech. R has प्रकाशम् । ततः after क्षपणकः. ६ आत्मग° K. E; भद्र. om. in M.

**चरः**—अज्ज, अवरो वि [१]अमच्चरक्खसस्स पिअवअस्सो का[२]अ-त्थो सअडदासो णाम । (क)

**चाणक्यः**—(विहस्यात्मगतम् ।) कायस्थ इति लघ्वी मात्रा । तथापि न युक्तं [३]प्राकृतमपि रिपुमवज्ञातुम् । तस्मिन्मया सुहृच्छ-[४]न्ना सिद्धार्थको विनिक्षिप्तः । (प्रकाशम् ।) भद्र, तृतीयं श्रोतुमि-च्छामि ।

**चरः**[५]—तिदीओ वि अमच्चरक्खसस्स दुदीअं हिअअं पुप्फउर-[६]णिवासी मणिआरसेट्ठी चन्दणदासो णाम । जस्स गेहे कलत्तं [७]णासीकदुअ अमच्चरक्खसो णअरादो अवक्कन्तो । (ख)

---

(क) आर्य, अपरोऽपि अमात्यराक्षसस्य प्रियवयस्यः कायस्थः शकट-दासो नाम ।

(ख) तृतीयोऽपि अमात्यराक्षसस्य द्वितीयमिव (?) हृदयं पुष्पपुरनिवासी मणिकारश्रेष्ठी चन्दनदासो नाम । यस्य गेहे कलत्रं न्यासीकृत्य अमात्यराक्षसो नगरादपक्रान्तः ।

---

अतस्तन्मुखेनास्माकं इष्टसिद्धिर्भविष्यतीति हर्षकारणम् । जीवसिद्धौ निवेदिते तमजानन्तमिव तूष्णींभूतं चाणक्यं जगति तत्तत्कर्मकथनेन ज्ञापयति जीवसिद्धिर्नाम स इति ।

अस्मदिति । अस्माकं प्रणिधिर्गूढचरः । राक्षसमित्रीभूतः सन्निमं जनापवादं निर्वहणे मलयकेतुं प्रत्यापयिष्यतीति भावः ।

कायस्थो लेखकः ।

लघ्वी मात्रा फल्गुस्तस्मादस्माकं नात्याहितं तथापि नोपेक्षणीयः ।

---

१ Om. in E; क्खु for वि in B. E. २ काय° P; काअद्वो K. ३ E. has प्राकृतमपि पुरुषम°; N. has प्राकृतपुरुषमपि रिपुम°. ४ °ज्ञा E.; M. R. B. om. वि in विनि°; प्रकाशम् om. in E; °यमपि for °यं E. ५ B. and N. add here विहस्य; तइओ B; तदि° E; तदी° K; तिदि° R; वि om. in K; दुदि° K. E. N; विअं before मिअ° in B. E. N; वि in E; हिययं E. and probably P; °प्पपु° M. K; °प्फपु° R. P; °प्पपु° E. ६ णि om. in B. and M; नि for णि. E; सेठी P; °ट्ठी° K; °नदासो P; नामा E; नाम P; जस K; यस्स E. ७ ना° E. which has अम—सो before this; णअराओ N; नअरादो E; अप° R. M.

**चाणक्यः**—([1]आत्मगतम् ।) नूनं सुहृत्तमः । न ह्यनात्मसदृशेषु राक्षसः कलत्रं न्यासीकरिष्यति । (प्रकाशम् ।) भद्र, [2]चन्दनदासस्य गृहे राक्षसेन[3] कलत्रं न्यासीकृतमिति कथमवगम्यते ।

**चरः**—अज्ज ईअं अङ्गुलीअमुद्दा अज्जं अवगदत्थं करिस्सदि । (इत्यर्पयति ।) (क)

**चाणक्यः**—([5]मुद्रामवलोक्य गृहीत्वा राक्षसस्य नाम वाचयति । सह[6]र्षं स्वगतम् ।) ननु वक्तव्यं राक्षस एवास्मदङ्गुलिप्रणयी संवृत्त इति । (प्रकाशम् ।) भद्र, अङ्गुलि[7]मुद्राधिगमं विस्तरेण श्रोतुमिच्छामि ।

**चरः**—[8]सुणादु अज्जो । अत्थि दाव अहं अज्जेण पौरजणचरि[9]दअण्णेसणे णिउत्तो परघरप्पवेसे परस्स अणासंकणिज्जेण

---

(क) आर्य, इयमङ्गुलिमुद्रा आर्यमवगतार्थं करिष्यति ।

(ख) शृणोत्वार्यः । अस्ति तावदहमार्येण पौरजनचरितान्वेषणे नियुक्तः परगृहप्रवेशे परस्यानाशङ्कनीयेन अनेन यमपटेन आहिण्डमानो मणिकारश्रेष्ठिचन्द-

---

अङ्गुलिप्रणयी इति । प्रणयी हस्तगत इत्यर्थः ।

---

१ Om. in A P; स्वग° E; नात्मनः स° E; सदृशे P. A.; E. adds पुरुषेषु after °शेषु. २ om. in M; चन्दनदासे for च...हे E.and N. ३ M.omitsराक्षसेन; B. E. N. add भवता at end. ४ इयं E.; °लीमु° R; °लीअअ° P; °लिमुद्दा जेव्व अज्जं अवग (?) मइस्सदि E; °मुद्दासव्वंपिअवगमइस्सदित्ति N. Both have after this मुद्दां समर्पयति; B. has मुद्दा अज्जं अवगमइस्सादि. इति मुद्रामर्पयति (B.also gives the reading in the text). ५ Om. in E.; B. has वाच° ना° रा°;. E. has अक्षराणि वाच° राक्षसस्य. ६. °र्षमात्मग° R. E. M.; वक्तव्यं om. in B. After एव N. has अयम्. ७ °ली° M. and P; धि om. in R; प्रकाशेन for विस्तरेण B. ८ सुणोदु K; सुणाउ N; अद्धि for अत्थि K; अज्ज after it N; पउर B. N; पुर R. M. ९ °रितदंसणे° B; °रिअणदंसणणे E; निउ° E; निवु° P.; B. adds तदो after णिउत्तो; पत्ते° K; संकिणिज्जे° K; संकणीये B. E; संकणीए N.

इमिणा[1] जमपडेण हिण्डन्तो मणिआरसेट्ठिचन्दणदासस्स गेहं पविट्ठोह्मि । तहिं[2] जमपडं पसारिअ पउत्तोह्मि गीदाइं गाइदुम् । (ख)

चाणक्यः—ततः किम्[3] ।

चरः—तदो[4] एक्कादो अववरकादो पञ्चवरिसदेसीओ पिअदंसणीअसरीराकिदी[5] कुमारओ बालत्तणसुलहकोदूहलोप्फुल्लणअणो णिक्कमिदुं[6] पउत्तो । तदो हा णिग्गदो हा णिग्गदो त्ति संकापरिग्गहणिवेदइत्तिओ[7] तस्स एव्व अववरकस्स अब्भन्तरे इत्थिआजणस्स उट्ठिदो[8] महन्तो कलअलो । तदो ईसि दार-

---

नदासस्य गृहं प्रविष्टोऽस्मि । तत्र यमपटं प्रसार्य प्रवृत्तोऽस्मि गीतानि गातुम् ।

(क) ततश्च एकस्मादपवरकात्पञ्चवर्षदेशीयः प्रियदर्शनीयशरीराकृतिः कुमारको बालत्वसुलभकौतूहलोत्फुल्लनयनो निष्क्रमितुं प्रवृत्तः । ततो हा निर्गतो हा निर्गत इति शङ्कापरिग्रहनिवेदयिता तस्यैवापवरकस्याभ्यन्तरे स्त्री-

---

१ इमिना E; जमवडे° E; °पटेन K; °डेणाहिं° B; अज्जमणि° E. N; सेट्ठिणो B. For गेहं B has घरं; उपविसेह्मि N. २ तहिवठ्ठो E; पडअं B; वडं E; पटं K; पवुत्तो after गाइ° in E; गीआनि A. P; गीआइं R; गदिाइँ N; R. and M. गादुं. ३ B. has ततस्ततः; E. has ततः. ४ तदो अ A. K. P; एआ° N; एक्क° K; एक P; om. E; अवर° K; आवरका° B; आववर° R; om. in P; °वरस° P; °रीस N; प्पिअ B; अतिदंस° E; ५ °गिदी E; °कीदी N; सुकु° E. P. N; and °को for ओ K.; वालजण B. E. N; °लत्तं A. P; °लतण° K; °कोदूहलोफुरिज्जमाणणअणओ N; कोदूहलुफुल्लणअणो R; कोदुहलुफुल्लमाणनअनको° E; °णयणो P. ६ णिप्क° E; before this E. has बालको and N. has बालओ; पवित्तो° P; हाणि कमिदोइत्ति N; पडि° for परि° P. ७ For णिवेदइत्तिओ B. has °ब्भरगरुओ° and N. णीहुअगरुओ. R. has णिवेदइत्तओ. E. omits all this to तदो; जेव्व B; जेव्व N; एव A. M. In the word following K. and P. have अवर°; B. आवरः; R. आववर; अन्ते N; अभ्य° P. The word following om. in B.; K. om. the आ in it and R. reads ए for that आ. ८ उत्थिदो R. E. N. The following word is omitted in P. A. M.; for तो in it N. has °दो; कलकलो P. K. R; कोलाहलो. N. after which E. has जणस्स and सत्तासं; after तदो B. K. M. read इसि; B. reads the next word as दुआर; R. and M. दुवार and A. द्वार.

दे[1]शदाविदम्रुहीए एक्काए इत्थिआए सो कुमारओ णिक्कमन्तो एव्व णि[2]ब्भच्छिअ अवलम्बिदो कोमलाए बाहुलदाए। तस्साए कुमारसं- रोध[3]संभमप्पचलिदङ्गुलिदो करादो पुरिसअङ्गुलिपरिणाहप्पमाणव- डिआ वि[4]अलिआ इअं अङ्गुलिमुद्दिआ देहलीबन्धम्मि पडिआ उ- ट्ठिदा ता[5]ए अणवबुद्धा एव्व मम चलणपासं समागच्छिअ पणामणिहुआ[6] कुलवहु विअ णिच्चला संवुत्ता। मए वि अमच्च-

जनस्योत्थितो महान्कलकलः। तत ईषद्द्वारदेशदापितमुख्या एकया स्त्रिया स कुमारको निष्क्रामन्नेव निर्भर्त्स्यावलम्बितः कोमलया बाहुलतया। तस्याः कुमा- रसंरोधसंभ्रमप्रचलिताङ्गुलेः करात्पुरुषाङ्गुलिपरिणाहप्रमाणघटिता विगलितेय- मङ्गुलिमुद्रिका देहलीबन्धे पतिता उत्थिता तया अनवबुद्धैव मम चरणपार्श्वं समागत्य प्रणामनिभृता कुलवधूरिव निश्चला संवृत्ता। मयापि अमात्यराक्षसस्य

१. देस E. P. N; देसे. K; °पिद R; °विड A; °विअ N. The ए in मुहीए om. in P. and E; एकाए E; °क्कए K. N.; for इ in next word E. and N. have ए; °रको E.; E. reads next word with निष्क°; ज़े° B; जेव N; °प्पेद्व E. (?) २ णिभ° A. M; °भत्थि A; °ब्भत्थि P; °च्छिए R; णिअच्छिअ N; °म्बिओ E; which adds करेण after that; E. N. have तिस्साए; K. तिसाए; A. तसाए; B. तस्साअ; R. ताए; M. om.; °ह B.N. R. ३ संभवं for संभम N; °प्प° om. in N; चलिअअ° N; चरदुङ P; °लिकादो E; °लीदो A. K. P; °रिसंगु B. E. N; °गुली A. K. P; परिमा for प्पमा° E; °घाटिआ K; घाटिया E. ४ वि...आ om. in A; नियालिया P. E; दा for आ B. and K.; E. reads इयं; B. अङ्गुली, P. has मुद्दिया; for बन्धम्मि B. has बद्धम्मि; N. बन्धे; E. reads देहलीए वट्टे; णिप° B; निवडिअविउत्थिआ E; निवंदिआ उत्थिआ N. This last word om. in B.; and K. has आ for दा in text. अ after that in A. K. P. ५ ए- ताए R.; om. in N.; B. and N. add after this इत्थिआए. E. adds सा instead; °द्धन्तजेव B; °द्धजेव्व E; °द्धजेव्व N. The word following is मह, not मम in M. and R; E. om. सं; N. reads °णभाअं; A. and P. have गत्थिअ; K. has गाच्छिआ. ६ °भुआ P; °भुदा. R; °हुडिआ. N; णववहुव्व. B. N; इव for विअ E.; E. after संवुत्ता adds देहलीपट्टे निपत्योत्थिता; संउत्ता K. and R.

रक्खसस्स[1] णामंकिदेत्ति अज्जस्स पादमूलं पाविदा । ता एसो इमाए[2] आअमो । (क)

**चाणक्यः**—भद्र, श्रुतम् । अपसर । नचिरादस्य[3] परिश्रमस्यानुरूपं फलमधिगमिष्यसि[4] ।

**चरः**—जं अज्जो आणवेदित्ति[5] । (निष्क्रान्तः ।) (ख)

**चाणक्यः**—शार्ङ्गरव शार्ङ्गरव[6] ।

(प्रविश्य[7] ।)

**शिष्यः**—आज्ञापय ।

**चाणक्यः**—वत्स, मसीभाजनं[8] पत्रं चोपानय ।

---

नामाङ्कितेति आर्यस्य पादमूलं प्रापिता । तस्मादेषोऽस्या आगमः ।

(ख) यदार्य आज्ञापयति ।

---

इत्थं नानार्थरससंभवा बीजसमुत्पत्तिर्निरूपिता । अतोऽयं मुखसंधिः साङ्गो व्याख्यातः । अतः परं प्रतिमुखसंधिः—'लक्ष्यालक्ष्यस्य बीजस्य व्यक्तिः प्रतिमुखं मतम्' इति लक्षणात् । पूर्वं लक्ष्यस्य व्यक्तस्य मध्ये यमपटचरवृत्तान्तेनालक्षितचाणक्यनीतियोगबीजस्य पुनरत्र व्यक्तेरुद्भेदात् । यत्नबिन्दुसंबन्धस्य च सत्त्वात् । बिन्दुयत्नौ चाग्रे वक्ष्येते—'बिन्दुप्रयत्नानुगमादङ्गान्यस्य त्रयोदश' । बिन्दुप्रयत्नानुगुण्येनास्य संधेस्त्रयोदशाङ्गानि प्रयोक्तव्यानि । 'विलासः परिसर्पश्च विधूतं शमनर्मणी । नर्मद्युतिः प्रशमनं विरोधः पर्युपासनम् । वज्रं पुष्पं परिन्यासो वर्णसंहार इत्यपि' ॥

---

१ लक्ख° N; °मंकियंति E; किदेति B. N; किदेदि P. The next word A. and M. read as अज्जस; पादिदा P. २ B. adds मुद्दाए; E. has मुद्दिआए; N. om. ता just before and has मुद्दा before आगमो; B. E. N. read आगमो; B. N. and E. add त्ति after that word. ३ अ for न E. N. ४ °ष्यति E. N. ५ °दीति P; दिद्दति N. ६ Om. in R. E. ७ शिष्यः प्रविश्य R.; B. and E. add उपाध्याय after this; °यतु K. ८ मषी A. P. E; प for पा K.

(शिष्यस्तथा करोति[1] ।)

**चाणक्यः**—([2]पत्रं गृहीत्वा स्वगतम् ।) किमत्र लिखामि । अनेन खलु[3] लेखेन राक्षसो जेतव्यः ।

(प्रविश्य ।)

**प्रतीहारी**—जेदु[4] अज्जो । (क)

**चाणक्यः**—(सहर्षमात्मगतम् ।) गृहीतो[5] जयशब्दः । (प्रकाशम् ।) शोणोत्तरे, किमागमनप्रयोजनम्[6] ।

**प्रतीहारी**—अज्ज, देवो चन्दसिरि[7] सीसे कमलमुउलाआरमञ्जलिं णिवेसिअ अज्जं विण्णवेदि । इच्छामि अज्जेण अब्भ[8]त्थणादो देवस्स पव्वदी[9]सरस्स पारलोइअं कारेदुम् । तेण अ धारिदपुव्वाइं आहरणाइं[10] बह्मणाणं पडिवादिमित्ति । (ख)

---

(क) जयत्वार्यः ।

(ख) आर्य देवश्चन्द्रश्रीः शीर्षे कमलमुकुलाकारमञ्जलिं निवेश्य आर्यं

---

किमत्रेति । अयं चाणक्यस्य पुनरुद्योगो बिन्दुः । 'अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम्' इति लक्षणात् । अवान्तरार्थेन यमपटचरवृत्तान्तेन विच्छिन्नस्यान्तरितस्य बीजस्य पुनः प्रवर्तनात् । तदुक्तं दशरूपके—अवान्तरितस्य बीजस्य संज्ञान्तरमाह—अवान्तरार्थेति । बिन्दुवद्बिन्दुः । जले तैलबिन्दुवत्प्रसृतत्वात् ।

गृहीत इति । अयं कार्यसिद्धिविषयमनोरथो विलासः प्रथममङ्गम्* ।

---

१ B. E. D. have here यदाज्ञापयत्युपाध्यायः । इति निष्क्रम्य पुनः प्रविश्य । उपाध्याय इदं मसीभाजनं पत्रं च; E. having निष्क्रान्तः for निष्क्रम्य, मषी for मसी and पत्रकं च for पत्रं च. २ Om. in B. and किमत्राभिलि° B. E. ३ Om. in M. ४ जयदुजयदु E; जयदु N; जेदुजेदु B. ५ B. E. N. add अयं here. ६ कारणम् for प्रयोजनम् N. ७ °सिरीकः E; मुकुला° E; Simply अंजलिं M. K. R; कम...सी...णि...दे...च° B. E; °च्छम्मि R.; B. E. add अहम् after this. ८ ब्भ om. in. E. N; देअस्स B; देव्वस्स R. ९ °व्वदे° B. E. R; A. has स्सर for सर; इयं for इअं E.;B.N. have कादुं for the next word. K. कदुं; M.R. कारिदुं; M. R. om. अ; °रिअ for रिद N. and पूर्वा° for पुव्वा° P. १० भ for ह B; भूसणाइं E.; B. adds गुणवन्ताणं after this; E. has भयय (?) वन्ताण; N. मअवन्ताणं बम्म°; E. in the next word °देमीति; P. दयामित्ति.

---

* One copy of the commentary adds, "प्रतीहारीलक्षणं तु । संधिविग्रहसंनद्धनानाचारसमुत्थितम् । निवेदयन्ति याः कार्यं प्रतीहार्यस्तु ता मताः ॥."

**चाणक्यः**—(सहर्षमात्मगतम्) साधु वृषल[1], ममैव हृदयेन सह संमन्त्र्य[2] संदिष्टवानसि (प्रकाशम्) शोणोत्तरे, उच्यतामस्मद्वचनाद्वृषलः । साधु वत्स, [3]अभिज्ञः खल्वसि लोकव्यवहाराणाम् । तदनुष्ठीयतामात्मनोऽभिप्रायः । किंतु पर्वतेश्वरेण[4] धृतपूर्वाणि गुणवन्ति भूषणानि गुणवद्भ्य एव [5]प्रतिपादनीयानि । तदहं स्वयमेव परीक्षितगुणान्ब्राह्मणान्प्रेषयामि[6] ।

**प्रतीहारी**—जं अज्जो आणवेदित्ति[7] । (निष्क्रान्ता ।) (क)

**चाणक्यः**—शार्ङ्गरव[8], उच्यन्तामस्मद्वचनाद्विश्वावसुप्रभृतयस्त्रयो भ्रातरः [9]वृषलात्प्रतिगृह्याभरणानि भवद्भिरहं द्रष्टव्य इति ।

**शिष्यः**—[10]तथेति । (निष्क्रान्तः ।)

[11]**चाणक्यः**—उत्तरोऽयं लेखार्थः पूर्वः कथमस्तु । (विचिन्त्य)

---

विज्ञापयति । इच्छाम्यार्येणाभ्यनुज्ञातो देवस्य पर्वतेश्वरस्य पारलौकिकं कर्तुम् । तेन च धारितपूर्वाणि आभरणानि ब्राह्मणानां प्रतिपादयामीति ।

(क) यदार्य आज्ञापयति ।

---

साधुवृषल इति । मन्मनोनुगतमेव त्वया चिकीर्षितमित्यर्थः ।

वृषलादिति । अलंकारत्रयस्य पृथक्पृथक्प्रतिग्रहाय त्रयो भ्रातर इत्युक्तम् ।

---

१. साधु after this in B. E. २ Om. in N; प्रकाशम् om. in A. P. M; K. and R. omit अस्मद्वचनात्. ३ B. has साधु before this. ४ °श्वरद्ध° B.E; °रस्य A. P. N; भूषणानि गुणवन्ति B. E. ५ B. N. add ब्राह्मणेभ्यः before this; °देषोहं B; °देष E; एव om. in B. E. ६ °मीति R. ७ दीति P; °ष्क्रान्तः P; ८ शार्ङ्गरव occurs twice in A. B. E. N; E. has शारङ्गनव। प्रविश्योपाध्याय आज्ञापय॰ चाण°. उच्यन्ताम् &c.; उच्यता° B. P. K. N; प्रभृतयो भ्रा° P. ९ यथा before वृष° in B; इति om. K. १० यदाज्ञापयत्युपाध्याय इति B. E. N. ११ B. has स्वगतम् here; पूर्वं A; °र्वस्तु P; °र्वकस्तु N. For कथमस्तु which follows, M. and K. have कथम् simply. B. has कतमोस्तु and N. कोस्तु.

आः[1], ज्ञातम् । उपलब्धवानस्मि प्रणिधिभ्यो यथा तस्य म्लेच्छराजलोकस्य[2] मध्यात्प्रधानतमाः पञ्च राजानः परया सुहृत्तया राक्षसमनुवर्तन्ते[3] । ते यथा—

कौलूतश्चित्रवर्मा मलयनरपतिः सिंहनादो नृसिंहः
काश्मीरः पुष्कराक्षः क्षतरिपुमहिमा[4] सैन्धवः सिन्धुषेणः ।
मेघाख्यः[5] पञ्चमोऽस्मिन्पृथुतुरगबलः पारसीकाधिराजो
नामान्येषां लिखामि ध्रुवमहमधुना चित्रगुप्तः[6] प्रमार्ष्टु ॥२०॥

(विचिन्त्य[7]) अथवा न लिखामि । पूर्वमनभिव्यक्तमेवास्ताम् । (नाट्येन लिखित्वा[8]) शार्ङ्गरव ।

(प्रविश्य[9])

**शिष्यः**—उपाध्याय, आज्ञापय ।

**चाणक्यः**—वत्स, श्रोत्रियाक्षराणि[10] प्रयत्नलिखितान्यपि नियत-

---

अलंकारत्रयं च सत्यवता यदनुप्रेषितं तदुपगतमिति निर्वहणे वाचयिष्यमाण इत्यर्थः । इदं दृष्टनष्टबीजानुसरणं परिसर्पः पूर्वसंधौ दृष्टस्य मध्ये नष्टस्य बीजस्यानुसंधानात् ।

नामान्येषामिति । अस्मिन्पत्रे मदीयेन लेखनेनैते मरिष्यन्ति । अतश्चित्रगुप्तः स्वगणिताकरपत्रे जीवितत्वेन लिखितानामेषां नामानि प्रमार्क्ष्यतीति भावः ॥ २० ॥

अथवेति । नामानि लिखितानि चेच्छकटदासोऽस्माभिश्छलेन लेखयिष्यमाणं पत्रं न लिखिष्यतीत्याशयः । इदमनिष्टवस्तुनिक्षेपरूपं विधूतम् । अनिष्टवस्तुनि नामलेखने क्षेपान्निषेधात् । 'विक्षेपः' इति पाठे स एवार्थः ।

---

१ आ E. N., B. reads the next word as ज्ञातः; P. omits it but has °मुप &c. after that; धिभ्यां E. २ B. E. N. read बलस्य for लोकस्य; भक्त्या for सु° B. For परया preceding this K. has परम. ३ E. adds इति here; A. and P. om. ते; B. and E. have तद्यथा. ४ प्रतिरि° K.; धिन्धुसेनः N; धिन्धुशोणः K. ५ मेघाक्षः B. R. E; °रशी° A. N. M. ६ R. has चन्द्र here above the line. ७ Om. in A. M. P; सर्वं° for पूर्वं° B. E. N. Before आस्ताम् B. E. insert तावत्. ८ B. has प्रकाशम् for ना-त्वा; N. K. and E. om.; B. A. P. repeat शार्ङ्ग; E. has शारङ्गरव. ९ Om. in M. १० °यलिखिताण्य (*sic.*) क्ष° E; °यजनलिखितान्यक्ष° N; °त्वेन B; °तज्ञो N. (omitting लिखितान्यपि). M. omits अपि नियतम्.

मस्फुटानि भवन्ति । तदुच्यतामस्मद्वचनात्सिद्धार्थकः । एभि[1]रक्षरैः केनापि के[2]स्यापि स्वयं वाच्यमिति अदत्तवाह्यनामानं लेखं शकटदासेन लेखयित्वा मामुपतिष्ठस्व । न चाख्येयमस्मै चाणक्यो लेख[3]यतीति ।

शिष्यः—त[4]थेति । ( निष्क्रान्तः )

चा[5]णक्यः ( स्वगतम् ।) हन्त, जितो मलयकेतुः ।

( प्रविश्य । लेखह[6]स्तः )

सिद्धार्थकः—जेदु अज्जो । अज्ज, अअं सो सअडदासेण लिहिदो लेहो । ( क )

चाणक्यः—( गृहीत्वा[7] ) अहो दर्शनीयान्यक्षराणि । ( अनुवाच्य ) भद्र, अनया मुद्रया मुद्रयैनम् ।

सिद्धार्थकः—( तथा कृत्वा[8] ।) अज्ज अअं मुद्दिदो लहो । किं अवरं अणुचिट्ठीअ[9]दु । ( ख )

---

( क ) जयत्वार्यः । आर्य, अयं स शकटदासेन लिखितो लेखः ।

( ख ) आर्य, अयं मुद्रितो लेखः । किमपरमनुष्ठीयताम् ।

---

अदत्तानि वाह्यानां कौलूतराक्षसादीनां नामानि यस्मिन् ।

---

१ कर्णे कथयित्वा before this B; °थयति E. २ किमपि before this in B.; after it in N. and E. (which also has शकटदासेन before केनापि); इ° for मि° E.; after this E. has तं च अदत्तबाह्यनात्सिद्धार्थकमाने लेख°. ३ चाणक्येन लेखनीयमिति M. ४ यदाज्ञापयत्युपाध्याय इति B. N.; E. substitutes visarga for इति. ५ P. omits all this recommencing with Chânạkya's next speech. ६ Om. E; जअदुजअदु B; जअदु R; अज्ज om. in A; सो om. in M. N; °सेन A.; B. adds after this सहत्थ and R. has ले° for लि° in the next word; E. reads the whole passage thus, अव्ययं सो सर्पइ सअडदासेण अभिलिहिदो लेहो. ७ A. om. this; B. adds निरीक्ष्य; E. अवलोक्य; अहो दर्शनीयता अक्षराणाम् B; इत्यनु° B; अनुभाव्य E.; M. and R. om. the भद्र following. ८ करोति M.; B; N. and E. have जं अज्जो आणवेदित्ति before तथा; B. has सो after अअं; B. reads ता आणवेदु अज्जो before किं; E. agrees but omitting ता; N. also having उ for दु. ९ P. has °यदु; B. adds after this °त्ति; E. °त्ती.

चाणक्यः—भद्र[1], कस्मिंश्चिदाप्तजनानुष्ठेये कर्मणि त्वां व्यापारयितुमिच्छामि ।

सिद्धार्थकः—(सहर्षम् ।) अज्ज[2], अणुग्गिहिदोह्मि । आणवेदु अज्जो किं[3] इमिणा दासजणेण अज्जस्स अणुचिट्ठिदव्वम् । (क)

चाणक्यः—[4]प्रथमं तावद्वध्यस्थानं गत्वा घातकाः सरोषदक्षिणाक्षिसंकोचसंज्ञां ग्राहितव्याः । ततस्तेषु गृहीतसंकेतेषु[5] भयापदेशादितस्ततः प्रद्रुतेषु शकटदासो[6] वध्यस्थानादपनीय राक्षसं प्रापयितव्यः। तस्माच्च[7] सुहृत्प्राणपरिरक्षणपरितुष्टात्पारितोषिकं ग्राह्यम् । राक्षस एव कंचित्[8]कालं सेवितव्यः । ततः प्रत्यासन्नेषु परेषु प्रयोजनमिदमनुष्ठेयम् । (कर्णे एवमिव ।)

---

(क) आर्य, अनुगृहीतोऽस्मि । आज्ञापयत्वार्यः किमनेन दासजनेनार्यस्यानुष्ठातव्यम् ।

---

कस्मिंश्चिदिति । अयमिष्टजनानुनयः पर्युपासनम् ।

प्रथममिति । अयं भावः—शकटदासश्शूलारोपणसमये मया सरोषदक्षिणाक्षिसंकोचसंज्ञायां क्रियमाणायां तं विहाय भवद्भिः पलायितव्यमिति संकेतयितव्या इत्यर्थः ।

---

१ E. has त्वां after this; E. inserts अपि before आप्त°; B. has आत्मनानुष्ठे°; P. R. and E. read °य for ये; E. om. त्वां and has नियोजयितुम् for व्यापार°. २ om. K. E.; in next word नु for णु A; ग्ग for ग्गि B; गि G. E; ही for हि P. N.; B. adds ता before आण°; P. has देवु for वेदु; N. has वेऊ; G. om. अज्जो. ३ जं G. E. N; °णेन B. G. P; G. om. following word in which P. has स for स्स. ४ B. has भद्र here; घातु° M. In next word षं for ष B. E. K; °षादक्षि° M; चं for च A. ५ संज्ञेषु B. G. E. N. ६ After अपवाह्य (for अपनीय) E.; राक्ष° om. in G. ७ °स्मात् A. P. G.; E. and B. om. परि in the next word. परिगृह्य P. ८ किं for कं M. For कालं° which follows G. reads कालान्तरं सेवयितव्यः; E. ditto (with °रे for °रम्.) B. and E. insert त्वया before प्रयो° and P. om. इदम् after this; G. and E. एवमेव; B. and R. एवमेवम्.

सिद्धार्थकः—जं अज्जो[1] आणवेदि । (क)

चाणक्यः[2]—शार्ङ्गरव शार्ङ्गरव ।

(प्रविश्य)

शिष्यः—उपाध्याय, आज्ञापय[3] ।

चाणक्यः—उच्यतामस्मद्वचनात्[4]कालपाशिको दण्डपाशिकश्च । यथा[5] वृषलः समाज्ञापयति य एष क्षपणको जीवसिद्धिर्नाम राक्षसप्रयुक्तो[6] विषकन्यया पर्वतकं घातितवान्स एनमेव दोषं प्रख्याप्य सनिकारं नगरान्निर्वास्यतामिति[7] ।

शिष्यः—तथेति[8] । (परिक्रामति ।)

चाणक्यः—वत्स[9], तिष्ठ तिष्ठ । योऽयमपरः कायस्थः शकटदासो नाम राक्षसप्रयुक्तो नित्यमस्मच्छरीरमभिद्रोग्धुमिहं[10] प्रयतते स चाप्येनं दोषं प्रख्याप्य[11] शूलमारोप्यताम् । गृहजनश्चास्य बन्धनागारं प्रवेश्यतामिति[12] ।

शिष्यः—तथेति[13] । (निष्क्रान्तः ।)

---

(क) यदार्य आज्ञापयति ।

---

गृहजनस्य बन्धनागारप्रवेशनफलमुत्तरत्र चतुर्थेऽङ्के तव च पुत्रदारैः सह समागम इति वक्ष्यमाणेन राक्षसवचनेन मलयकेतुमनसि स्मृतं स्यात्पुत्रदारस्येति राक्षसस्य च मनसि विकल्पापादनमिति सूक्ष्मदृग्भिरवधेयम् ।

---

१ B. and E. add त्ति after this; G. इति निष्क्रान्तः. २ In E. उपाध्यायः for चाण°, and following word शारङ्गरव; R. has it once only. ३ P. om. आ; G. om. उपाध्याय. ४ B. has मत् for अस्मत्. ५ Om. G; जीवि° for जीव° R.; G. and E. om. नाम. ६ P. has क्तः; E. °क्तया; °तेश्वरं B. E. G; °तं K. N. ७ ° द्दहिर्निःसार्यतामिति A. ८ यदाज्ञापयत्युपाध्याय इति B. E. N. G; M. R. G. E. have निः for परि° which follows. ९ Om. G; R. omits one तिष्ठ. १० M. and E. om. इह; E. also omits the प्र following; एनमेव G. E; एतमेव N. (omitting चापि). ११ G. has आरोप्य for प्रख्याप्य; जनंचा° for °नश्चा° G; ° रे G. E. B.; N. has नि for the प्र following. १२ G. and E. omit the last इति. १३ यदाज्ञापयत्यार्य इति N. A; °त्यार्य° P; °त्युपाध्यायः B. E.

**चाणक्यः**—(चिन्तां नाटयति[1] । आत्मगतम् ।) अपि नाम दुरात्मा राक्षसो गृह्येत[2] ।

**सिद्धार्थकः**—अज्ज, गहीदो[3] । (क)

**चाणक्यः**—( सहर्षमात्मगतम् ।) हन्त, गृहीतो[4] राक्षसः। (प्रकाशम् ।) भद्र[5], कोऽयं गृहीतः ।

**सिद्धार्थकः**—गिहीदो[6] अज्जसंदेसो । ता गमिस्सं कज्जसिद्धीए । (ख)

**चाणक्यः**—( साङ्गुलिमुद्रं[7] लेखमर्पयित्वा ।) गम्यताम् । अस्तु ते कार्यसिद्धिः ।

**सिद्धार्थकः**—तथेति[8] । ( निष्क्रान्तः ।)

---

( क ) आर्य, गृहीतः ।

( ख ) गृहीत आर्यसंदेशः । तस्माद्गमिष्यामि कार्यसिद्ध्यै ।

---

शत्रुपक्षमाश्रित इति रोषावेशेन दुरात्मेति गालनम्

हन्तेति । अयमरत्युपशमनं शमः पञ्चममङ्गम् । अरतेश्चिन्ताया उपशमनात् ।

साङ्गुलीति । उत्तरोत्तरवाक्यैः कार्यसिद्धिबीजप्रकाशनादिदं प्रशमनम् । मलयकेतुराक्षसयोर्विरोधापादनार्थं लेखरूप उपायः कृतः । अतः परं राक्षसस्य मौर्यसाचिव्यप्रवणाकरणाय सप्तमेऽङ्के करिष्यमाणोपायबीजमुपक्षेप्तव्यमित्याह । चन्दनदासमिदानीं द्रष्टुमिच्छामीति ।

---

१ यित्वा स्वग° B; °यित्वा आत्म E; °यति स्व° G. All that follows down to and including आत्मगतम् in the next speech of Chânakya om. in G. २ °ह्यते E. ३ गिह्लिदो ( अय्य for अज्ज ) E; गिहीदो. A. K. P; गदिदो. N. ४ E. adds दुरात्मा before रा.° ५ अहो G. ६ ग° B. G.( हि for ही ); M. R. K. om. this; after it B. E. M. add मए; B. E. K. G. add स्स after अज्ज; गमिस्से R; B. and E. add अहम् after it. ७ °ली for °लिM; मुद्रं om. in A. K. M. P.; before गम्य° B. has भद्र सिद्धार्थक; G. and E. भद्र only. ८ M. has तहेति; B. जं अज्जो आणवेदित्ति प्रणम्य. N. agrees but has ज्जं for जं and omits प्रणम्य. G. has देवो for अज्जो and इति for त्ति प्रणम्य. E. has अज्जयो and omits त्ति.

( प्रविश्य[1] । )

शिष्यः—उपाध्याय, कालपाशिको दण्डपाशिकश्च उपाध्यायं विज्ञापयतः । इदमनुष्ठीयते देवस्य[2] चन्द्रगुप्तस्य शासनमिति ।

चाणक्यः—शोभनम् । वत्स[3], मणिकारश्रेष्ठिनं चन्दनदासमिदानीं[4] द्रष्टुमिच्छामि ।

शिष्यः—तथेति[5] । ( निष्क्रम्य चन्दनदासेन सह प्रविश्य । ) इत इतः श्रेष्ठिन् ।

चन्दनदासः—(स्वगतम्[6]) । चाणक्कम्मि अकरुणे सहसा सद्दाविंदस्स[7] वि जणस्स णिद्दोसस्स वि सङ्का किं उण मह जाददोसस्स । ता भणिदा[8] मए धणसेणप्पमुहा णिअणिवेससंठिआ कदावि

(क) चाणक्ये अकरुणे सहसा शब्दायितस्यापि जनस्य निर्दोषस्यापि शङ्का किं पुनर्मम जातदोषस्य । तस्माद्भणिता मया धनसेनप्रमुखा निज-

चाणक्येऽकरुणत्वेन प्रसिद्धे तेन सहसाकस्माच्छाब्दितस्याहूतस्येत्यर्थः ।

१ G. adds; ततः before this; E. adds अयं before काल,° has visarga for the श्च after दण्ड° and G. E. read विज्ञापयति. २ Om. in G. ३ वत्स शोभनम् E; °नं in the next word om. in M. and E. ४ A. P. M. R. om. इदानिम्. ५ यदाज्ञापयत्युपाध्याय इति B. E. N; यदाज्ञापयेति G.; G. om. सह; B. adds पुनः before प्रविश्य; E. has it after निष्क्रम्य. ६ आत्मग° E. °म्मि A. M. G. K. ( where also क for क्क ). In the next word B. has °अरु° for °करु; ° R. °कलु°. ७ साब्दिअस्स N; स्सदाइअस्स K; °विअस्स P. G; शब्दविथस्स E; °विंदस्स om. in A. For the following word B. has लोअस्स वड्डुई. E. has वेहइ; M. has वी for वि°; A. and K. om. वि. For णि in णिद्दो° B. E. R. M. have नि; शङ्का E; मम B. E. ( which reads also पुनः and संजादे); B. has जात for जाद; दासस P; °स्य A. ८ °णिया E; °नसेन E; णसेण B; पमु°. K.; P. has य and या for अ and आ in णिअ°. R. has °णिठदाओ कदाचिच्चा°. E. has प्रमुखा नियनिवेसच्छिया जहाकंयाइ; G. has तिण्णिसेवकाणियपासट्ठिआजहाकदाइ and B. तिण्णिवाणिजिआजधाकदाइ; M. K. have चि for वि in कदावि.

चाणक्कहदओ[1] गेहं विचिणावेदि । ता अवहिदा णिव्वहेह भट्टिणो अमच्चरक्खसस्स घरअणम्[2] । मह दाव जं होदि तं होदु त्ति । (क)

**शिष्यः**—भोः[3] श्रेष्ठिन्, इत इतः ।

**चन्दनदासः**—अअमाअच्छामि[4] । (क)

( उभौ परिक्रामतः )

**शिष्यः**—(उपसृत्य[5] ।) उपाध्याय, अयं श्रेष्ठी चन्दनदासः ।

**चन्दनदासः**—जेदु[6] अज्जो । (ख)

**चाणक्यः**—(नाट्येनावलोक्य ।) श्रेष्ठिन्[7], स्वागतमिदमासनमास्यताम् ।

---

निवेशसंस्थिताः कदापि चाणक्यहतको गेहं विचिनोति । तस्माद्वहिता निर्वहत भर्तुरमात्यरासक्षस्य गृहजनम् । मम तावद्यद्भवति तद्भवत्विति ।

( क ) अयमागच्छामि ।

( ख ) जयत्वार्यः ।

---

१ क्य G; गेहंपि मे E; गेहं मे B; मे गेहं G; विजणावेअदि R; विचिणावेदि B. and E; °णवे° M; °ण्णवे° P; दा for ता M; तो E; णिक्कामेगे for अवहिदा G; नि; कमेह N; हट्टिणो G. N. omitting णिव्वहेह for which B. reads णिव्वहध and E. निवाहेह. २ कलत्ते च E; कलत्तम् G; कलत्रम् N; for मह. A. P. and G. read मम; E. मे; for दाव P. ताव; R. M. दाणीम्; N. दाणिम्; E. दानीम्; for जं which follows P.N.has ज्जं and E. hasजि; भोदि E; भोदु G. N; for the following होदु A. has होदि; G. E. N. भोदु; G. E. om. the following त्ति. ३ G.and E. omit this and have इतइतः श्रेष्ठिन्. ४ Before this G. has अज्ज; E. आर्य; for अअ° E has अह.° B. for the next word reads° मागदोह्मि. G. E. have °गच्छा°; M. K. R. om. this whole speech and place the stage direction after the speech of the S'ishya. G. inserts इति before it. ५ उपसृत्य om. in B. M. R. G; देव for उपा° G; स before श्रेष्ठी E;° ष्ठि K.; G. om. चन्द°. ६ For चन्द° before this E. has श्रेष्ठी. For जेदु B. has जअदु twice (with उपसृत्य before it.) N. has जयउ; G. जयदु and E. जयदु twice for अज्जो E. has अय्यो. ७ B. R. E. G. add भो before this; M. om. it.

चन्दनदासः—( प्रणम्य ) किं ण जाणादि अज्जो जह अणुचिदो उवआरो हिअअस्स परिहवादोवि दुःखमुप्पादेदि । ता इह ज्जेव उचिदाए भूमीए उवविसामि ।(क)

चाणक्यः—भोः श्रेष्ठिन्, मा मैवम् । संभावितमेवेदमस्मद्विधैः भवतः । तदुपविश्यतामासन एव ।

चन्दनदासः—(स्वगतम् ।) उवक्खिदमणेण दुट्ठेन किंवि । (प्रकाशम् । ) जं अज्जो आणवेदि त्ति । (उपविष्टः ।) (ख)

---

( क ) किं न जानात्यार्यः यथानुचित उपचारो हृदयस्य परिभवादपि दुःखमुत्पादयति । तस्मादिहैवोचितायां भूमावुपविशामि ।

( ख ) उपक्षिप्तमनेन दुष्टेन किमपि । यदार्य आज्ञापयतीति ।

---

भोः श्रेष्ठिन्निति । एतदादि चन्दनदासातिसंधानार्थं परिहासवचनं नर्म । संभावितमिति । एतदुपचारकरणं संभावितमेवेति बहिरुपचारः । परिभवकरणमिति तु निगूढ आशयः ।

---

१ श्रेष्ठी E.; M. G. E. om. the प्रणम्य following; M. and G. om. ण before जाणा;° E. has न;° R. reads आणादि; and E. जानेदि; E. also has अज्ज्यो for अज्जो and B. E. and C. have जहा for जह after that; अणुइदो R; °चिदे G. which also has रे for रो in next word. २ E. om. वि and reads परि° before सहिअअस्स which is its reading for हिअ° as also B.'s; C. has परिजनसहिअस्स for हिअ° and N. om. हिअ;° P. reads °भवादो for °हवादो; G. om. ह in परिहवा;° B. and E. add महन्तं after this K. and N. read दुस्कं for दुःखं; E. दुक्खं; G. reads उप्पाएदि after that; for ज्जेव्व A. and K. have जेव्व; P. ज्जेव्व; M. एव; R. एव्व; E. also has इध for इह before it; B. R. E. G. read अहम् after ज्जेव्व. ३ For उचि° K. has उवचि;° R. उइ° and E. उवि; in the following word K. and N. have °मि° for °मी°. And instead of उवविसामि A. reads उपविसामि; K. उअविसामि and P. उपविसानि. ४ G. om. भोः; R. adds चन्दनदास after श्रेष्ठिन्; P. reads एतत् for इदम्; B. has °मैवं उचितमेवैतदस्मद्वि;° G. and E. उचितमेवेदम°. After विधै. B. E.R. insert सह and after the भवतः following, E. has उपवेष्टुम्. ५ °सनमेव G. ६ उवक्खित्तमणेण K; °तं णेण P; खित्तिअणेण R; °क्खिदमनेन G; उव ( प N. ) लक्खित ( द N. ) मणेन B. N. E.; B. om. the दुट्ठेण following; P. has दुच्चतेन; for किंवि A. P. reads किंति; B. reads किंपि; E. om. all down to this from स्वगतम्. ७ M. and K. om. this with त्ति preceding; N. has इत्युपविशति; G. इत्युपविष्टः (where प्रकाशम् is omitted and this part of the speech is placed before स्वगतम्); P. °दीति भूमावुपविष्टः and A. °दित्ति भूमावुपविष्टः.

चाणक्यः—भो[1]: श्रेष्ठिन् चन्दनदास, अपि प्रचीयन्ते संव्यवहाराणां वृद्धिलाभाः[2] ।

चन्दनदासः—( स्वगतम् ।) अच्चादरो संकणीओ। (प्रकाशम्[3] ) अह इं। अज्जस्स प्पसाएण[4] अखण्डिदा मे वाणिज्या । (क)

चाणक्यः—न खलु[5] चन्द्रगुप्तदोषा अतिक्रान्तपार्थिवगुणानधुना स्मारयन्ति प्रकृतीः ।

चन्दनदासः—(कर्णौ पिधाय ।) सन्तं पावम्[6] । सारअणिसासमुग्गएण विअ पुण्णिमा[7]चन्देण चन्दसिरिणा अहिअं णन्दन्ति पकिदिओ । ( ख )

---

( क ) अत्यादरः शङ्कनीयः। अथ किम्। आर्यस्य प्रसादेन अखण्डिता मे वाणिज्या ।

( ख ) शान्तं पापम्। शारदनिशासमुद्गतेनेव पूर्णिमाचन्द्रेण चन्द्रश्रियाधिकं नन्दन्ति प्रकृतयः ।

---

१ Om. G. E; चन्दनदास om. in G. M. P.; N. adds खलु after अपि. २ वृद्धिभावा: M. R.; G. B. om. वृद्धि ; B. adds. व: after लाभाः. ३ स्वर्ग°-काशम् om. in B. E; R. M. have °णिज्जो for °णीओ; G. has अच्चाअरोशंकणीयो; B. and E. add अज्ज before अह; R. om. अहइम्; B. and G. have अधइम् and E. अथ किम्. ४ °प for प्प° K. G. E; देण M. R; °येण P. In the following word E. has ष for ख; G. and N. have आ for दा and om. the मे following; A reads वणिज्जा and K. वणिजा and E. वाणिज्जालाहा. ५ G. has अपि for न खलु; N. अपि खलु; E. has भो: श्रेष्टिन् अपि and B. भो श्रेष्ठिन् अपि कदाचित्. In the next word for दोषा, E. reads प्रदोषान्, G. दोषान् and the last two words of the sentence E. reads न स्मरन्ति प्रकृतयः. ६ This phrase appears twice in A. P. M.; G. has शान्तं वावं; E. शान्तं पावं; R. पव्वं. In the following word N. K. P. read साअर; B. G. have सरअ; N. सरयानि°; म for मु A. P.; द्रु for ग्ग N; ग्र E; मे for ए B; दे G.; व for विअ E; विय P. ७ °ण्णि K; पुण्णमासीचन्देण E. G; अधिअं णदन्ति B.; A. and G. have अहिणन्दन्ति. E. has अहिअयं नन्दान्ति; for पकि° in following word B. has पअदी;° G. पयदी;° E. has पगिदी.° After पयदीओ G. has again the following सरअणि (सा?) विअविमलाउदिदेण पुण्णिमामिअंकेण देवेण चन्दसिरिणा अधिअं होन्ति पईदाआ.

**चाणक्यः**—[1]भोः श्रेष्ठिन्, यद्येवं प्रीताभ्यः प्रकृतिभ्यः प्रति-प्रियमिच्छन्ति राजानः।

**चन्दनदासः**—आणवेदु अज्जो किं[2] कित्तिअं इमादो जणादो इच्छीअदि[3]त्ति। (क)

**चाणक्यः**—[4]भोः श्रेष्ठिन् चन्द्रगुप्तराज्यमिदं न नन्दराज्यम्। यतो नन्दस्यैव[5]ार्थरुचेरर्थसंबन्धः प्रीतिमुत्पादयति। चन्द्रगुप्तस्य तु भवतामपरिक्लेश एवं[6]।

**चन्दनदासः**—(सहर्षम्।) अज्ज, अणुग्[7]गहीदोह्मि। (ख)

**चाणक्यः**—भोः श्रेष्ठिन्, स चापरिक्लेशः कथमाविर्भवतीति ननु[8] भवता प्रष्टव्याः स्मः।

---

(क) आज्ञापयतु आर्यः किं कियदस्माज्जनादिष्यत इति।

(ख) आर्य, अनुगृहीतोऽस्मि।

---

'प्रकृतिभिः' इति पाठः साधुः। यद्वा स्मरतिर्ज्ञानसामान्यवचनोऽतो 'गतिबुद्धि–' इत्यादिना कर्मत्वम्।

चन्द्रश्रिया चन्द्रगुप्तेनेत्यर्थः। इयमनुगुणोद्धाटनार्था प्रीतिर्नर्मस्तुति-रष्टममङ्गम्।

इयं राजानुरागहेतुर्वाक्यरचनोपन्यासः।

---

१ Om. in G; यद्येवं Om. in M. R; प्रति om. in B. २ केत्तिअं R; कित्तीअं E; किन्तियं G; B. adds after it वा अत्थजादं; G. अत्थं and E. वा; for the °दो at the end of the next two words G. reads °जो. For च्छी° in word after that K. has°च्छि° and for the अ following E. and P. have य. ३ om. in G; E. has ति. ४ Om. in G. This and the following speech are omitted in E; °सस्य K; M. om इदम् coming after this. ५ G. inserts अयम् after एव here. ६ P. adds च after this. ७ Om. in M. R; °ग्गिही° A. N; °गिही° P; गही M; दि (गि?) हि K; G. has दं for दो following. ८ न पुनः for न...ता B; °ष्टव्योस्मि for °ष्टव्याः स्मः G. E; N. and G. have तत्रभवता and E. भवता after स्मः instead of भवता before प्रष्टव्याः.

**चन्दनदासः**—आणवेदु अज्जो। (क)

**चाणक्यः**—संक्षेपतो[1] राजनि अविरुद्धाभिर्वृत्तिभिर्वर्तितव्यम्।

**चन्दनदासः**—अज्ज, को[2] उण अधण्णो रण्णा विरुद्धोत्ति अज्जेण अवगच्छीअदि। (ख)

**चाणक्यः**—भवानेव[3] तावत्प्रथमम्।

**चन्दनदासः**—(कर्णौ पिधाय) सन्तं पावं सन्तं पावम्[4]। कीदिसो तिणाणं अग्गिणा सह विरोहो। (ग)

**चाणक्यः**—अयमीदृशो विरोधः। यस्त्वं[5]मद्यापि राजापथ्यकारिणोऽमात्यराक्षसस्य[6] गृहजनं स्वगृहमभिनीय रक्षसि।

---

(क) आज्ञापयतु आर्यः।

(ख) आर्य, कः पुनरधन्यो राज्ञा विरुद्ध इति आर्येणावगम्यते।

(ग) शान्तं पापं शान्तं पापम्। कीदृशस्तृणानामग्निना सह विरोधः।

---

भवितव्यमिति। युष्माभिरिति शेषः।

भवानेवेति। इदं प्रतिमुखनिष्ठुरवचनं वज्रम्।

यस्त्वमद्यापीति। पुरा पुरादपक्रमणसमये रक्षणं भवतु नाम अद्यापि मलयकेतुमाश्रित्य राजापथ्यकरणसमये तत्कलत्ररक्षणमनुचितमिति भावः।

---

१ Om. in M; भवितव्यम् A. P. २ Before this G. has अध and E. अह. For the उण after this G. and E. have एसो; N. om. it; before रण्णा B. has जो; E. has जोज्जेरन्नासह; G. अज्जेण जो जणो विरु°; N. अज्जेण राजाअविरु°. For the second अ in अवगच्छीअदि E. and P. have य. ३ A. P. have भद्र; E. ननु before this; M. and R. om. तावत्; G. and E. read प्रथमं तावद्भवानेव. ४ A. and N. have सान्तं; G. शान्तं वावम्; A. has the expression only once; for °दि in next word. G. and M. have रि; K. दु; N. inserts उण after कीदिसो. ५ G. om. य; B. and R. read यस्त्व°. ६ अमात्य om. in G. E; स्वगृहम्. om. in R; स्व om. in M. For अभि E. has उप; G. has अभिरक्षसि.

**चन्दनदासः**—अज्ज[1], अलीअं एदं केणावि अणभिण्णेण अज्जस्स णिवेदिदम्[2] । (क)

**चाणक्यः**—भो श्रेष्ठिन्[3], अलमाशङ्कया । भीताः पूर्वराजपुरुषाः पौराणामनिच्छतामपि गृहेषु गृहजनं निक्षिप्य देशान्तरं व्रजन्ति[4] । ततस्तत्प्रच्छादनं दोषमुत्पादयति ।

**चन्दनदासः**—एवं[5] णेदम् । तस्सिं समये आसि अह्मघरे अमच्चरक्खसस्स घरअणो[6] त्ति । (ख)

**चाणक्यः**—पूर्वम्[7]नृतमिदानीमासीदिति परस्पर[8]विरोधिनी वचने ।

**चन्दनदासः**—एत्तिअं जेव्व अत्थि[illegible]भिम्–' च्छलम् । (ग)

**चाणक्यः**—भो श्रेष्ठिन्, चन्द्रगुप्ते रा[9]ज[illegible] छलानाम् । तत्समर्प्य[10] राक्षसस्य गृहजनम् । अच्छलं भवतु भवतः ।

---

(क) आर्य, अलीकमेतत्केनाप्यनभिज्ञेन आर्यस्य निवेदितम् ।

(ख) एवं नु इदम् । तस्मिन् समये आसीदस्मद्गृहे अमात्यराक्षसस्य गृहजन इति ।

(ग) एतावदेवास्ति मे वाक्छलम् ।

---

१ Om. in M. In the next word G. E. K. have लि for ली and P. यं for अं; for एदं E. reads एवं. For the word preceding B. and G. have अणज्जण; E. अणज्येण. For स्स A. and M. read स. २ For णि in this word E. has नि and for दं G. and A. have तं. ३ Om. R. M; after the following word अलम् A. M. K. P. insert अनया; R. another अलम्. ४ प्रयान्ति G. N. M. om. the ततः which follows; E. has यतः; before दोष° B. E. have एव; G. N. have अत्र; P. मे; K. A. R. add प्र before दोष; E. has °दजमचतदोष°. ५ एव्वं R. G. N; °ए for °ये E. N; for आसि M. has आस; E. om. घरे in the following word. ६ जणो G; यणो E; त्ति om. in B. ७ प्रथमम् for पूर्वम् B. E; N. has before this सक्रोधम्. After इदानीम् E. reads अस्तीतिचवक्षि (क्षी ?) ति ननुपरस्पर°; A. K. read परस्परं. ८ अज्ज at the beginning of this speech in N; एव for जेव्व M; जेव K; एव्व. R; om. in G. E. and N; E. has अस्तएत्थंतरे अस्ति &c; आ om. in P; या E. ९ G. N. have माशङ्किष्ठाः before this; N. has न after this and before राजनि; B. has न after राजनि and both om. अ before परिग्रहः. १० E. adds तु after this; for गृह° E. has गृहमतं न च्छ°; भवेत् for भ...तः G; भवतु भवेत् E; भवतु om. in A. K. M. P. R. N.

चन्दनदासः—अज्ज, [1]णं विण्णवेमि आसी अह्मघरे अमच्चरक्खसस्स घर[2]अणो त्ति। (क)

चाणक्यः—अथेदानीं क्व गतः।

चन्दनदासः—ण [3]जाणामि। (ख)

चाणक्यः—(स्मितं कृत्वा।) कथं न ज्ञायते नाम। भो[4] श्रेष्ठिन्, शिरसि भयं[5]मति[illegible]रे तत्प्रतीकारः।

चन्दनदा[illegible]ः—(आ[illegible]वगतम्।) अयमीदृ[illegible]

[6]उँवरि घ[illegible] [illegible]अं दूरे दइदा किमेददावडिअम्।
हिम[7]वँदि दिव्वोसहिओ सीसे सप्पो समाविट्ठो ॥ २१ ॥ (ग)

---

(क) आर्य, ननु विज्ञापयामि आसीदस्मद्गृहे अमात्यराक्षसस्य गृहजन इति।

(ख) न जानामि।

(ग) उपरि घनं घनरटितं दूरे दयिता किमेतदापतितम्।
हिमवति दिव्यौषधयः शीर्षे सर्पः समाविष्टः ॥

---

१ ननु for णं before this E; आसि for आसी A. M. P; B. E. have तस्सिं समये before आसी; G. and N. after आसी. २ जणो G. E. ३ G. has अज्ज at the beginning of this speech. K. has न for ण before this; M. R. have आणामि; E. याणा°; G. आणीमो; K. जानामि; N. जाणिमो; B. N. G. add after this कहिं गदोत्ति; E. agrees, reading के for क. ४ E. om. भो; G. om. भो श्रेष्ठिन्. ५ फणी B. G. E; B. om. the अति which follows; R. has प्रति for प्रती. ६ °प° for °व° K. P; °व्व° E; घणा for घणं B. M; घण E; for रडिअं B. has भणिअं; N. रणिअं; for दूरे P. has दूले; for दइ° P. and N. दयि°; for दा. G. E. B. N. have आ. For °मेददा° A. K. P. R. have °मेतदा; E. मेयदा; G. has प for व; for the final अम् A. K. P. read दम्. ७ इ for दि E. M. In the next word P. has व्वौ for व्वो; E. has व्ये?; स्से for से B. M. R; शिस्से K; °विद्धो E; °विह्लो P. At the beginning of this speech instead of चन्द.। स्वगतम् G. has उक्तं कस्यापि.

चाणक्यः—अन्यच्च[1] नन्दमिव विष्णुगुप्त-(इत्यर्धोक्ते लज्जां नाटयित्वा[2] ।) चन्द्रगुप्तममात्यराक्षसः समुच्छेत्स्यतीति मामैवं मंस्थाः । पश्य ।

विक्रान्तैर्नयशालिभिः सुसचिवैः श्रीर्वक्रनासादिभि-[3]
नन्दे जीवति या तदा[4] न गमिता स्थैर्यं चलन्ती मुहुः ।
तामेकत्वमुपागतां द्युतिमिव प्रह्लादयन्तीं जगत्
कश्चन्द्रादिव चन्द्रगुप्तनृपतेः कर्तुं व्यवस्येत्पृथक् ॥ २२ ॥

अपि च । ('आस्वादितद्विरदशोणितशोणशोभाम्–' इति पूर्वोक्तं[5] पठति ।)

चन्दनदासः—(स्वगतम्[6] ।) फलेण संवादिदं से विकत्थिदम् ।(क)
(नेपथ्ये[7] कलकलः ।)

---

(क) फलेन संवादितमस्य विकत्थितम् ।

---

नन्द इति जातावेकवचनम् । नवसु नन्देषु जीवत्सु व्यासज्यस्थितापि या मया चलिता सती स्थैर्यं न गमिता तां चन्द्रगुप्ते एकत्वमुपागत्य दृढतया स्थितामविद्यमानेषु नन्देषु कश्चालयेदिति भावः ॥ २२ ॥

आस्वादितेति । एतत्स्वाम्यनुरागप्रकाशविशिष्टवचनं पुष्पम् ।

---

१ E. om. च; G. om. विष्णु; K. P. and N. om. गुप्त and P. N. have रि for the इ following; G. has मि for that इ; E. om. इति; for °क्ते B. has °क्तौ; E. °क्तेन. २ °यति N. A. After that E. has ननु; छेत्स्य° A. P; B. E. G. om. the first मा; P. has एव for एवम् and G. adds अव after it. ३ श्रीव° G. A. P. ४ तथा G. ५ B. has आस्वादितेत्यादि प्रागुक्तं पठति; G. and E. quote the whole stanza here. ६ Om. in A; E. has आत्मगतम्; G. E. read next word as फलेन. For संवादिदं B. E. R. M. have संपादिदं; G. °पाविअं before से; B. N. G. have सोहदि; E. has शोहदि. For से B. and N. have दे; G. ते; E. किंण; for विकत्थिदम् A. has °त्थणम्; P. °त्थनम्; K. °थिदम्. ७ G. E. N. have ततो before this; G. E. N. B. have उत्सारणा क्रियते instead of कलकलः.

चाणक्यः—शार्ङ्गरव[1], ज्ञायतां किमेतत् ।

शिष्यः—तथा[2] । (इति निष्क्रम्य पुनः प्रविश्य ।) उपाध्याय, एष राज्ञश्चन्द्रगुप्तस्याज्ञया राजापथ्य[3]कारी क्षपणको जीवसिद्धिः सनिकारं नगरान्निर्वास्यते ।

चाणक्यः—क्षपणक[4], अहह । अथ वा अनुभव राजापथ्यकारित्वस्य फलम् । भोः श्रेष्ठिन् चन्दनदास[5], एवमयमपथ्यकारिषु तीक्ष्णदण्डो राजा । तत्क्रियतां पथ्यं सुहृद्व[6]चः । समर्प्यतां राक्षसगृहजनः । अनुभूयतां चिरं[7] विचित्रो राजप्रसादः ।

चन्दनदासः—णत्थि मे गेहे अमच्चघरअणो[8] । (क)

---

(क) नास्ति मे गेहे अमात्यगृहजनः ।

---

मुण्डी निष्परिग्रहस्तपस्वी निकारानर्ह इति कारुण्याविष्कारणार्थोऽहहशब्दः । अथवेति राजापथ्यकारी यः कश्चिदपि निग्राह्य एवेति समाधानम् ।

---

१ G. A. and E. have this twice (E. having सारङ्गरव); A. N. P. have आः after this; M. om. किमेतत्; G. E. N. add इति after it. २ यदाज्ञापयत्युपाध्याय इति B. G. N; E. agrees but omits इति. G. has स before एष and E. has देवस्य चन्द्र° after it. ३ M. and R. om. थ्य; N. has रि for री. ४ N. has कथम् before this and G. and M. have a visarga after it. E. has कष्टम् after अहह; E. स्वकर्मभिः before अनु°; B. E. N. G. add तु after this. ५ G. om. this and भो also; B. E. N. G. have राजा before अपथ्य°; N. G. read राजा तीक्ष्णदण्डः and G. om. तत् which follows. ६ °द्वचनं च G. which and N. too omit what follows down to °जनः; R. E. M. K. have स्य after राक्षस. ७ G. om. this; B. has it before अनुभूयन्ताम् which is its reading, as well as that of G; G. and B. also have विचित्रा राजप्रसादाः; E. has विचित्रफलो for विचित्रो. ८ G. N. have अज्ज गेहेसन्तं (पिन N. adds) समप्पेमि कुदो (तो N.) असन्तं समप्पीअदि; E. अज्ज गेहे असन्तं कुदो समप्पीअदि; R. यणो for अणो in text and K. has नत्थि for णत्थि.

( नेपथ्ये[१] पुनः कलकलः । )

**चाणक्यः**—शार्ङ्गरव[२], ज्ञायतां किमेतत् ।

**शिष्यः**—तथा[३] (इति निष्क्रम्य पुनः प्रविश्य ।) उपाध्याय, अयमपि राजापथ्यकार्यैव[४] कायस्थः शकटदासः शूलमारोपयितुं नीयते ।

**चाणक्यः**—स्वकर्मफलमनुभवतु[५] । भोः श्रेष्ठिन्, एवमयं राजापथ्यकारिषु[६] तीक्ष्णदण्डो न मर्षयिष्यति राक्षसकलत्रप्रच्छादनं भवतः[७] । तद्रक्ष परकलत्रेणात्मनः कलत्रं जीवितं च ।

**चन्दनदासः**—अज्ज, किं मे भअं[८] दावेसि । सन्तं वि गेहे अमच्चरक्खसस्स घरअणं[९] ण समप्पेमि किं उण असन्तम् । (क)

**चाणक्यः**—चन्दनदास, एष ते निश्चयः ।

**चन्दनदासः**—बाढं एसो[१०] धीरो मे णिच्चओ । (ख)

---

(क) आर्य, किं मे भयं दर्शयसि । सन्तमपि गेहे अमात्यराक्षसस्य गृहजनं न समर्पयामि किं पुनरसन्तम् ।

(ख) बाढमेष धीरो मे निश्चयः ।

---

१ B. E. G. have ततो before नेपथ्ये; B. G. om. पुनः; A. K. have कलहः or कलकलः; E. has उत्सारणा क्रियते. २ Twice in M. E; E. has सारङ्गरव and सं before ज्ञायताम्; A. P. N. have आः; B. and E. have पुनः after ज्ञायताम्; G. and E. have इति at the end of the speech. ३ यदाज्ञापयत्युपाध्याय इति B. E. N. ४ For अयमपि N. E. have अयमसौ; B. has असौ; B. and E. have after this राजाज्ञया; B. om. एव; E. has इति for it; G. and N. om. राजापथ्यकार्यैव. ५ B. and G. have °लभागभव; A. om. तु in भवतु. ६ E. has अपि for अयं राजा; A. omits षु in कारिषु; B. E. add राजा after तीक्ष्णदण्डो; G. has तीक्ष्णदण्डः को (ण्डको ?) राजा. ७ om. G; for रक्ष G. reads रक्ष्यताम्; E. परिरक्षती (*sic.*). ८ भअं मे R. M. K; E. and P. have भयं for भअं; G. om. मे and adds मं after दावेसि for which K. E. B. read दंसेसि; पि for वि B. E. G. N; E. has अहं before गेहे; G. and N. substitute it for गेहे. ९ घरयणम् R. E. N; for समप्पे° K. has सम्मपे°; P. समीप्य°; E. समपे°; E. has पुन for उण. १० एस for एसो G. N; मे थिरो for धीरो मे B. E; थिरो मे G; धीरो om. in M. R; धिलो P; for णिच्च° E णिच्छ°.

चाणक्यः—(स्वगतम्[1]।) साधु चन्दनदास, साधु।

सुलभेष्वर्थलाभेषु परसंवेदने[2] जने।

क इदं दुष्करं कुर्यादिदानीं शिबिना विना॥ २३॥

(प्रकाशम्।) चन्दनदास[3], एष ते निश्चयः।

चन्दनदासः—बाढम्[4]। (क)

चाणक्यः—(सक्रोधम्[5]।) दुरात्मन्, तिष्ठ दुष्टवणिक्। अनुभूयतां तर्हि नरपतिक्रोधः[6]।

चन्दनदासः—सज्जोह्मि[7]। अनुचिट्ठदु अज्जो अत्तणो अहिआरसरिसम्। (ख)

चाणक्यः[8]—शार्ङ्गरव, उच्यतामस्मद्वचनात्कालपाशिको दण्डपाशिकश्च। शीघ्रमयं दुष्टवणिक् निगृह्यताम्[9]। अथवा तिष्ठतु।

---

(क) बाढम्।

(ख) सज्जोऽस्मि। अनुतिष्ठतु आर्यः आत्मनोऽधिकारसदृशम्।

---

सुलभेष्विति। परस्य परकीयार्थस्य संवेदने समर्पणे कृते सति स्वस्यार्थलाभेषु सुलभेषु सत्सु स्वार्थं तृणीकृत्य परसंरक्षणरूपमेवं दुष्करं कर्म जने लोके एकेन शिबिना विना त्वदन्यः कः कुर्यात्। शिबिरपि कृते पुरा कृतयुगे कृतवान्। त्वं तु इदानीं पापिनि कलौ करोषीति ततोऽप्यतिशयितसुचरितस्त्वमिति भावः। इदमपि पुष्पम्॥ २३॥

---

१ आत्मग° G. E; for चन्दनदास E. reads श्रेष्ठिन्. २ R. has त for द in संवेदने; B. has जनः for जने. ३ श्रेष्ठिन्. for this G. ४ B. adds एसो मे थिरो णिच्चओ; G. एसो थिरो णिच्चओ; N. agrees adding मे before णिच्च°; M. om. whole speech. ५ E. adds खड्गमाकृष्य; तिष्ठ om. in B. E. G. ६ तर्हि om. in G; B. reads राजकोप; R. and G. नरपतेः कोपः. ७ B. E. add बाहू प्रसार्य; E. adds भूदो before ह्मि. In the following word E. has नु for णु, ट्ठि for ट्ठ, and A. and P. have ट्ठीअ for ट्ठ; अत्तनो for अत्तणो E.; G. and N. have धि for हि in the word following; B. and E. have अहिआरस्स अणुरूअं (E. has नु for णु). ८ B. has सक्रोधम् here; E. has that and further खड्गमाकृष्य। दुरात्मन्दुष्ट। सारङ्गरव सारङ्गरव उच्य°; M. and P. have शार्ङ्गरव twice. ९ °ताम् om. in N; शास्यताम् G. E; तावत् for अथवा G.

उच्यतां[1] दुर्गपालको विजयपालकः गृहीतगृहसारमेनं सपुत्रकलत्रं संयम्य[2] तावद्रक्ष यावन्मया वृषलाय कथ्यते । वृषल एवास्य प्राण-हरं[3] दण्डमाज्ञापयिष्यति ।

शिष्यः—यदाज्ञापयत्युपाध्यायः । श्रेष्ठिन्[4], इत इतः ।

चन्दनदासः—अज्ज[5], अअमाअच्छामि । (स्वगतम् ।) दिट्ठिआ मित्तकज्जेण मे[6] विणासो ण पुरिसदोसेण । (क) (परि-क्रम्य शिष्येण सह[7] निष्क्रान्तः ।)

चाणक्यः—(सहर्षम् ।) हन्त[8], लब्ध इदानीं राक्षसः । कुतः ।

त्यजत्यप्रियवत्प्राणान्यथा तस्यायमापदि ।
तथैवास्यापदि[9] प्राणा नूनं तस्यापि न प्रियाः ॥ २४ ॥

---

(क) आर्य, अयमागच्छामि । दिष्ट्या मित्रकार्येण मे विनाशो न पुरुष-दोषेण ।

---

वृषल एवेति । इदं छद्मना हितागमननिरोधनं निरोधः । छद्मना कपटेन हितागमनाय स्वेष्टसिद्धये चन्दनदासनिरोधात् । यद्वा हितं राक्षसमागमयतीति हितागमः हितागमनस्य हितराक्षसागमनहेतुभूतस्य चन्दनदासस्य निरोधनात् ।

---

१ G. and E. add अस्मद्वचनात् after this; for °पालको B. E. G. have °पालः. For °पालक in विजयपालकः B. E. G. read पालश्च; K. पालः; N. पालकश्च. २ Om. in G. रक्ष before तावत् B. E. G. R. N. (E. having रक्षताम्); G. and N. om. मया which follows; स एवास्य G. B. ३ G. reads सर्वस्वहरणं; E. सर्वस्वहरं; M. प्राणाहरणं; N. प्राणाहारं. ४ इति before this G. B. ५ उत्थाय before this B. E; for अअमा° following, G. has अयमा°; K. and P. असा°; E. आ°; G. and E. read ग for the अ in अच्छामि; K. reads अच्छम्मि for this last; E. has आत्मग° for स्वग° and दिट्ठिया for दिट्ठिआ. ६ Om. in M. R; before मित्तकज्जेण E; E. has ना for णा in the following word after which B. adds जणिदो; for the following word A. and G. read न after which M and B. add उण; R. has पुरुस for पुरिस. ७ G. om. शि-ह and has instead इति before परि°. ८ Om. in R. M. N; न for it P; दिष्ट्या G; E. has दुरात्मा before राक्षसः. ९ तथास्याप्यापदि E. which also has ध्रुवं for नूनं.

(नेपथ्ये कलकलः।)

चाणक्यः—शार्ङ्गरव शार्ङ्गरव।

(प्रविश्य।)

शिष्यः—उपाध्याय, आज्ञापय[2]।

चाणक्यः—किमेष कलकलः[3]।

शिष्यः—(विभाव्य[4]।) उपाध्याय, एष खलु शकटदासं वध्यमानं[5] वध्यभूमेरादाय समपक्रान्तः सिद्धार्थकः।

चाणक्यः—(स्वगतम्।) साधु सिद्धार्थक[6], कृतः कार्यारम्भः। (प्रकाशम्।) प्रसह्य किमपक्रान्तः[7]। (सक्रोधम्।) वत्स, उच्यतां भागुरायणो यथा त्वरितं[8] संभावयेति।

(निष्क्रम्य प्रविश्य च।)

शिष्यः[9]—(सविषादम्।) उपाध्याय, हां धिक् कष्टम्। अपक्रान्तो[10] भागुरायणोऽपि।

---

कृतः कार्यारम्भ इति। अयमपि बिन्दुः। त्वरितं संभावयेति निगृह्य समाधाय वा सिद्धार्थकमानयेति बाह्योऽर्थः। त्वमपि तेन सह गत्वा कार्यं साधयेति आन्तरो गूढार्थः।

---

१ Om. in B. G; M. R. K. om. this and next two speeches; E (which has शारङ्ग°) adds रे ज्ञायतां किमेतत् and om. next two speeches. २ B. adds तु after this; G. om. उपाध्याय. ३ B. reads ज्ञायतां किमेतत्. ४ B. has निष्क्रम्य विभाव्य पुनः प्रविश्य संभ्रान्तः शिष्यः; M. K. B. प्रविश्य शिष्यः; E. agrees with K. and adds सविषादम्; G. om. खलु; E. adds सिद्धार्थकः after this and om. it at the end of the speech; R. and M. transpose the order of the next two words. ५ वध्यस्थानादादाय M. R; G. has समुपक्रान्तः; E. has सहनिःक्रान्तः. ६ B. G. N. have साधु after this; P. also apparently; N. om. कृतः-रम्भः; G. om. that and प्रकाशम् also, and has कृतः instead, but over the line it has कृतः कार्यारम्भः; E. has त्वया after कृतः. ७ किमुप°. G; कथमप. E; G. has प्रकाशम् instead of सक्रोधम्; R. adds इव after सक्रो°. ८ B. G. insert एनम् before सं°; for ये B. P. read य; G. N. insert एनम् between °वय and इति. ९ च before शिष्यः om. in R. and G. (reading पुनः before प्रविश्य and शिष्यः before this stage direction and omitting सविषादम्). E. has निष्क्रम्य पुनः प्रविश्य। शिष्यः and B. has शिष्यः पुनः तथा कृत्वा प्रविश्य सविषादम्।; M. शिष्यः निष्क्रम्य पुनः प्रविश्य सवि.°; Om. G. १० उप° for अप° G; अपि at the end of the sentence om. in G. E.

चाणक्यः—( स्वगतम्[1] ।) व्रजतु कार्यसिद्धये । (प्रकाशम् । सक्रोधमिव ।) वत्स[2] उच्यन्तामस्मद्वचनाद्भद्रभटपुरुषदत्तडिङ्गरातबलगुप्तराजसेनरोहिताक्षविजयवर्माणः शीघ्रमनुसृत्य[3] गृह्यतां दुरात्मा भागुरायण[4]ः ।

शिष्यः—तथा[5] । (इति निष्क्रम्य पुनः प्रविश्य सविषादम् ।) हा[6] धिक् कष्टम् । सर्वमेव तन्त्रमाकुलीभूतम् । तेऽपि खलु भद्रभटप्रभृतयः प्रथमतरमुषस्येवापक्रान्ताः[7] ।

चाणक्यः—( स्वगतम् ।) सर्वथा[8] शिवाः पन्थानः सन्तु । ( प्रकाशम् ।) वत्स[9], अलं विषादेन । पश्य ।

ये याताः किमपि प्रधार्य हृदये पूर्वं गता एव ते
ये तिष्ठन्ति[10] भवन्तु तेऽपि गमने कामं प्रकामोद्यमाः ।

---

अपक्रान्ता इति । अस्मदिष्टसिद्धय एव गता इत्यर्थः ।

ये इति । किमपि प्रधार्य हृदये अस्मद्विरोधं मनसि कृत्वेति बहिः । अस्मत्कार्यमेव साधयितुमिति गूढम् । सर्वा अपि प्रकृतयः सुखेन यान्तु न हि तदवलम्बेनाहं कार्यं साधये बुद्धिबलेनैव सर्वं साधयामीत्यर्थः । अयं चतुर्वर्णनिर्वर्णनं वर्णसंहारः । ब्राह्मणादिचतुर्वर्णान्तःपातिनीनां प्रकृतीनां 'ये याताः' इत्यादिना निर्वर्णनान्निर्देशात्त्रयोदशमङ्गम् । तृतीयाङ्के वक्ष्यमाणं तेषामुदन्तमानेष्यामीति गूढाशयः ॥ २५ ॥

---

१ आत्मग°. G. E. २ G. E. om. इव before this. For वत्स A. P. M. N. read भद्र; B. K. add तत्कृतं विषादेन after this; A. P. M. K. read उच्यताम् for उच्यन्ताम् which follows this; °भट्ट for °भट E; for डिङ्ग° B. has हिङ्ग°; G. डिण्डि°; R. E. डिङ्गि°; for रोहिताक्ष K. has लोहि°. ३ °मुप° for °मनु° B.E. ४ R. G. M. add इति here. ५ यदाज्ञापयत्युपाध्याय इति B. N. E; यदाज्ञेति G. ६ om. in E; हा धिक्कष्टम् om. in R. M. B. E. G. have उपाध्याय before हा; जन्त्व for तन्त्र P; व्याकुली° for आकुली° P. ७ P. om. °तर° after प्रथम. After °तरम् B. E. N. read अप्रभातायामेव रजन्यामप°; G. has प्रथमतः प्रभाता; यामेव &c. ८ सर्वेषाम् G. E. N; सर्वदा R; सर्वेषामेव B; सथा K; सन्तु before पन्थानः G. ९ कृतम् for अलम् G; R. K. M. om. पश्य. १० निघ्नन्ति N; गमनं कामं सकामोद्यमाः E.

एका केवलमेवं[1] साधनविधौ सेनाशतेभ्योऽधिका
नन्दोन्मूलनदृष्टवीर्यमहिमा[2] बुद्धिस्तु मा गान्मम ॥ २५ ॥

( उत्थाय आकाशे[3] लक्ष्यं बद्ध्वा । ) एष दुरात्मनो भद्रभटप्रभृतीनाहरामि[4] । ( आत्मगतम् । ) दुरात्मन् राक्षस, क्वेदानीं गमिष्यसि । एषोऽहमचिराद्भवन्तम्

स्वच्छन्दमेकचरमुज्ज्वलदानशक्ति-
मुत्सेकिना मदबलेन[5] विगाहमानम् ।
बुद्ध्या निगृह्य वृषलस्य कृते क्रियाया-
मारण्यकं गजमिव प्रगुणीकरोमि[6] ॥ २६ ॥

( इति निष्क्रान्ताः सर्वे ।)

[7]प्रथमोऽङ्कः ।

---

स्वच्छन्दमिति । स्वच्छन्दं निरङ्कुशं स्वपक्षमनाश्रित्य विजातीयं परपक्षं कथमाश्रितोऽसीति तव कोऽपि नियन्ता नास्तीत्यर्थः । एकचरमिति । वयमत्र नन्दवंशसंबन्धिनः सर्वे स्वजना वर्त्तामहे तान्विहाय तत्रैकश्चरसीति भावः । उज्ज्वलदानशक्तिं परकृत्योपजापार्थं महता कोशसंचयेन स्थापितः शकटदास इति वक्ष्यमाणबहुव्ययकारिणम् । उत्सेको दुरभिमानो अरातिहस्तगतो विनश्येन्न तु चन्द्रगुप्तेन संदधीतेति षष्ठाङ्के वक्ष्यमाणदुरभिमानवता मदबलेन विगाहमानमस्मदपकाराय चेष्टमानं त्वामारण्यकं गजमिव प्रगुणीकरोमि । यथा आरण्यको दुष्टगजः शनैर्गर्तपातदृढरज्जुबन्धनादिनोपायेन संवाहनादिक्रियायां प्रगुणीक्रियते वशीक्रियते।एवं त्वामतिसंकटे पातयित्वा-

---

१ अर्थ for एव B. २ नन्दोत्पाटन. E. ३ G. E. om. all आका°—बद्ध्वा; B. has प्रत्यक्षवत् before आका°. B adds खलु after एष. ४ भद्रमुख. G; for आहरामि G. reads ग्राहयिष्यामि; F. ग्राहयामि; M. and G. have स्वग° for आत्मग° which follows; R. has आः before दुरात्मन्; G. and E. om. इदानीम् which follows; B. N. G. E. read यास्यसि for गमिष्यसि. ५ उत्सेकिनम् R; बलमदेन B. E. G; विगाह्यमा° R. G. E. ६ M. has प्रवणं करोमि; R. प्रवणीक°. ७ Before this B. has इति मुद्राराक्षसे; P. has इति मुद्राराक्षसनाम्नि नाटके मुद्रालाभः; A. has मुद्रालाभो नाम; N. has इति मुद्रालाभो नाम and समाप्तः after अङ्कः.

गतिकतया यथा स्वयमेव प्रवणो भवसि तथा क्रियायां वृषलसाचिव्यक्रियायां वशीकरोमीत्यर्थः । एष यत्नः । 'प्रयत्नस्तु तदप्राप्तौ व्यापारोऽतित्वरान्वितः' इति लक्षणात् । इत्थं यत्नबिन्दुसंबन्धरूपप्रतिमुखसंधिः । बिन्दुप्रयत्नानुगुण्येनास्य संधेः त्रयोदशान्यप्यङ्गानि च यथामति योजितानीति सूक्ष्मदृष्टिभिरवधार्य संतोष्टव्यम् ॥ २६ ॥

प्रथमोऽङ्क इति । अङ्कलक्षणं निरूपित दशरूपके—

'प्रत्यक्षनेतृचरितो बीजव्यक्तिपुरस्कृतः ।
अङ्को नानाप्रकारार्थः संविधानरसाश्रयः ॥' इति ॥

कर्त्तेदं नाटकस्याद्भुतरसविलसत्संविधानप्रवीणः
क्लेशश्चाणक्यनीतौ बहुविधमतनोल्लक्षणाद्यैर्वचोभिः ।
तत्तल्लक्ष्ये तदङ्गानुसरणविषयक्लेशमस्मद्विधानां
राजश्रीत्र्यम्बकार्यानुमतिसुविहितं वीक्ष्य तुष्यन्तु सन्तः ॥

इति श्रीढुण्ढिराजव्यासविरचितायां मुद्राराक्षसव्याख्यायां

प्रथमोऽङ्कः समाप्तः ।

# मुद्राराक्षसम् ।

## द्वितीयोऽङ्कः ।

(ततः प्रविशत्याहितुण्डिकः ।)

**आहितुण्डिकः**—

जाणन्ति[1] तन्तजुत्तिं जहट्ठिअं मण्डलं अहिलिहन्ति ।
जे मन्तरक्खणपरा ते सप्पणराहिवे उवअरन्ति[2] ॥ १ ॥ (क)

---

(क) जानन्ति तन्त्रयुक्तिं यथास्थितं मण्डलमभिलिखन्ति ।
ये मन्त्ररक्षणपरास्ते सर्पनराधिपावुपचरन्ति ॥

---

अथ राक्षसकृतोपायवृत्तान्तकथनाय प्राप्त्याशापताकासंबन्धरूपो गर्भसंधिर्द्वितीयेनाङ्केनारभ्यते—'गर्भस्तु दृष्टद्रव्यस्य बीजस्यान्वेषणं मुहुः' इति लक्षणात् । पूर्वाङ्के दृष्टस्यात्र राक्षसाहितुण्डिकसंवादरूपया व्यापिन्या कथया पताकाख्यया नष्टस्यादृष्टस्य चाणक्यनीतिरूपस्य बीजस्याग्रे मुहुरन्वेषणात् । पताकाप्राप्त्याशानुगुण्येन गर्भसंधेरङ्गानि—

'अभूताहरणं मार्गो रूपोदाहरणे क्रमः ।
संग्रहश्चानुमानं च तोटकाधिबले तथा ।
उद्वेगसंभ्रमाक्षेपा द्वादशाङ्गान्यनुक्रमात् ॥'

तत्राहितुण्डिकच्छद्मधारिणो विराधगुप्तस्य सर्वं प्राकृतं वचनं प्रस्तुतोपयोगिच्छद्माचरणमभूताहरणम् । प्रस्तुतस्य राक्षसं प्रति कुसुमपुरवृत्तान्तकथनस्योपयोगे छद्माचरणात् ।

जानन्तीति । 'तन्त्रं स्वराष्ट्रचिन्तायां शास्त्रौषधमखेषु' इति वैजयन्ती । तन्त्रे स्वराष्ट्रचिन्तायां विषौषधविशेषे च युक्तं यथावज्जानन्ति । म-

---

१ जानन्दि P. In word following G. has न्त्त for न्त; E. has यु for जु and P. त्ती for त्तिं; E. has यहट्ठियं for जहट्ठिअं; P. यं for अं only, R. जहात्थिअं; G. has ल for लि and P. M. and R. न्दि for न्ति. २ R. has अ before उव°; P. and E. have च्चर for अर°; B. चर°; P. and M. have न्दि for न्ति.

(आकाशे।) अज्ज, किं तुमं भणासि—'को तुमं' त्ति। अज्ज, अहं खु आहितुण्डिओ जिण्णविसो णाम। किं भणासि—'अहं वि अहिणा खेलिदुं इच्छामि' त्ति। अह कदरं उण अज्जो वित्तिं उवजीवदि। किं भणासि—'राअउलसेवकोह्मि' त्ति। णं खेलदि एव्व अज्जो अहिणा। कहं विअ। अमन्तोसहिकुसलो वालग्गाही मत्तमतङ्गआरोहि लद्धाहिआरो जिदकासी राअसेवओ त्ति एँदे

---

आर्य, किं त्वं भणसि—'कस्त्वम्' इति। आर्य, अहं खलु आहितुण्डिको जीर्णविषो नाम। किं भणसि—'अहमपि अहिना खेलितुमिच्छामि'

---

ण्डलं राष्ट्रं माहेन्द्रादिदेवतायन्त्रं चाभिलिखन्ति चिन्तयन्ति रेखाकारेण लिखन्ति च। तन्त्रमन्त्रादिषु अत्यन्तमवहितात्मना सर्पनराधिपोपचरणं कर्त्तव्यमिति गीत्यर्थः ॥ १ ॥

'किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत्। श्रुत्वेवानुक्तमप्येकस्तत्स्यादाकाशभाषणम्। अप्रविष्टैः सहालापो भवेदाकाशभाषणम् ॥'

---

१ E adds लक्ष्यं बद्धा. B. G. E. om. तुमं. In next word K. has ण for णा; G. has अं for मं and E. ति for त्ति; A. om. को-त्ति. २ क्खु B; B. also has दु for तु in next word; नामा E; B. adds पुनराकाशे after this; पि for वि B. E. ३ इच्छम्मि for इच्छामि R; P. and G. om. त्ति after this; B. E. G. N. read ध for ह; G. and N. read next word as कअरां; E. कवरं; E. also reads पुण्णो for उण and (with G.) has अज्जो after उवजीवदि; R. A. P. have उ for वि in वित्तिं; M. reads वुत्तिं; N. has आजिआदि for उ-दि. G. has आजिअदि; N. om. अज्जो. ४ B. has पुनराकाशे before this; P. G. N. have कुलं for उल. E. reads रायकुल. For °ह्मित्ति G. B. have simply त्ति; P. has °ह्मीति; N. om. त्ति. and B. has ओ for को and R यो; खेलिदु G.; खेलदु E. ५ B. has जेव; E. जेव; G. जेव्व. For कहं° B. has किं भणासि अथंत्ति; N. has कधं for कहं; A. P. कहिं; E. has simply कथं; G. has कथंत्ति; A. P. M. N. om. अ in अमन्तो°. P. reads मन्तौ for मन्तो; G. कुशलो for कुसलो. E. has अनोसहि° and कुशलो. ६ B. has before this अग्गहदक्कुसो; G. reads पमत्तोमतंगजसंरोहणो; E. पियमंतोमलवरारोहणे यो लद्धा°; R. मदगआरोही; A. पमत्तमत्तंगआरोही; M. मत्तगआरोही; N. मत्तगअवरोहणे च; B. मत्तगअवरारोही. A. P. have धि for हि; E. has °गारो for °आरो; B. G. N. have अ for द; E. ल. In the next word B. R. have राज°; N. E. राय°; E. adding कुल after this; G. and E. also have °को for °ओ. A. P. read एते; G. has before it तदो जेव्व; E. ततोप्येव.

तिण्णि वि अवस्सं विणासमणुहोन्ति । कहं दिट्ठमेत्तो अदिक्कन्तो एसो । (पुनराकाशे ।) अज्ज, किं तुमं भणासि—'किं एदेसु पेडालसमुग्गएसु' त्ति । अज्ज, जीविआए संपादआ सप्पा । किं भणासि—'पेक्खिदुमिच्छामि' त्ति । पसीददु अज्जो ।

---

इति । अथ कतरां पुनरार्यो वृत्तिमुपजीवति । किं भणसि—'राजकुलसेवकोऽस्मि' इति । ननु खेलति एव आर्योऽहिना । कथमिव । अमन्त्रौषधिकुशलो व्यालग्राही मत्तमतङ्गजारोही लब्धाधिकारो जितकाशी राजसेवक इत्येते त्रयोऽप्यवश्यं विनाशमनुभवन्ति । कथं दृष्टमात्रोऽतिक्रान्त एषः । आर्य, किं त्वं भणसि—'किमेतेषु पेटकसमुद्गकेषु' इति । आर्य, जीविकायाः संपादकाः सर्पाः । किं भणसि—'प्रेक्षितुमिच्छामि' इति । प्रसीदत्वार्यः । अस्थानं खलु एतत् । तद्यदि कौतूहलं एहि एतस्मिन्नावासे दर्शयामि । किं भणसि—'इदं

---

तदाह—आकाशे इति ।

---

1 B. om. वि; G. has पुरिसा instead of it and E. reads एदे पुरुविल्लपुरिसा विणास°. M. has °होन्दि; E. has °हवन्ति; B. has भवन्ति; G. अनुभवन्ति; कथं for कहं B. E. N. om. कहं-एसो; G. has for the whole इति अघनिक्कन्तो; E. om. दिट्ठ°. B. has दिट्ठमत्तो; P. दिष्टमतो. अति°. E; अदिक° P; E. om. एसो and has पुनरप्याकाशे लक्षं बद्ध्वा. 2 N. adds मण्डण after अज्ज; B. E. G. om. the किं which follows and B. and G. read उण किं after तुमं. 3 पेडिआ R.; पेडा B. E.; पेट्टाल G. N. Instead of °एसु B. E. N. G. have केसु; E. om. त्ति following. B. has अप्प before जीवि°; B. and G. om. ए after जीविआ; E. has या instead of आए. For संपादआ G. has सं-या. E. सं-का. 4 B. has before this पुनराकाशे; A. M. R. have भणसि for following भणासि. पेक्खिदुं G.; पेखिदुं P. which has °मीति for °मित्ति; G. om. त्ति and R. has इच्छम्मित्ति. B. repeats पसीददु. E. has पेखीयदु twice; P. पेक्खदु.

[१]अट्ठाणं खु एदम् । ता जइ कोदूहलं एहि एदस्सिं आवासे दंसेमि । किं भणासि—'एदं खु भट्टिणो अमच्चरक्खसस्स गेहम् । णत्थि [२]अह्मारिसाणं इह पवेसो' त्ति । तेण हि गच्छदु अज्जो । मम उण [३]जीविआए पसादेण अत्थि एत्थ पवेसो । कधं एसो वि अतिक्कन्तो । (क) (स्वगतम् । संस्कृतमाश्रित्य ।) अहो आश्चर्यम्[४] । चाणक्यमतिपरिगृहीतं चन्द्रगुप्तमवलोक्य[५] विफलमिव राक्षसप्रयत्नमवगच्छामि । राक्षसमति[६]परिगृहीतं मलयकेतुमवलोक्य चलितमिवाधिराज्याच्चन्द्रगुप्तमवगच्छामि कुतः[७] ।

---

खलु भर्तुरमात्यराक्षसस्य गृहम् । नास्त्यस्मादृशानामिह प्रवेशः' इति । तेन हि गच्छत्वार्यः । मम पुनर्जीविकायाः प्रसादेन अस्तीह प्रवेशः । कथमेषोऽपि अतिक्रान्तः ।

---

संस्कृतमाश्रित्येति । वस्तुतः स्वस्योत्तमत्वात्स्वगतं संस्कृतवचनम् ।

---

१ अत्थानं B.; अत्थाणं G; for word following B. N. have क्खु. जदि for जइ A. M. P.; जाहि E.; B. adds दे after this; for कोदू° G. E. R. have कोउ°; N. कोऊ°; P. कोदु°; B. E. G. have ता after को-लं. N. has जेव्व before आवासे, पविसिअ after this; G. also has प°; B. has आआसे and पुनराकाशे after दंसेमि. for किं-एदं E. has इदं. २ Before this B. has इध; om. इह after it; for °ह्मा° G.has °ह्म°; N.om. इह following and B. has प्पवेसो after that. B. has तु for दु and N. has ता for तेण हि preceding. B. G. om. ममउण adding (मे G.) मम before पवेसो. R. has मह for मम. ३ P. om ए after जीविआ and has ये for दे in next word; B. and E. have प्पसा°; A. and N.and G. have पसाएण.; A.P. R. have इह for एत्थ; N. has मम before पवे°; E. has पसाणात्थमेइहपवेसो । संस्कृतमाश्रयति । आत्मगतम् । अहो &c; त्ति after पवेसो in B.E. N. G; A. reads कहं; G. कथं; अव° A.;अदि° N.; अवि° P; M. R. om. कधं-°क्कन्तो; A. P. have सविस्मयम् after this; R. om. स्वगतम् and G. has आश्चर्यं after स्व° omitting अहो आश्चर्यम्. B. reads दिशोवलोक्य° सं…स्वग°. ४ M. repeats this. ५ A. P. G. N. have अवेक्ष्य for अवलोक्य. ६ R. M. om. मति. B. adds च after परिगृहीतं; °मवेक्ष्य G. N.; G. N. also have राज्यात् after this omitting अधिराज्यात्.; A. om. all from राक्षस to गच्छामि. P. reads राक्षसमवेक्ष्य विफलमिव चाणक्यप्रयत्नमवगच्छामि. ७ B. and M. have तथाहि for this.

कौटिल्यधीरज्जुनिबद्धमूर्तिं
मन्ये स्थिरां मौर्यनृपस्य[1] लक्ष्मीम् ।
उपायहस्तैरपि[2] राक्षसेन
निकृष्यमाणामिव[3] लक्षयामि ॥ २ ॥

तदेवमनयोः बुद्धिशालिनोः सुसचिवयोर्विरोधे[4] संशयितेव नन्दकुललक्ष्मीः[5] ।

विरुद्धयोर्भृशमिह मन्त्रिमुख्ययो-
र्महावने वनगजयोरिवान्तरे[6] ।
अनिश्चयाद्गजवशयेव भीतया
गतागतैर्ध्रुवमिह[7] खिद्यते श्रिया ॥ ३ ॥

तद्यावदमात्यराक्षसं[8] पश्यामि । (इति परिक्रम्य स्थितः ।)

---

'कौटिल्यधीरज्जुनिबद्धमूर्तिम्' इत्यत्र रूपकानुप्राणिता उत्प्रेक्षा ॥२॥

अनिश्चयादिति । अनिश्चयादन्यतरविजयानिर्धारणात् । अत्रोपमानुप्राणितोत्प्रेक्षा । इयं प्राप्त्याशा—'उपायापायशङ्काभ्यां प्राप्त्याशा कार्यसंभवः' इति लक्षणात् । कौटिल्यधीरज्जुनिबद्धेति उपायशङ्का राक्षसेन निकृष्यमाणा इति अपायशङ्का ताभ्यां कार्यस्य मौर्यश्रीस्थैर्यस्य संभवः कादाचित्कत्वेन संभावना । विराधराक्षसयोर्महती संवादकथा पताका—'प्रतिपाद्य कथाङ्गं स्यात्पताका व्यापिनी कथा' इति लक्षणात् । अनयोः संबन्धादयं गर्भसंधिः ॥ ३ ॥

तद्यावदिति । इदमङ्कास्यम्—'अङ्कान्तपात्रैरङ्कास्यमुत्तराङ्कार्थसूचना' इति लक्षणात् । पूर्वाङ्कान्ते चाणक्येन मद्बलेन विगाहमानमिति राक्षसकृ-

---

१ B. E. N. G. have कुलस्य for नृपस्य. २ G. has इह for अपि. ३ निःकृ°. G. E.; निष्कृ. A. M.; विकृ B. ४ सुनयशा°. E. B.; E. om. सु in सुस°. ५ E. adds राज्य after कुल; G. has इयं for नन्द; after लक्ष्मीः B. G. E. add लक्ष्यते। कुलः; N. लक्ष्यते। यतः; A. and P. simply यतः. ६ R. and M. have अन्तिके for अन्तरे. ७ B. has भृश for ध्रुव; R. has इव for इह. ८ B. and G. add अहम् after यावत्. B. and G. and E. om. इति &c.; R. and M. add द्वारि before स्थितः.

(ततः प्रविशत्यासनस्थः[1] पुरुषेणानुगम्यमानः सचिन्तो राक्षसः ।)

राक्षसः—(सबाष्पम्[2] ।) कष्टं भोः, कष्टम् ।

वृष्णीनामिव नीतिविक्रमगुणव्यापारशान्तद्विषां
नन्दानां विपुले कुलेऽकरुणया नीते नियत्या क्षयम् ।
चिन्तावेशसमाकुलेन मनसा रात्रिंदिवं जाग्रतः
सैवेयं मम चित्रकर्मरचना भित्तिं विना वर्त्तते ॥ ४ ॥

अथवा[3] ।

नेदं विस्मृतभक्तिना न विषयव्यासङ्गरूढात्मना[4]
प्राणप्रच्युतिभीरुणा न च मया नात्मप्रतिष्ठार्थिना[5] ।
अत्यर्थं परदास्यमेत्य निपुणं नीतौ मनो दीयते
देवः स्वर्गगतोऽपि शात्रववधेनाराधितः[6] स्यादिति ॥ ५ ॥

---

तस्य विगाहनस्य नीतिप्रयोगस्यास्मिन्नङ्के वक्ष्यमाणस्य सूचनात् । यद्वा अङ्कावतरणम्—'यत्र स्यादुत्तराङ्कार्थः पूर्वाङ्कार्थानुसंगतः । असूचिताङ्गपात्रं तदङ्कावतरणं मतम् ॥' इति लक्षणात् । अत्र वक्ष्यमाणस्य क्षपणकशकटदासादिनिग्रहस्य पूर्वाङ्कार्थानुसंगतत्वादाहितुण्डिकप्रवेशस्यासूचनाच्च ।

वृष्णीनामिति । नीतिविक्रमरूपौ गुणौ तयोर्व्यापारेण प्रयोगेण शान्ता गमिता ण्यर्थोऽन्तर्भावितः द्विषो यैरिति बहुव्रीहिः । अकरुणया नियत्या दैवेन । सैवेयं नन्देषु जीवत्सु यादृशी तादृश्येव चित्रकर्मरचना विचित्रपौरुषव्यापारः भित्तिमाश्रयं विना वर्त्तते स्वामिनो विनैव मुधा व्याप्रिय इति खेदः ॥ ४ ॥

नेदमिति । विषयव्यासङ्गो विषयोपभोगप्रवणता । स्वर्गगतस्वाम्याराधनेच्छया नीतौ मनो दीयते न पूर्वोक्तहेतुभिरित्यर्थः । इदं तत्त्वानुकीर्त्तनं मार्गः ॥ ५ ॥

---

१ स्वभवनगतः after this B. E. N. G; after अनुग° G; E. has सचिन्तः here before पु°. २ B. and E. add before this ऊर्ध्वमवलोक्य. ३ om. in M. ४ व्यापार for व्यासङ्ग in B. मूढ for रूढ B. E. N. G. P. ५ °प्रतिष्ठेच्छुना R. M. ६ ° वधैरारा°. P.

(आकाशमवलोकयन् सास्रम् ।) [१]भगवति कमलालये, भृशमगुणज्ञासि । कुतः ।

आनन्दहेतुमपि देवमपास्य [२]नन्दं
[३]सक्तासि किं कथय वैरिणि मौर्यपुत्रे ।
दानाम्बुराजिरिव गन्धगजस्य नाशे
तत्रैव किं न चपले प्रलयं गतासि ॥ ६ ॥

अपि च [४]अनभिजाते,

पृथिव्यां किं दग्धाः प्रथितकुलजा भूमिपतयः
पतिं पापे[५] मौर्यं यदसि कुलहीनं वृतवती ।
प्रकृत्या[६] वा काशप्रभवकुसुमप्रान्तचपला
पुरन्ध्रीणां प्रज्ञा पुरुषगुणविज्ञानविमुखी ॥ ७ ॥

अपि च अविनीते, तदह[७]माश्रयोन्मूलनेनैव त्वामकामां करोमि[८] । (विचिन्त्य ।) मया तावत्सुहृत्तमस्य चन्दनदासस्य गृहे[९] गृहजनं

---

आनन्दहेतुमिति । स्पष्टम् ॥ ६ ॥

दुःखावेशेन अनभिजाते इत्यादिगालनम् । अभिजाताः कुलीनाः ।

पृथिव्यामिति । पुरन्ध्रीणामित्यर्थान्तरन्यासोऽलंकारः—'उक्तिरर्थान्तरन्यासः स्यात्सामान्यविशेषयोः' इति । भगवति कमलालय इत्यादि राक्षसस्य वितर्कप्रतिपादनं वाक्यं रूपं नामाङ्गम् ॥ ७ ॥

विचिन्त्येति । आश्रयोन्मूलनहेतुमुपायं विचिन्त्य तमेव प्रपञ्चयति—मया तावदित्यादिना ।

---

१ R. adds हा before this. २ नन्दमपास्य देवं R. ३ रक्ता B. N. G.; दुःकुल for वैरिणि E. ४ हे before this G. ५ पापं E.; कृत° for वृत° B. E. ६ प्रकृत्यैवाका°. R. M. ७ G. adds अयम् after अहम्. ८ °मीति G. ९ om. G. which also has निःक्षि° in the next word but one; निःक्रामता for निर्गच्छता E.

निक्षिप्य नगरान्निर्गच्छता न्याय्यमनुष्ठितम्। कुतः[1]। कुसुमपुराभियोगं प्रति अनुदासीनो राक्षस इति तत्रस्थानामस्माभिः सहैककार्याणां देवपादोपजीविनां नोद्यमः शिथिलीभविष्यति[2]। चन्द्रगुप्तशरीरमभिद्रोग्धुमस्मत्प्रयुक्तानां तीक्ष्णरसदायिनामुपसंग्रहार्थं परकृत्योपजापार्थं[3] च महता कोशसंचयेन स्थापितः शकटदासः। प्रतिक्षणमरातिवृत्तान्तोपलब्धये तत्संहतिभेदनाय च व्यापारिताः सुहृदो जीवसिद्धिप्रभृतयः। तत्किमत्र[6] बहुना।

इष्टात्मजः सपदि सान्वय एव देवः
शार्दूलपोतमिव यं परिपोष्य नष्टः।
तस्यैव बुद्धिविशिखेन भिनद्मि मर्म
वर्मीभवेद्यदि न दैवमदृश्यमानम्॥ ८॥

---

चन्द्रगुप्तेत्यादि। तत्संहतयो भद्रभटादयः जीवसिद्धिना भेदिता इत्यस्य भ्रमः। इदं प्रकृतोत्कर्षाभिधानमुदाहरणं राक्षसेन प्रकृतकार्यस्योत्कर्षाभिधानात्।

इष्टात्मज इति। इष्टा आत्मजा यस्येति हेतुगर्भविशेषणम्। निकृष्टक्षेत्रजातमपि यं मौर्यं इष्टात्मजत्वात्प्रियापत्यत्वादुत्तमक्षेत्रजापत्यवत् परिपोष्य नष्टः। स्वपोषकघातकत्वेन शार्दूलपोतदृष्टान्तः। तस्यैव मौर्यस्य मर्म बुद्धिविशिखेन भिनद्मि भेत्स्यामि यदि दैवं न वर्मीभवेत्। वर्मरूपकं रक्षकं न भवेद्यदि तदा भिनद्मीत्यन्वयः। अदृश्येति। दैवं दृश्यं चेत्तदपि प्रतिकर्तुं शक्नुयामिति भावः। अत्र मया तावदित्यारभ्यादृश्यरूपमित्यन्तेन राक्षसस्योपायापायशङ्के॥ ८॥

---

१ किं कारणमिति instead of this in B. E. N. G; G. has नु after प्रति. A. has उदा° for अनुदा° in next word. २ R. B. add इति after this; N. om. अभि in अभिद्रो° and adds यातानाम् before अस्म° and च after it. ३ G. and E. have कृत्योपक्षेपसंग्रहार्थं च. ४ कोष B. R. M. ५ P. om. अन्त. B. E. N. read भेदाय; E. has मया for the च following. ६ P. om. अत्र. ७ एष P. E. ८ °पुष्य. B. G. N. ९ मर्मी° P.; भवेन्नजदि for भवेद्यदि न G.; °मदृष्टरूपम् M. R.; °मदृश्यरूपम् A. P; B. has अमृश्यमानम्.

(ततः प्रविशति कञ्चुकी ।)

कञ्चुकी—

कामं नन्दमिव प्रमथ्य जरया[1] चाणक्यनीत्या यथा
धर्मो मौर्य इव क्रमेण[2] नगरे नीतः प्रतिष्ठां मयि ।
तं संप्रत्युपचीयमानमनु[3] मे लब्धान्तरः सेवया
लोभो राक्षसवज्जयाय यतते जेतुं न शक्नोति च ॥ ९ ॥

(परिक्रम्योपसृत्य[4] च ।) इदममात्यराक्षसस्य गृहम् । प्रविशामि । (प्रविश्यावलोक्य च । ) स्वस्ति भवते ।

राक्षसः—आर्य[5], अभिवादये । प्रियंवदक, आसनमानीयताम् ।

पुरुषः[6]—एदं आसणम् । उपविसदु अज्जो । (क)

(क) इदमासनम् । उपविशतु आर्यः ।

कामं नन्दमिति । यथा चाणक्यनीत्या नन्दं प्रमथ्य कुसुमपुरे मौर्यः प्रतिष्ठापितः तद्वज्जरसा कामं विषयाभिलाषमुपमर्द्य मयि धर्मः प्रतिष्ठापितः। वार्द्धके विषयवैराग्ये कामं विहाय धर्ममेव सेवितुमुत्सहे इति भावः । संप्रति मलयकेतुसेवया लब्धान्तरः लब्धावसरः राक्षसः यथा तमुपचीयमानं वर्द्धिष्णुं मौर्यमनु लक्ष्यीकृत्य जयाय मौर्यजयायेत्यर्थः । 'लक्षणेत्थंभूत–' इति कर्मप्रवचनीयेनानुना योगे द्वितीया । यतते जेतुं च न शक्नोति न शक्ष्यति चाणक्यनीतेः प्रबलत्वात् । एवं सेवया कुलाचारादावश्यकत्वेन गले पतितया राजकुलसेवया लब्धावसरःमे मम लोभःसेवाविषयोऽभिलाषः वार्द्धकोचितस्य धर्मस्य जयाय यतते जेतुं न शक्नोति च । कुलाचारतया यथाशक्ति राजकुलं सेवमानोऽपि वार्द्धकोचितं शमदमादिकं धर्मं

१ जरसा N.; यया for यथा M. R. २ प्रसह्य M. R. ३ B. E. G. have अपि for अनु; तं for च at end P. ४नाट्येन परिक्रम्य instead of प...च and यावत् before प्रवि G. agrees om. स्य in राक्षसस्य. N. agrees with text om. स्य. For प्र...च. G. has परिक्रम्योपविश्य; E. परिक्रम्योपसृत्य; B. reads दृष्ट्वा । अयममात्यराक्षसः । परिक्रम्योपसृत्य च । अमात्य स्वस्ति भवते. ५ E. has अवलोक्य before this; B. G. N. have जाजले after this; B. has आसनमत्रभवत उपनय; N. G. E. आसनमत्रभवतः. ६ B. R. have प्रियं for पुरुष; आसनं for आसणं G. E.

कञ्चुकी—(उपविश्य[1]।) कुमारो मलयकेतुरमात्यं विज्ञापयति। चिरात्प्रभृत्यार्यः[2] परित्यक्तोचितसंस्कार इति पीड्यते मे हृदयम्। यद्यपि सहसा[3] स्वामिगुणाः न शक्यन्ते विस्मर्तुं तथापि मद्विज्ञापनां[4] मानयितुमर्हत्यार्यः। (इत्याभरणानि प्रदर्श्य।) इमान्याभरणानि कुमारेण स्वशरीरादवतार्य प्रेषितानि[5] धारयितुमर्हत्यमात्यः।

राक्षसः—आर्य जाजले, विज्ञाप्यतां[6]मस्मद्वचनात्कुमारः। विस्मृता एव भवद्गुणपक्षपातेन स्वामिगुणाः[7]। किंतु।

न तावन्निर्वीर्यैः परपरिभवाक्रान्ति[8]कृपणै-
र्वहाम्यङ्गैरेभिः प्रतनुमपि संस्काररचनाम्।
न यावन्निःशेषक्षपितरिपु[9]चक्रस्य निहितं
सुगाङ्गे हेमाङ्कं नृवर तव सिंहासनमिदम्॥ १०॥

---

नोपेक्षे इति भावः। 'उपचीयमानमपि' इति पाठे उपचीयमानं जेतुं यतते जयाय न शक्नोतीति व्यवहितान्वयः क्लिष्टः। अनेन कञ्चुकिनिर्वेदेन राक्षसोद्यमस्य चाणक्यनीत्या भावी उपमर्दः सूचितः॥ ९॥

सुगाङ्गेति। सुगाङ्गनामकप्रासादे परपरिभवकर्तृकाक्रान्तिराक्रमणं तेन कृपणैर्दीनैरित्यर्थः। इदमिति बुद्धिस्थपरामर्शः॥ १०॥

---

१ G. E. B. add नाट्येन before this and अमात्य after; कुमारो om. in G. २ आर्यः om. in G; B. E. G. add शरीर after उचित. ३ B. E. G. have सहसा after° गुणाः. ४ मम वि° E; G. om. मानयितुम् which follows. B. has दर्शयित्वा for प्रदर्श्य; G. has इत्याभरणं दर्शयति. E. agrees reading दर्शयित्वा. B. and E. add अमात्य after this. ५ G. has इदमा°...°णंशरी°...र्यंकुमारेणप्रेषितंधार°; E. इ......णं कु...तार्यार्याय प्रेषितंधार°; B. E. N. G. read आर्यः for अमात्यः. ६ B. has मत् for अस्मत्. ७ E. G. have मे for एव and E. has °पातिना for °पातेन; B. reads विस्मृता मया स्वामिगुणास्तव गुणपक्षपातिना. ८ E. has °भवक्रान्त.; R. °भवाक्रान्त. ९ क्षयित° B. N.

कञ्चुकी—अमात्ये[1] नेतरि सुलभमेतत्कुमारस्य । तत्प्रतिमा-न्यतां[2] कुमारस्य प्रथमः प्रणयः ।

राक्षसः—आर्य[3] कुमार इवानतिक्रमणीयवचनो भवानपि । तदनुष्ठीयते[4] कुमारस्याज्ञा ।

कञ्चुकी—(नाट्येन भूषणानि[5] परिधाप्य ।) स्वस्ति भवते । साधयाम्यहम्[6] ।

राक्षसः—आर्य, अभिवादये[7] ।

(कञ्चुकी निष्क्रान्तः[8] ।)

राक्षसः—प्रियंवदक[9], ज्ञायतां कोऽस्मद्दर्शनार्थी द्वारि तिष्ठतीति ।

पुरुषः[10]—जं अमच्चो आणवेदि त्ति । (परिक्रम्य आहितुण्डिकं दृष्ट्वा[11] ।) अज्ज, को तुमम् । (क)

---

(क) यदमात्य आज्ञापयतीति । आर्य, कस्त्वम् ।

---

साधयामीति । प्रायेण ण्यन्तकः साधिर्गमेरर्थे प्रयुज्यते ।

निष्क्रान्त इति । इदं प्रस्तुतोपयोगि समाधानवचनं संग्रहः । प्रस्तुतस्य राक्षसस्योत्साहस्योपयोगित्वात् । यद्वा प्रस्तुतस्य चाणक्योपायरूपस्य बीजस्योपयोगि इदं भूषणदानं समाधानवचनम् । अनुपदमेव राक्षसेन सिद्धार्थकाय पारितोषिकतया दास्यमानानामेषामेव भूषणानां निर्वहणे कूटलेखे उपयोक्ष्यमाणत्वात् ।

---

१ G. and E. add अमात्य before this; N. substitutes it for अमात्ये; N. E. B. add त्वयि after this; E. reads नेतर°; G. नेतद° for the नेतरि which follows; G. E. read कुमारेण for कुमारस्य. २ परिपण्यतां G; प्रथमः om. in G; M. only om. the visarga. ३ om. in R.; इव नाति° M. R.; °वदनाति G; R. G. M. add मे before भवानपि. ४ °यताम् E.; ३ B. [illegible]ज्ञा G. for next word. ५ आभरणानि M; संधार्य for परिधाप्य E. ६ G. o[illegible]ad of [illegible]. ७ जादयाम्यहम् G. ८ Before कञ्चुकी in G; B. has कञ्चु. स्वनियोगं es w[illegible]म्यहमिति सत्कृतो निष्क्रान्तः. ९ G. om. क; B. has कोयमस्मद°; M.R. कोम; B द्वारे; B. E. G. M. om. इति after तिष्ठति. १० B. R. M. have प्रियं. for this throughout; अज्जो B.E.N.; अमज्जो R.; देवो G.; °दि इति G.; °दीति P.; E. om. त्ति; E. has पुरुषः before परिक्रम्य. for which B. E. N. G. read निष्क्रम्य. ११ प्रति for दृष्ट्वा G; B. and N. add णं before अज्ज and G. reads भद्र for अज्ज.

**आहितुण्डिकः**—भद्द, अहं खु आहितुण्डिओ जिण्णविसो णाम। इच्छामि अमच्चस्स पुरदो सप्पेहिं खेलिदुम्। (क)

**पुरुषः**—चिट्ठ जाव अमच्चस्स णिवेदेमि। (राक्षसमुपसृत्य।) अमच्च, एसो खु सप्पजीवी इच्छदि सप्पं दंसेदुम्। (ख)

**राक्षसः**—(वामाक्षिस्पन्दनं सूचयित्वा आत्मगतम्।) कथं प्रथममेव सर्पदर्शनम्। (प्रकाशम्।) प्रियंवदक, न नः कौतूहलं सर्पेषु। तत्परितोष्य विसर्जयैनम्।

**प्रियंवदकः**—तथा। (इत्युपसृत्य।) अज्ज, एसो खु दे दंसणकज्जेण अमच्चो पसादं करेदि। ण उण सप्पदंसणेण। (ग)

---

(क) भद्र, अहं खल्वाहितुण्डिको जीर्णविषो नाम। इच्छाम्यमात्यस्य पुरतः सर्पैः खेलितुम्।

(ख) तिष्ठ यावदमात्यस्य निवेदयामि। अमात्य, एष खलु सर्पजीवी इच्छति सर्पं दर्शयितुम्।

(ग) आर्य, एष खलु ते दर्शनकार्येणामात्यः प्रसादं करोति। न पुनः

---

कथं प्रथममेव सर्पदर्शनमिति शङ्कारूपः संभ्रमः।

---

१ E. has जिनबिल्वोनाम; G. om. this; P. has जिण्ण°. For इच्छामि which follows R. P. read इच्छम्मि; A. M. इच्छेमि. २ B. N. have रक्खस after अमच्च; E. has पुरिओ for पुरदो. ३ G. adds दाव before this; A. and E. substitute it for जाव. ४ B. E. have अज्ज; P. M. R. om. खु; B. N. read next word as सप्पोपजीवीः; M. R. read दंसिदुं; for सप्पं...दुं. N. has सप्पेहिं खेलिउं; E सप्पेहिं खेलिदुं; G. सप्पेहिं खेलिदुं; B. सप्पेहिं अमच्चस्सपुरदो खेलिदुं. ५ स्पन्दं B.E. (which has also क्ष for क्षि); M. G. E. read स्वग° for आत्म°. ६ G. कथमेव; R. कथं प्रथमं मे.; R.and E. have भद्र before प्रियं; कुतू°. B. E.; B. adds अस्ति after this; and it and G. have सर्पदर्शने for सर्पेषु; G. and E. read मे for नः preceding कौतू°.; G. has इतः for तत्. ७ B. has जं अज्जो आणवेदि। निष्क्रम्य आहितुण्डिकमुपसृत्य; E. agrees omitting निष्क्रम्य and reading यं अय्यो; G. has जं देवो आणवेदि इति निःक्रम्याहितुण्डिकं प्रति; भद्द for अज्ज B. E; E. reads फलेण for कज्जेण; G. फलेण ते; N. has अदंसणेण for दं-ज्जेण. ८ G. has पुण for उण and G. and E. om. सप्प; B reads अमच्चो अदंसणेण प्रसादं करेदि ण उण दंसणेण.; R. संदंसणेण for सप्पदं°.

**आहितुण्डिकः**—भद्दमुह[1], विण्णवेहि अमच्चं ण केवलं अहं सप्पजीवी पाउडकवी क्खु अहम् । ता जइ मे दंसणेण अमच्चो पसादं ण[2] करेदि ता एदं पत्तअं वाचेदु त्ति । (क)

**प्रियंवदकः**—(पत्रं[3] गृहीत्वा राक्षसमुपसृत्य ।) अज्ज, एसो खु अमच्चं विण्णवेदि णं[4] केवलं अहं सप्पजीवी पाउडकवी खु अहम् । ता जइ मे अमच्चो दंसणेण पसादं ण करेदि तदो एदं वि दावं[5] पत्तअं वाचेदु त्ति । (ख)

---

सर्पदर्शनेन ।

(क) भद्रमुख, विज्ञापयामात्यं न केवलमहं सर्पजीवी, प्राकृतकविः खल्वहम् । तस्माद्यदि मे दर्शनेनामात्यः प्रसादं न करोति तदा एतत्पत्रकं वाचयत्विति ।

(ख) आर्य, एष खल्वमात्यं विज्ञापयति न केवलमहं सर्पजीवी प्राकृतकविः खल्वहम् । तस्माद्यदि मे अमात्यो दर्शनेन प्रसादं न करोति तदा एतदपि तावत्पत्रकं वाचयत्विति ।

---

१ B. E. N. G. om. मुह; R. reads °मुख; B.E.N. G. after विण्णवेहि add मम (मह G.) वअणेण (वच° E.); B.E. read न for ण.; B.N. read सप्पोपजीवी; E. om. अहम्; the next word is read as पाउय in E.; पाउअ in B.G.N.; for कवी P. and G. read कवि; R. कई and N. कइ; मम for मे B.; om. in G; for what follows A. reads अमच्चो दंसणपसादं ण &c.; N. P. अ...णेण प° &c. २ न E.; om. in M. and R.; तदो for ता A. N.; P. reads एतं for following एदं.; B. has पि after एदम्; E. has तु; A. विदाव and N. वि; B. and N. read वाचेदुंपसीददुत्ति; E. agrees reading य for द. ३ पत्रकम् E; G. om. प-त्वा; अमच्च for अज्ज B. E. N. G.; खु om. in F; for next word E. has सप्पजीवी; B. N. आहितुण्डिओ which G. adds before अमच्चम्. ४ न E. which omits अहम् after केवलम्.; B. reads सप्पोपजीवी after this; R. reads पाउडकई; B. N. पाउअकवी; E. पतियुकवी; G. पाउअकवि; अहं om. in P. M. R; R. A. om. °णे°; R. M. om. ण before करे°; E. has न; ता for तदो B;E. om. it. ५ पि B.; पिदाव E.; om. G; next word E. reads पत्तयं; B.N. read वाचेदुं पसीददुत्ति; E. agrees om. त्ति; G. वाचिअप°.

**राक्षसः**—([1]पत्रं गृहीत्वा वाचयति ।)

पाऊणं[2] निरवसेसं कुसुमरसं अत्तणो कुसलदाए ।

जं उग्गिरेइ[3] भमरो अण्णाणं कुणइ तं कज्जं ॥ ११ ॥ (क)

(विचिन्त्य[4] स्वगतम् ।) अये, कुसुमपुरवृत्तान्तज्ञो भवत्प्रणिधि-रिति गाथार्थः । कार्यव्यग्रत्वान्मनसः प्रभूतत्वाच्च प्रणिधीनां विस्मृ-तम् । इदानीं स्मृतिरुपलब्धा । व्यक्तमाहितुण्डिकच्छद्मना विराधगु-प्तेनानेन[5] भवितव्यम् । (प्रकाशम् ।) प्रियंवदक, प्रवेशयैनम् । सुक-विरेषः । श्रोतव्यमस्मात्सुभाषितम् ।

**प्रियंवदकः**—तथा[6] । (इत्याहितुण्डिकमुपसृत्य ।) उपसप्पदु अज्जो । (ख)

---

(क) पीत्वा निरवशेषं कुसुमरसमात्मनः कुशलतया ।
यदुद्गिरति भ्रमरः अन्येषां करोति तत्कार्यम् ॥

(ख) उपसर्पतु आर्यः ।

---

अये, कुसुमपुरवृत्तान्तज्ञ इति । इयं संचिन्तितार्थप्राप्तिः क्रमः । पूर्वं द्वारि कस्तिष्ठतीति कुसुमपुरवृत्तान्तहरचारगमनस्य संचिन्तितस्य प्राप्तेः ।

कार्यव्यग्रत्वादिति । इष्टजनानुसंधानरूपमधिबलमङ्गम् ।

व्यक्तमाहितुण्डिकेति । इदं लिङ्गादभ्यूहनमनुमानमङ्गम् ।

---

१ पत्रकं E. After गृहीत्वा E. adds स्वगतम्. २ पाउण B. M. E.; पातुण P.; कौसुम° M. ३ उग्गिरदि B.; उग्गिरंति E. (भमरा); G. has ज्ज for जं preceding this. B.E.N.G. have तं before अण्णाणं and not before कज्जं; ति for इ in कुणइ A. P.; यि G. ४ B. G. have राक्षस for this; E. om. this and next word; M. R. read आत्म for स्व; N. has राक्ष° । अये कुसुमरसम् । आँ ततो भवत्प्रणिधिरिति गाथार्थः; B. E. G. add अहम् after °ज्ञो and G. has त्वत् for भवत्; B. E. G. add a च before इति. E. N. add आ before कार्य°; B. आः. ५ B. has before this कुसुमपुरादागतेन; G. om. अनेन after this. ६ B. E. N. G. read जं अज्जो (G. देवो; E. अमच्चो) आणवेदित्ति (इति G.N.) निष्क्रम्य (निः क्र° G. N.; omitted in B.) आहि° । (सप्पतु in G.)

आहितुण्डिकः—(नाट्येनोपसृत्य[1] विलोक्य च स्वगतम् । संस्कृतमाश्रित्य ।) अयममात्यराक्षसः[2] । स एषः

वामां बाहुलतां निवेश्य शिथिलं[3] कण्ठे निवृत्तानना

स्कन्धे दक्षिणया बलान्निहितयाप्यङ्के पतन्त्या मुहुः ।

गाढालिङ्गनसङ्गपीडितमुखं[4] यस्योद्यमाशङ्किनी

मौर्यस्योरसि नाधुनापि कुरुते वामेतरं श्रीः स्तनम् ॥ १२ ॥

(प्रकाशम् ।) जेदु अमच्चो[5] । (क)

राक्षसः—( विलोक्य ।) अये विराध[6]– (इत्यर्धोक्ते ।) ननु

(क) जयतु अमात्यः ।

वामामिति । अनुरागबलात्स्कन्धे निहितयापि यदुद्यमभयान्मुहुरङ्के पतन्त्या दक्षिणया बाहुलतयोपलक्षित इति शेषः । गाढालिङ्गनसङ्गेनासत्तया पीडितमुखं चिपिटीकृतचूचुकं यथा तथा चन्द्रगुप्तेऽत्यन्तमनुरक्तापि राक्षसोद्यमाशङ्किनी सती स्वाभिलषितं गाढालिङ्गनरूपमुपभोगं न संपादयतीति संभोगाभिलाषः शृङ्गारः । अत्र गाढालिङ्गनाकरणस्य यदुद्यमाशङ्कित्वेन समर्थनात्काव्यलिङ्गमलंकारः । 'समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम्' इति लक्षणात् ।

अये विराध इति परिजनं प्रति रहस्यगोपनार्थमर्द्धोक्तिः । प्ररूढश्मश्रु-

१ °सृत्याव° B. E; G. om. च and G. E. have आत्म for स्व omitting संस्कृ°–° त्य; B. also om. this; A. P. have it before स्व°; R. om. च स्व°. २ G. E. B. add अये before अयम्; B. E. add तिष्ठति । संस्कृतमाश्रित्य after राक्षसः; N. only adds तिष्ठति; R. and M. have य एषः for स एषः; G. omits it and E. has यः स एषः. ३ शिथिलां E.; विवृ°. B.; वक्र्°. G.; ४ सुखं B. ५ जअदु जअदु अमच्चो B.; जयदु २ देवो अ G.; जयदु २ अज्जो E.; जयदु जयदु अज्जो अमच्चो N; A. has जेदुअज्जो. ६ G. M. and N. add गुत्त after this; P. om. नु in ननु and has स्स for श्म in श्मश्रुः; B. after °क्ते has विरूढस्मृतिः; G. विरूढस्सश्रो; E. विरूढस्सधुः; N. विरुस्सत्तो.

प्ररूढश्मश्रुः । प्रियंवदक, [1]भुजंगैरिदानीं विनोदयितव्यम् । तद्विश्रम्यतामितः परिजनेन । त्वमपि [2]स्वाधिकारमशून्यं कुरु ।

प्रियंवदकः—तथा । ([3]इति सपरिवारो निष्क्रान्तः ।)

राक्षसः[4]—सखे विराधगुप्त, इदमासनम् । आस्यताम् ।

(विराधगुप्तो नाट्येनोपविष्टः ।)

राक्षसः—(नि[6]र्वर्ण्य ।) अये, देवपादपद्मोपजीविनोऽवस्थेयम् । (इति रोदिति ।)

विराधगुप्तः—अलम[7]मात्य शोकेन । नातिचिरादमात्योऽस्मान् [8]पुरातनीमवस्थामारोपयिष्यति ।

राक्षसः—सखे[9], वर्णय कुसुमपुरवृत्तान्तम् ।

---

रिति चोक्तवाक्यस्यान्यथाकरणेन पूरणम् । विराधप्रवृद्धश्मश्रुरित्येककरणम् । विकृतो राधो वेषः तद्रूपाणि प्ररूढानि श्मश्रूणि यस्य ।

स्वाधिकारमशून्यमिति परप्रवेशनमदत्वा द्वारि अवहितस्तिष्ठेत्यर्थः ।
सखे वर्णय इति इयं व्यापिनी कथा पताका ।

---

१ भुजगै° A. P. N.; °विनोदयामः B. N.; °दः E; °दस्तव G.; °श्राम्य° M. P. R; B. om. इतः; G. reads मत् for it; N. नः. २ स्वमधि° for स्वाधि° B.G.E. ३ B. E. N. G. read जं अमच्चो (देवो G. अय्यो E.) आणवेदि (दु E.) त्ति (इति G.) सपरिजनो निष्क्रान्तः. G. E. read last word as निःक्रान्तः. ४ E. has विलोक्य here. ५ यदाज्ञापयत्यमात्यः before this in B. N; G. E. agree, adding इति after अमात्यः; G. has °इय for °ष्टः. ६ सखेदम् B.N. before नि°.; G. has सबाष्पम् after it; E. has simply निर्वर्ण्यताम्; अहो for अये B. N; G. has नन्द for it.; R. G. E. om. पद्म; B. E. N. G. add जनस्य after °जीविनो; B. has इयम् before अवस्था; G. E. N. om. इयम्. ७ M. R. read अलमलम्°; B.E.G. have अमात्य अलम् &c. ८ B. has नूनम् before पुरा; E. पुनः. ९ B. E. add विराधगुप्त here; B. E. and G. add इदानीम् after वर्णय.

**विराधगुप्तः**—अमात्य, विस्तीर्णः[1] खलु कुसुमपुरवृत्तान्तः । तत्कुतःप्रभृति वर्णयामि[2] ।

**राक्षसः**—सखे, चन्द्रगुप्तस्यैव[3] तावन्नगरप्रवेशात्प्रभृति अस्मत्प्रयुक्तैः[4] तीक्ष्णरसदायिभिः किमनुष्ठितमित्यादितः श्रोतुमिच्छामि ।

**विराधगुप्तः**—एष कथयामि । अस्ति तावच्छकयवनकिरातकाम्बोजपारसीकबाह्लीक[5]प्रभृतिभिश्चाणक्यमतिपरिगृहीतैश्चंद्रगुप्तपर्वतेश्वरबलैरुदधिभिरिव[6] प्रलयोच्चलितसलिलैः समन्तादुपरुद्धं कुसुमपुरम् ।

**राक्षसः**—(शस्त्रमाकृष्य[7] ससंभ्रमम् ।) अयि, मयि स्थिते कः कुसुमपुरमुपरोत्स्यति[8] । प्रवीरक प्रवीरक, क्षिप्रमिदानीम् ।

प्राकारं[9] परितः शरासनधरैः क्षिप्रं परिक्रम्यतां
द्वारेषु द्विरदैः प्रतिद्विप[10]घटाभेदक्षमैः स्थीयताम् ।

---

अस्तीति क्रियाया वाक्यार्थः कर्त्ता । प्रवीरकस्तदानींतनः संनिहितोऽनुचरः ।

प्राकारमिति । शत्रुबलस्य दुर्बलत्वकथनं सहानुयायिनां प्रोत्साहनार्थम् । इदं रोषसंभ्रमवचनं तोटकम् । अयं वीररसः स्थायीभावः—'विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः । आनीयमानः स्वादुत्वं स्थायीभावो रसः स्मृतः ॥'

---

१ B. E. G. om. खलु; B. E. N. add आज्ञापय before कुतः; G. has आज्ञापयतु; M. has ततः for तत्. २ B. G. have कथयामि; E. कथयामीति. ३ B. om. एव.; N. om. व only. ४ मत् for अस्मत् B. E; B. has also प्रणिधिभिः for प्रयुक्तैः. In the word following G. and E. read °रसदैः for °रसदायिभिः; E. om. आदितः. ५ P. and A. om. पारसीक; G. and N. om. बा-क; R. and M. read बा-क before पा-क. ६ पर्वतक G; प्रलयकालचलितसलिलसंचयैः B. N. G; E. has गम्भीरैः for संचयैः. ७ E. reads ससं°...शस्त्रमाकृष्य.; M. has उपसृज्य for आकृष्य; B. G. om. अयि; E. reads आः. ८ °मवरो° for °मुपरो° B.; A. P. om. next word; G. has वीरक वीरक and adds इति after रोत्स्यति; R. has प्रवीरः; R. M. add सर्वतः after क्षिप्र°. ९ प्राकारान् B.; °रः E.; परिक्षिप्यताम् B. G.; प्रतिक्षिप्य° E. १० पर for प्रति B. G. E.

[1]त्यक्त्वा मृत्युभयं प्रहर्तुमनसः शत्रोर्बले दुर्बले
ते निर्यान्तु मया सहैकमनसो येषामभीष्टं यशः ॥ १३ ॥

**विराधगुप्तः**—अमात्य, अलमावेगेन[2]। वृत्तमिदं वर्ण्यते।

**राक्षसः**—(निःश्वस्य[3]।) कष्टं वृत्तमिदम्। मया पुनर्ज्ञातं स एवायं काले[4] इति। (शस्त्रमुत्सृज्य।) हा देव नन्द, स्मरामि ते राक्षसं प्रति प्रसादातिशयम्। त्वमत्र सङ्ग्रामकाले

यत्रैषा मेघनीला चरति[5] गजघटा राक्षसस्तत्र याया-
देतत्पारिप्लवाम्भःप्लुति तुरगबलं वार्यतां राक्षसेन।
पत्तीनां राक्षसोऽन्तं[6] नयतु बलमिति प्रेषयन्मह्यमाज्ञा-
मज्ञासीः प्रीति[7]योगास्थितमिव नगरे राक्षसानां सहस्रम् ॥ १४ ॥

**विराधगुप्तः**—ततःसमन्तादुपरुद्धं कुसुम[8]पुरमवलोक्य बहुदिवसप्रवृत्त[9]मतिमहदुपरोधवैशसमुपरि पौराणां परिवर्त्तमानमसहमाने तस्यामप्यवस्थायां[10] पौरजनापेक्षया सुरङ्गामेत्यापक्रान्ते तपोवनाय

---

पारिप्लवाम्भोवत्समीरणलोलसागरकल्लोलवत् प्लुतिरुड्डीनं यस्य तत् ॥ १४ ॥

---

१ मुक्त्वा B. E. N. G.; शत्रोर्बलं दुर्बलम् E. २ अलममात्यावे° N.; °मिदानीं वर्ण्य°. R.M. ३ B. E. G. om. निःश्वस्य and read कथम् for कष्टम्. ४ G. N. and E. add वर्तते before इति; B. agrees omitting अयम्. M. reads शस्त्रमाकृष्य; B. E. G. add सास्त्रम् after that; सर्वार्थसिद्धे for नन्द E.; M. reads प्रसादा° before राक्ष°; R. omits प्रति, B. E. N. G. read स्मरति ते राक्षसः प्रसादानाम्। यस्त्वमत्र काले. For these last words B. reads यस्त्वेवंविधे काले. ५ चलति. B.E.N; G. reads चलित; °वाम्भप्रतितु°. for °वाम्भःप्लुति तु° G.; धार्यताम् for वार्यताम् B.N.G. ६ राक्षसस्तन्नयतु A.P.; °सोन्तर्न° G.N. ७ स्नेह B.; °सीत्प्रीति° G.; °मिह for° मिव B. G.; B. E. N. G. read after this stanza ततस्ततः. ८ पुष्प for कुसुम B. N. ९ °वृत्तं मह° M.; °वृत्तमह° R. E.; °वसप्रभृतिमह°. G. B. १० B. N. om. अपि.; N. om. सुरङ्गामपेत्य.; M. reads सुरङ्गामेत्यपक्रि°; R. सु.. ... त्यप्रक्रा°; B. सु...मुपेत्यापक्रा°; G. and E. have अपक्रान्ते before सुर°; E. adds तस्मात् before तपोवनाय.

देवे[1] सर्वार्थसिद्धौ स्वामिविरहात्प्रशिथिलीकृतप्रयत्नेषु युष्मद्बलेषु जय[2]घोषणाव्याघातादिसाहसानुमितेष्वन्तर्नगरवासिषु पुनरपि नन्द-राज्यप्रत्यानयनाय सुरङ्गया बहिरपगतेषु[3] युष्मासु चन्द्रगुप्तनिधनाय युष्मत्प्रयुक्तया विषकन्यया घातिते तपस्विनि पर्वतेश्वरे ।

**राक्षसः**—सखे, पश्याश्चर्यम् ।

कर्णेनेव विषाङ्गनैकपुरुषव्यापादिनी रक्षिता
हन्तुं शक्तिरिवा[4]र्जुनं बलवती या चन्द्रगुप्तं मया ।
सा विष्णोरिव विष्णु[5]गुप्तहतकस्यात्यन्तिकश्रेयसे
हैडिम्[6]बेयमिवेत्य पर्वतनृपं तद्वध्यमेवावधीत् ॥ १५ ॥

---

जयघोषणेति । पौरजनापेक्षा अनुमतिः । जयस्याघोषण [illegible] घा-तरूपा कर्त्तव्येत्याज्ञापिते तदकरणं जयघोषणाव्याघातम् । [illegible] नै राजाज्ञाभङ्गादिरूपैरनिष्टाचरणैरनुमितेषु शत्रूपजापदूषित[illegible]षु अन्तर्नगरवासिषु युष्मद्बलेषु सत्सु इत्यन्वयः । अतः परमत्रावस्थानमनुचित-मिति बहिर्गत्वा सुहृद्बलोत्थापनादिना नन्दराज्यप्रत्यानयनाय युष्मासु बहिरपगतेष्वित्यन्वयः ॥

तपस्विनीति । दीने इत्यर्थः ।

कर्णेनेति । कर्णेनार्जुनं हन्तुं बलवती एकपुरुषव्यापादिनी शक्तिरिव चन्द्रगुप्तं हन्तुं या विषाङ्गना मया रक्षितेति व्यवहितान्वयः । श्रीकृष्णवध्यं हैडिम्बेयं घटोत्कचमिव पर्वतकमेत्य प्राप्य तद्वध्यं तेन विष्णुगुप्तेन परिप-णितराज्यार्द्धलुब्धेन वध्यमेवावधीत् ॥ १५ ॥

---

१ R. and M. read देवे before तपो°; त्सुशिथिली° for त्प्रशि° B. २ G. and E. om. जय; A. P. have जया° and M. has घोषण; E. adds ना be-tween °दि and साहसा°; °नुमितान्तर्न°. G. B. N; G. and E. also add नि before वासिषु.; M. om. अपि. ३ सुरङ्गामधिगतेषु B. G. E.; सुरङ्गाभिगतेषु N; A. om. युष्मासु which follows. ४ R. reads इह for इव. ५ चन्द्रगुप्त°. N; प्रीतये for श्रेयसे E. ६ हैडम्बे° G.; °मिवैत्य A. M. P. N.; यद्वध्य° G.

**विराधगुप्तः**—अमात्य[1], दैवस्यात्र कामचारः किं क्रियताम् ।

**राक्षसः**—ततस्ततः[2] ।

**विराधगुप्तः**—ततः[3] पितृवधत्रासादपक्रान्ते कुमारे मलयकेतौ विश्वासिते[4] पर्वतकभ्रातरि वैरोचके प्रकाशिते च चन्द्रगुप्तस्य नन्द-भवन[5]प्रवेशे चाणक्यहतकेन आहूयाभिहिताः सर्व एव कुसुमपुरनि[6]-वासिनः सूत्रधाराः यथा सांवत्सरिकादेशादर्द्धरात्रसमये चन्द्रगुप्तस्य नन्दभवनप्रवेशो भविष्यति । ततः पूर्वद्वारात्प्रभृति संस्क्रियतां राज-भवनमिति । ततः सूत्रधारै[7]रभिहितम्—'आर्य, प्रथममेव देवस्य चन्द्र-गुप्तस्य नन्द[8]भवनप्रवेशमुपलभ्य सूत्रधारेण दारुवर्मणा कनकतोरण-न्यासादिभिः संस्कारविशेषैः संस्कृतं प्रथमराजभवनद्वारं[9]म् । अस्मा-भिरिदानीमभ्यन्तरे संस्कार आधेयः' इति । ततश्चाणक्यबटुना अना-दिष्टेनैव सूत्रधारेण दारुवर्मणा संस्कृतं राजभवनद्वारमिति परितु-

---

सूत्रधाराः शिल्पिनः ।

संस्कारविशेषैरिति । चन्द्रगुप्तोपरि तोरणपातनोद्यमादिरूपैः । अभ्य-

---

१ सखे G; G. and A. read next word as देवस्य;° G. om. अत्र; G. °चारा-द्भक्तिं क्रियताम्; B. N. कामचारः किमत्र क्रियते. २ R. A. om. one ततः. ३ ततः—°केतौ om. in G; M. om. ततः ; B. वधपरित्रा°; A. P. वधादप°; B. N. add कुसुमपुरात् after °क्रान्ते; M. and R. om. कुमारे which follows. ४ B. N. add च here; वैरोचने for वैरोचके M. N; वैरोधके E; च om. in R. G. E. P. ५ E. has वंश for भवन ; °क्येन for क्य...केन G; M. P. G. om. आहूय. ६ M. R. om. नि and B. E. N. G. have सर्व एव after this; सूत्रकाराः for सूत्र-धाराः M; G. om. यथा which follows.; E. has सांवत्सरिकदत्तलग्नवशात्; B. N. have सांवत्सरिकवचनादद्यैवार्द्धरात्र° &c.; G. and E. add अद्य before अर्द्ध and read रात्रि for रात्र; B. N. add एवाभिमतः before चन्द्रः ; वंश for भवन E.; B. E. N. add इति after भविष्यति; for न...रात् G. E. read अन्तः-पुरद्वारप्रवेशात्; M. P. have ततः पूर्वद्वारप्रवेशात्; B. N. have ततः प्रथमद्वारात्. ७ सूत्रकारै° M. here as elsewhere. ८ वंश for भवन E. ९ G. has सत्कृते राजद्वारे; B. संस्कृतं प्रथमराजद्वारम्; N. agrees but reads प्रथमम्; B. E. N. G. read अस्माभिः after इदानीम् which follows, and G. adds अपि before अभ्यन्तरे; °स्कारोविधेय. B. E. N.; °स्कार आभिधेयः G.; A. adds च before चाणक्य; B. G. E. R. om. सूत्रधारेण.

ष्टेनेव[1] सुचिरं दारुवर्मणो दाक्ष्यं प्रशस्याभिहितम्—'अचिरादस्य दाक्ष्यस्यानुरूपं[2] फलमधिगमिष्यसि दारुवर्मन्।'

**राक्षसः**—(सोद्वेगम्।) सखे, कुतश्चाणक्यबटोः परितोषः। अफलमनिष्टफलं वा दारुवर्मणः प्रयत्नमवगच्छामि[3]। यदनेन बुद्धिमोहादथवा राजभक्तिप्रकर्षान्नियोगकालमप्रतीक्षमाणेन[4] जनितश्चाणक्यबटोश्चेतसि बलवान्विकल्पः[5]। ततस्ततः।

**विराधगुप्तः**—ततश्चाणक्यहतकेनानुकूललग्नवशादर्द्धरात्रसमये[6] चन्द्रगुप्तस्य नन्दभवनप्रवेशो भविष्यतीति शिल्पिनः पौरांश्च गृहीतार्थान् कृत्वा तस्मिन्नेव क्षणे पर्वतेश्वरभ्रातरं वैरोचकमेकासने चन्द्रगुप्तेन सहोपवेश्य कृतः पृथ्वीराज्यविभागः[7]।

---

न्तरे संस्कार इति। तीक्ष्णरसदानशयनगृहशयितहननादिरूप इति गूढोऽभिसंधिः।

अनुरूपं फलं वधरूपं फलमिति गूढम्।

राजभक्तीति। राज्ञि सर्वार्थसिद्धौ भक्तिप्रकर्षः वैरिनिधनेन भक्त्यतिशयप्रदर्शनम्। अयमपकारिजनाद्भयमुद्वेगः।

ततश्चाणक्यहतकेनेत्यादि। इदं चाणक्यस्येष्टार्थोपायानुसरणमाक्षेपो नामान्त्यमङ्गम्।

---

१ B. G. E. om. इव; B. E. N. G. read सुचिरम् after दारुवर्मणः (P. reading रुचि° for सुचि°); E. om. दारु°; G. has दारुवर्माणम्.; अभिनन्द्य. B. N.; अभिप्रशस्य G; E. adds इति after दाक्ष्यम्. २ फलं before अनुरूपम् P; G and E. have दारुवर्मन् before फल; N. before अधिग°; M. R. E. add इति at the end of the sentence. ३ °मधिग°. A. P. ४ राजप्रकर्षं नयता कालमप्रतीक्ष्यमाणे &c. G.; प्रकर्षं नियता अभियोगकालमप्रतीच्छमानेन ज° &c. E; प्रकर्षतया वा कालमप्रतीक्ष्यमाणेन ज° N; B. agrees with text reading संजनितः for जनितः. ५ महान् A. P; R. om. one ततः. ६ B. adds अद्य before अर्द्ध.; ७ R. has पृथक् for पृथ्वी; G. has राज्यप्रविभागः; E. राज्यार्द्धप्रविभागः; N. पृथिवीराज्यार्द्धभागः; B. पृथ्वीराज्यार्धभागः.

**राक्षसः**—किंवातिसृष्टः पर्वतकभ्रात्रे वैरोचकाय पूर्वप्रतिश्रुतः राजार्द्धविभागः ।

**विराधगुप्तः**—अथ किम् ।

**राक्षसः**—(स्वगतम् ।) नियतमतिधूर्तेन चाणक्यबटुना तस्यापि तपस्विनः कमप्युपांशुवधमाकलय्य पर्वतेश्वरविनाशेन जनितमयशः प्रमार्ष्टुमेषा लोकप्रसिद्धिरुपचिता । (प्रकाशम् ।) ततस्ततः ।

**विराधगुप्तः**—ततः प्रथममेव प्रकाशिते रात्रौ चन्द्रगुप्तस्य नन्द-भवनप्रवेशे कृताभिषेके किल वैरोचके विमलमुक्तामणिपरिक्षेपविर-चितचित्रपटमयवारबाणप्रच्छादितशरीरे मणिमयमुकुटनिबिडनि-

---

उपचितेति । अभिवर्द्धितेत्यर्थः । किलेत्यलीके । चित्रपटमयेति । 'कञ्चुको वारबाणोऽस्त्री' इत्यमरः । मौलयः संयताः कचाः । ते मुकुटे

---

१ N. has अभिसृष्ट for अतिसृष्ट; E. किमतिसृष्टः; G. किमितिसृष्टः; B. किंचातिसृष्टः. In the word following G. B. have पर्वतेश्वरभ्रात्रे; N. पर्वतभ्रात्रे; G. om. पूर्वं; E. has °श्रुतम्. २ र्द्धप्रविभाग G.; °र्द्धम्. E. ३ B. N. E. add अमात्य before this. ४ आत्म B. E. N. R; G. E. om. चाणक्य; B. N. read धूर्तबटुना. ५ कथमप्यु° R M.; एकान्ते किमप्युपायान्तरवधमाक°. G.; °नाशज° N. G. E. B; °मपयशः R. E; °मयशसः B. N. G. ६ परिहारार्थम् for प्रमार्ष्टुम् G. E. N. B; परिमार्ष्टुम् R; G. has एव for एषा which follows.; E. reads लोकोक्तिरुपरिता for what follows; N. लोकप्रतिपत्तिरुपचरिता; G. has उपचरिता for उपचिता.; R. om. one ततः. ७ प्रकाशीकृते B. N. E. The रात्रौ which follows is om. in B. N. which have अर्द्धरात्रे after चन्द्रगुप्तस्य; G. reads °गुप्तवेशे. ८ B. has च instead of this; N. before it; E. om. it and G. om. किल °चके; N. has not वैरोचने here; B. and N. read हिम before विमल; E. has हिमलमु°; गुण for मणि B. G. E; गण N; B. E. N. G. have उप for वि after परिक्षेप. ९ B. has पट्ट for चित्रपटमय; E. has पट्ट for पट and G. reads परिक्षेपेणोपरचितपट्टमयप्रावरणप्रच्छा°.; E. has बाणवार for वारबाण and N. has वारण; G. om. मय and after मुकुट has मणिबद्ध; E. has बन्ध after मुकुट; N. पटबन्ध and B. पट्टबन्ध.

[1]यमितरुचिरतरमौलौ सुरभिकुसुमदामवैकक्ष्यावभासितविपुलवक्षः-
स्थले परिचिततमै[2]रप्यनभिज्ञायमानाकृतौ चाणक्यहतकादेशाच्चन्द्र-
गुप्तोपवाह्यां चन्द्रलेखां नाम [3]गजवशामारुह्य चन्द्रगुप्तानुयायिना
राजलोकेनानुगम्यमाने देव[4]स्य नन्दस्य भवनं प्रविशति वैरोचके युष्म-
त्प्रयुक्तेन दारुवर्मणा [5]सूत्रधारेण चन्द्रगुप्तोऽयमिति मत्वा तस्योपरि
पातनाय सज्जीकृतं यन्त्रतोरणम् । अत्रान्तरे बहिर्नि[6]गृहीतवाहनेषु
स्थितेषु चन्द्रगुप्तानुयायिषु नृपेषु[7] युष्मत्प्रयुक्तेनैव चन्द्रगुप्तनिषादिना
वर्वरकेण कनकद[8]ण्डिकान्तर्निहितामसिपुत्रिकामाक्रष्टुकामेनावल-
म्बिता करेण कनकशृङ्खलावल[9]म्बिनी कनकदण्डिका ।

राक्षसः—[10]उभयोरप्यस्थाने यत्नः ।

विराधगुप्तः—अथ [11]जघनाभिघातमुत्प्रेक्षमाणा गजवधूरतिज-
वनतया[12] गत्यन्तरमारूढवती । प्रथमगत्यनुरोधप्रत्याकलितमुक्तेन

---

निबिडं नियमिता यस्य । कुसुमदाम्नो वैकक्ष्यमुपवीतत्वेन निधानम् । राक्षसेनैव चन्द्रगुप्तोपांशुवधार्थं तस्य निषादित्वेन हास्तिपकत्वेन वर्वरक-नामा स्वपुरुषो नियोजित इत्यर्थः ।

---

१ B. has नियत for नियमित; वैकक्षका° for वैकक्ष्या° E; °क्षिका B. N. G; B. om. विपुल coming after this. २ °चितदर्शनै° B.; G. °चितै.; P. °मानरूपाकृतौ; G. E. °माने नृपाकृतौ; B. N. चाणक्याज्ञया; E. चाणक्यहतकस्याज्ञया. ३ B. N. नाग° for गज°; E. चन्द्रलेखाभिधानां नागवशाम्; B. N. °धां ना°. ४ B. adds जवेन before this; G. B. read नन्ददेवस्य. ५ om. A. P; B. G. have दारु° after सूत°; मन्यमानेन वैरोचकस्योपरि &c. B. G. E.; मत्वा वै &c. N; B. N. have नि before पातनाय. ६ M. om. नि.; G. has हि for बहिः; R. has वारणेषु for वाहनेषु; G. om. स्थितेषु. ७ भूमिपालेषु B. E. G; G. has वधाय after °गुप्त. ८ B. has दण्ड for दण्डिका; कर्ष्टु B. ९ B. has °लामुखावल°; E. has °लामुखाल°. १० स्वगतम् before this E; B. N. add ततस्ततः at the end of the sentence. ११ G. om. घ; M. om. ज. १२ E. om. न in जवन; B. N. read ततः before प्रथम°.

प्रभ्रष्टलक्ष्यं पतता यन्त्रतोरणेनाकृष्टकृपाणीव्यग्रपाणिरनासादयन्नेव चन्द्रगुप्ताशया वैरोचकं हतस्तपस्वी वर्वरकः । ततो दारुवर्मणा यन्त्रतोरणनिपातनादात्मवधमाकलय्य पूर्वमेवोत्तुङ्गतोरणस्थलमारूढेन यन्त्रघट्टनबीजं लोहकीलकमादाय हस्तिनीगत एव हतस्तपस्वी वैरोचकः ।

राक्षसः—कष्टम् । अनर्थद्वयमापतितम् । न हतश्चन्द्रगुप्तो हतौ वैरोचकवर्वरकौ दैवेन । अथ सूत्रधारो दारुवर्मा कथम् ।

विराधगुप्तः—वैरोचकपुरःसरेण पदातिलोकेनैव लोष्टघातं हतः।

राक्षसः—(सास्रम् ।) कष्टम् । अहो वत्सलेन सुहृदा दारुवर्मणा वियुक्ताः स्मः । अथ तत्रत्येन भिषजा अभयदत्तेन किमनुष्ठितम् ।

---

व्यग्रपाणिरनासादयन्निति । वैरोचकं हन्तुमवकाशमनासादयन्नित्यर्थः । लोष्टघातमिति । लोष्टैर्हत्वा लोष्टघातं हन्तेर्णमुल् ।

---

1 B. E. om. प्र.; N. has च for it.; G. om लक्ष्यम्.; G. E. have उत् for आकृष्ट; B. N. read को after °णी and R. M. have °ण for °णी. 2 °साद्यैव B. N. which have also °गुप्तप्रत्याशया; in next word. G. reads °केन for °कं.; B. and E. have after this दारुवर्मणा. 3 B. G. N. om. नि.; B. G. read पातमात्मविनाशफलमवधार्य; E. N. agree reading आकलय्य for अवधार्य; B. and G. read शीघ्र for पूर्व following. 4 B. N. have स्थान; घटन for घट्टन B. G. N; B. E. N. G. read बीजम् for हेतुम्; P. reads हेतु and B. बीज; R. reads कीलमा°; एव om. in R. M. 5 E. om. तपस्वी. 6 B. E. N. R. have हा before this; B. N. add असौ before हतौ. 7 N. B. have सावेगमात्मगतम् । नैतावुभौ हतौ before दैवेन । and after it वयमेव हताः । प्रकाशम्. For all this G. has न तौ हतौ हता वयमिति । प्रका°; E. has स्वगतम् । न हतौ तौ सर्वथा हता वय मिति । प्रका°; A. M. P. read वर्वरौ for वर्वरकौ; B. N. have स before सूत्र°; क्व for कथम्. B. N. 8 B. °सरै...लोकैर्लो°; N. agrees adding एव before लोष्ट°. For लोकेनैव G. has लोकेनैष; E. om. एव.; M. reads लोष्टघातेन. 9 B. N. add भो कष्टम्; M. कष्टम्; G. E. om. दारु°; G. has विप्रयुक्ताः for following word. 10 तत्र तेन P. R. E; G. om. तत्र; B. has तेन तत्र.

**विराधगुप्तः**—[1]सर्वमनुष्ठितम् ।

**राक्षसः**—(सहर्षम् ।) किं हतो दुरात्मा [2]चन्द्रगुप्तः ।

**विराधगुप्तः**—[3]अमात्य, दैवान्न हतः ।

**राक्षसः**—(सविषादम् ।) [4]तत्किमिदानीं कथयसि सर्वमनुष्ठितमिति ।

**विराधगुप्तः**—अमात्य, कल्पितमनेन योगचूर्णमिश्रितमौषधं[5] चन्द्रगुप्ताय । [6]तत्प्रत्यक्षीकुर्वता चाणक्यहतकेन कनकभाजने वर्णान्तरमुपलभ्याभिहितश्चन्द्रगुप्तः—'[7]वृषल, सविषमिदमौषधं न पातव्यम्' इति ।

**राक्षसः**—शठः खल्वसौ बटुः । अथ [8]स वैद्यः कथम् ।

**विराधगुप्तः**—[9]तदेवौषधं पायितो मृतश्च ।

**राक्षसः**—(सविषादम् [10]।) अहो महान्विज्ञानराशिरुपरतः । अथ तस्य शयनाधिकृतस्य प्रमोदकस्य किं वृत्तम् ।

---

अथ तस्येति । शयनाधिकृतस्य शयनगृहसंस्कारादिना राजप्रलोभनेऽधिकृतस्येत्यर्थः ।

---

१ B. G. E. add अमात्य before this; G. om. अनुष्ठितम्. २ B. अपि नाम सखे हतश्चन्द्रगुप्तहतकः; G. N. अपि सखे हतश्चन्द्रगुप्तहतकः; E. agrees omitting सखे. ३ om. in E. ४ किमिति E. which reads परितुष्टः after this; B. has. परि° after कथ°. ५ R. has चूर्णित for चूर्ण; G. मिश्र for मिश्रित; E. reads विषयोगचूर्णमौष°; B. विषसूर्णमि°. ६ B. G. E. add च after तत्; °नस्य वर्णान्तरं गमनमुप°. E; B. and A. have उपगतम् after वर्णान्तरम्. ७ B. E. repeat वृषल; G. has चन्द्रगुप्तवृषल before this; B. M. R. om. इदम्; E. has न पातव्यं न पातव्यम् before सविषम् and om. all after औषधम्. ८ om. M. G. ९ स खलु वैद्यः before this in B; E. has ततः स खलु वै°; °यित उपरतश्च B.; °यितश्चोपरतश्च N. E. G. १० Om. E; E. B. read next word as अहह; G. omits it. महाकार्यराशि G. N.; B. has भद्र and E. सखे before अथ; G. E. om. अथ and M. om. तस्य.

**विराधगुप्तः**—यदितरेषाम्[1] ।

**राक्षसः**—(सोद्वेगम् ।) कथमिव[2] ।

**विराधगुप्तः**—स[3] खलु मूर्खस्तं युष्माभिरतिसृष्टं महान्तमर्थराशिमवाप्य महता व्ययेनोपभोक्तुमारब्धवान्[4] । ततः कुतोऽयं भूयान्धनागम इति[5] पृच्छ्यमानो यदा वाक्यभेदान्बहूनगमत्तदा चाणक्यहतकेन विचित्रवधेन व्यापादितः ।

**राक्षसः**—(सोद्वेगम्[6] ।) कथमत्रापि दैवेनोपहता वयम् । अथ शयितस्य चन्द्रगुप्तस्य शरीरे प्रहर्तुमस्मत्प्रयुक्तानां राजगृहस्यान्तर्भित्तिसुरङ्गामेत्य[7] प्रथममेव निवसतां बीभत्सकादीनां को[8] वृत्तान्तः ।

**विराधगुप्तः**—अमात्य, दारुणो वृत्तान्तः[9] ।

**राक्षसः**—(सावेगम्[10] ।) कथं दारुणो वृत्तान्तः । न खलु विदितास्ते तत्र[11] निवसन्तश्चाणक्यहतकेन ।

**विराधगुप्तः**—[12]अमात्य, अथ किम् । प्राक् चन्द्रगुप्तप्रवेशाच्छयन-

---

१ आत्मविनाशः B. N. G. २ E. om. इव. ३ सखे for स E.; °रनुसृ° for °रतिसृ° A.P; E. for next word reads प्रभूतमर्थं°; G. महानर्थं°; R. has जाल for राशि. ४ °रब्धः G. E; G. om. following ततः; P. G. om. अयम्; E. has एवम्. ५ B. N. G. E. add तव before इति; B. N. add अयम् after पृच्छ्य°; °नवदत् R. M.; °न कथयत् B. N; E. reads बहून् before वाक्य°; चाणक्यहतकादेशाद्विचित्रेण व° B. E. N. G.; चाणक्येन for चा…हतकेन. P. ६ Om. A. P. R.; सविषादम् M.; वयमेवोपहता दैवेन B. N. E. ७ नरपतिशयनगृहस्यान्तःसुरङ्गायां निवस°. B. N.; नरपतिगृहस्यान्तःसु° &c. as in text G.; नरपतिशयनगृहस्यान्तःसु° &c. as in text E; P. has सताम् for निवसताम्. ८ A.P. को वा वृ°. ९ R.M. om. all from अमात्य here to अथ किम् in next speech but one. १० Om. P; सोद्वे°. G. omitting कथं-न्तः which follows. ११ P. has तु after this; G. has वसन्तः for तत्र-केन; N. om. ते-केन except निवसन्तः; E. has हतकस्य for हतकेन. १२ Om. in B. G. N; B. has after this a speech रा°-कथमिव. ॥ विरा° । प्राक् &c.

गृहं प्रविष्टमात्रेणैव[1] निपुणमवलोकयता दुरात्मना चाणक्यहतकेन क-स्माच्चिद्भित्तिच्छिद्राद्गृहीतभक्तावयवां निष्क्रामन्तीं[2] पिपीलिकापंक्ति-मवलोक्य पुरुषगर्भमेतद्गृहमिति गृहीतार्थेन दाहितं तच्छयनगृहम्[3]। तस्मिंश्च दह्यमाने धूमावरुद्धदृष्टयः प्रथमम[4]भिहितनिर्गमनमार्गमनधि-गम्य द्वारं सर्व एव बीभत्सादयो ज्वलनमुपगम्य तत्रैव नष्टाः ।

राक्षसः—(सास्रम् ।) कष्टं भोः, कष्टम्[5] । सखे, पश्य दैवसं-पदं दुरात्मनश्चन्द्रगुप्तहतकस्य । कुतः ।

कन्या तस्य वधाय या विषमयी गूढं[6] प्रयुक्ता मया
दैवात्पर्वतकस्तया स[7] निहतो यस्तस्य राज्यार्द्धहृत् ।
ये शस्त्रेषु[8] रसेषु च प्रणिहितास्तैरेव ते घातिता
मौर्यस्यैव फलन्ति पश्य[9] विविधश्रेयांसि मन्त्रीतयः ॥ १६ ॥

---

कन्या तस्येति । रसेषु विषेषु । 'शृङ्गारादौ विषे वीर्ये गुणे रागे जले रसः.'

---

१ After प्रा-शात् B. reads प्रविष्टमात्रेणैव शयनगृहे चाणक्येन दुरात्मना सम-न्तादवलोकिते ततस्त्वेकस्माद्भित्ति &c.; N. प्रविष्टमात्रेणैव चाणक्येन शयनगृहं सम-न्तादवलोकितम्। ततोन्यस्माद्भित्ति &c.; G. प्रविष्टमात्रेणैव शयनगृहे दुरात्मनावलो-किते चाणक्यहतकेन ततस्तस्माद्भित्ति &c.; E. प्रविष्टमात्रेणैव शयनगृहं दुरात्मना चा-णक्यहतकेनावलोकितम् the rest as in N. २ E. has गृहीतेनन्नावयवानां पिपी-लिकानां निःक्रामन्तीं प° &c; G.N. om. पङ्क्ति in text. ३ E. has एव; B.N. have अन्तः after तत्; G. om. त-हम्; B. °दृष्टिविषयाः; G. धूमाभिरुद्धदृष्टिविषयाः; N. धूमाभिरुद्धविषयाः; E. धूमनिवहनिरुद्धदृष्टिवि° &c. ४ विहित. M. R; मपिहित. B.; पिहित. G. E. N; R. M. om. निर्ग-मार्ग and सर्व-गम्य; N. G. E. om. निर्ग ...;N. G. read अनुपगम्य and after द्वारम् have तदैव संतापाद्दुरात्मानः सर्व एवोपरताः; E. has निगमनपथम् for द्वारम् and after that सर्वेपि बीभत्सकादय-स्तत्रैव ज्वलिताः; B. om. द्वारम्; adds तत्रैव before ज्वलन and for °गम्य &c. reads °गता उपरताश्च. ५ Om. क...म् R. E. B. M.; G. has सचिन्तः कष्टम्; N. कष्टम्. omitting all up to कन्या; For दु-स्य R. M. have चन्द्रगुप्तस्य; G. has विचिन्त्य पश्य सखे चन्द्रगुप्तस्य दुरात्मनो दैवसंपदः; E. om. दैव and हतक in text; B. has सखे पश्य चन्द्रगुप्तस्य दैवसंपदा सर्व एवोपरताः । सचिन्तम् । सखे दैवसंपदं पश्य &c. as in text. ६ पूर्व. E. ७ विनि° G. E. N. B; °भाक for °हृत् B. and in margin of G. ८ यन्त्रेषु B. ९ तस्य R. M; मे नीतयः for मन्त्रीतयः B. E. N.

**विराधगुप्तः**—अमात्य, तथापि खलु[1] प्रारब्धमपरित्याज्यमेव । पश्य ।

> प्रारभ्यते[2] न खलु विघ्नभयेन नीचैः
> प्रारभ्य विघ्नविहता[3] विरमन्ति मध्याः ।
> विघ्नैः पुनः पुनरपि[4] प्रतिहन्यमानाः
> प्रारब्धमुत्तमगुणा न परित्यजन्ति[5] ॥ १७ ॥

अपि च[6] ।

> किं शेषस्य भरव्यथा न वपुषि क्ष्मां न क्षिपत्येष यत्
> किं वा नास्ति परिश्रमो दिनपतेरास्ते न यन्निश्चलः ।
> किं त्वङ्गीकृतमुत्सृजन्कृपणवच्छ्लाघ्यो[7] जनो लज्जते
> निर्व्यूढं[8] प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम् ॥ १८ ॥

**राक्षसः**—सखे[9], प्रारब्धमपरित्याज्यमिति प्रत्यक्षमेवैतद्भवताम् । ततस्ततः[10] ।

**विराधगुप्तः**—ततः प्रभृति चन्द्रगुप्त[11]शरीरे सहस्रगुणमप्रमत्तश्चा-

---

इत्यमरः । मौर्यस्य नाशार्थं प्रणीता मन्त्रीतयः प्रत्युत तस्यैव श्रेयांसि फलन्तीति पश्य दैवसंपदं चन्द्रगुप्तस्येति पूर्वेणान्वयः ॥ १६ ॥

किं शेषस्येति । कृपणवदुत्सृजन्निति पूर्वेणान्वयः । प्रतिपन्नवस्तुषु अङ्गीकृतवस्तुषु । निर्व्यूढं निर्वाहः भावे क्तः । निर्व्यूढमिति यदेतत्सतां कुलव्रतमित्यर्थः ॥ १७ ॥

'निर्व्यूढिः प्रतिपन्नवस्तुषु सतामेकं हि गोत्रव्रतम्' इति क्वचित्पाठः । निर्व्यूढिरूपमेकं मुख्यं गोत्रव्रतमित्यर्थः ॥ १८ ॥

---

१ Om. in R. G. N. B; इति for एव E; for पश्य after this N. G. B. have पश्यत्वमात्यः. २ आर° G. ३ निहता B. ४ सहस्रगुणितैः E. ५ °णास्त्वमिवोद्वहन्ति. G. B. E. N. ६ om. E. ७ °च्चार्यो N. ८ निर्व्यूढिः G. E.; निर्वाहः B. N.; °मेकंहि, for °मेतद्धि G.E. ९ Om. G; B. om. एव; G. om. एतत्; B. E. G. read भवतः. १० A. R. om. one ततः. ११ B. has चाणक्यहतकः here and B. and N. have °गुप्तस्य शरी°.

णक्यहतकं[१] एभ्य एतदीदृशं भवतीत्यन्विष्य निगृहीतवान्पुरनिवासिनो [२]युष्मदीयानाप्तपुरुषान् ।

राक्षसः—(सोद्वेगम्[३] ।) कथय कथय के के निगृहीताः ।

विराधगुप्तः—[४]प्रथमं तावत्क्षपणको जीवसिद्धिः सनिकारं नगरान्निर्वासितः ।

राक्षसः—(स्वगतम्[५] ।) एतावत्सह्यम् । न निष्परिग्रहं स्थानभ्रंशः पीडयिष्यति[६] । (प्रकाशम् ।) वयस्य, कमपराधमुद्दिश्य निर्वासितः[७] ।

विराधगुप्तः—एष[८] राक्षसप्रयुक्तया विषकन्यया पर्वतेश्वरं व्यापादितवानिति ।

राक्षसः—([९]स्वगतम् ।) साधु कौटिल्य, साधु ।

स्वस्मिन्[१०]परिहृतमयशः पातितमस्मासु घातितोर्द्धराज्यहरः ।
एकमपि नीतिबीजं बहुफलतामेति यस्य तव ॥ १९ ॥

---

एकमपि नीतिबीजमिति । इदमेकं बीजान्वेषणम् ॥ १९ ॥

---

१ om. in B. N; हतक om. in M. R. E; G. om. एभ्यः following and B. has एव for एतत् after एभ्यः; भविष्यतीति for भवतीति P. G. N. B; B. has अन्विष्य twice; कुसुमपुर. B. G. E; R. M. Om. नि after पुर; N. om. all this. २ नन्दामात्यपु° for युष्मदीयानाप्तपु°. B; युष्मत्पु°. E; G. adds गुप्त after आप्त and M. reads आर्य° for आप्त. ३ सावे°. B. E. G; P. om. one कथय; M. R. om. both; G. has अथ instead; B. E. वयस्य अथ; नगृ° for निगृ° P. ४ N. has अमात्य before this; also B. E. reading आदावेव for प्रथमम्; G. E. om. तावत् which follows. ५ आत्मग° B.N; R. E. M. read next word as एतत्तावत्; शक्यं for सह्यम् A. M. P. R. G. E.; परिभ्रंशः for °भ्रंशः B. E. ६ R. M. read पीडयति; M. om. वयस्य; B. N. G. read सखे; E. सखे कथय. ७ Om. G;B. adds एषः after this; E. जीवसिद्धिः. ८ दुरात्मा after this B; G. om. या in प्रयुक्तया; N. om. that and reads क्तो for क्त, and पर्वतकेश्वरम् for पर्वतेश्वरम्; घातित° for व्यापादित°. B. E. N. G. ९ आत्मग° E; कुतः after second साधु. G. E. N. १० स्वस्मिन्नपहृ° A. P; नूनं परि°. E; N. G. and B. om. स्वस्मिन्; R. reads अपयशः; N. reads स्वीयम् before पाति°; B. has च before घातितो°; G. om. अर्द्ध after it.

(प्रकाशम्।) ततस्ततः।

**विराधगुप्तः**—ततश्चन्द्रगुप्तशरीरमभिद्रोग्धुमनेन व्यापारिता दारुवर्माद्य इति नगरे प्रख्याप्य शकटदासः शूलमारोपितः।

**राक्षसः**—(सास्रम्।) हा सखे शकटदास, अयुक्तरूपस्तवायमीदृशो मृत्युः। अथवा स्वाम्यर्थमुपरतो न शोच्यस्त्वम्। वयमेवात्र शोच्या ये नन्दकुलविनाशेऽपि जीवितुमिच्छामः।

**विराधगुप्तः**—अमात्य, स्वाम्यर्थ एव साधयितव्य इति प्रयतसे।

**राक्षसः**—सखे,

अस्माभिरमुमेवार्थमालम्ब्य न जिजीविषा।
परलोकगतो देवः कृतघ्नैर्नानुगम्यते ॥ २० ॥

कथ्यतामपरस्यापि सुहृद्व्यसनस्य श्रवणे सज्जोऽस्मि।

**विराधगुप्तः**—एतदुपलभ्य चन्दनदासेनापवाहितममात्यकलत्रम्।

**राक्षसः**—क्रूरस्य चाणक्यबटोर्विरुद्धमयुक्तमनुष्ठितं तेन।

---

१ M. R. om. one ततः. २ R. has व्यादिता; N. व्यापादिता. ३ After आरोपितः G. ४ सबाष्पम् E; P. A. have हे for हा and E. वयस्य for सखे; B. E. N. G. om. रूप. ५ Om. P; G. reads स्वाम्यर्थे उप°; B.N.E. add असि after शोच्यस्त्वम्; G. substitutes it for त्वम्; A.P. om. एव; G. has अनु for अत्र and E. अपि for एवात्र. ६ R. G. read येन; R. om. वि in विनाशे. ७ B. E. G. add नैतदेवम्; B. om. इ-से; G. om. प्र-से; E. has instead न वयं शोच्या इति. ८ अस्माकममु°. G. B.; °मवलम्ब्य जि° B. G. omitting the last म. ९ Before this B. has the following विरा°। अमात्य नैतदेवम्। अस्माकममुमेवार्थमित्यादि पुनः पठति. N. agrees, actually giving the whole stanza again with कृतज्ञैः for कृतघ्नैः. E. also agrees reading युष्माभिः for अस्माभिः; °हृद्रोव्य° P; B. N. have व्यसनशतस्य; A. P. om. स्य; सजावयम् for सज्जोस्मि. B. G. N. १० B. E. N. read ततः before this. A. P. add सौहार्दात् after चन्दनदासेन; B. उपरूढसाध्वसेन; N. उपारूढसौहार्देन; E. दृढसौहार्देन; G. has सौहार्देन after अपवा°; M. E. insert राक्षस after अमात्य. ११ B. E. N. G. have सखे before this. After बटोः E. has नार्पितम्; G. नार्पितमिति; B. N. om. अयुक्तम् and B. E. N. G. read चन्दनदासेन for तेन.

विराधगुप्तः—अमात्य, नन्वयुक्ततरः[1] सुहृद्द्रोहः ।

राक्षसः—ततस्ततः[2] ।

विराधगुप्तः—ततो याच्यमानेनानेन[3] न समर्पितममात्यकलत्रं यदा तदातिकुपितेन[4] चाणक्यबटुना—

राक्षसः—(सोद्वेगम्[5] ।) न खलु व्यापादितः ।

विराधगुप्तः—न हि[6] । गृहीतगृहसारः सपुत्रकलत्रो बन्धनागारे निक्षिप्तः ।

राक्षसः—तत्किं[7] परितुष्टः कथयसि अपवाहितं राक्षसकलत्रमिति । ननु वक्तव्यं संयमितः[8] सपुत्रकलत्रो राक्षस इति ।

(प्रविश्य[9] ।)

पुरुषः—जेदु अमच्चो । एसो खु सअडदासो पडिहारभूमिमुवट्ठिदो[10] । (क)

राक्षसः—भद्र[11], अपि सत्यम् ।

---

(क) जयतु अमात्यः । एष खलु शकटदासः प्रतिहारभूमिमुपस्थितः ।

---

न खलु व्यापादित इति । एतदप्यपकारिजनाद्भयमुद्वेगः ।

---

१ N. E. G. om. न्व. २ M. R. om. one ततः. ३ °मानेनापि यदा न &c. B; याच्यमानेपि यदा न &c. E; G. agrees with B. omitting यदा; B. N. have अनेन before अमात्य. ४ B. E. N. G. read ततः for य—ति. ५ G. has सावेगम्; B. om. it and has स for न. ६ नहि नहि A. P; किंतु after हि E. G; and G. has हृत for गृहीत; B. N. read अमात्य न खलु व्यापादितः । किंतु &c.; B. N. E. insert संयम्य after °कलत्रः; G. om. नि in निक्षिप्तः. ७ A. M. P. have सखे before this; G. om. तत् and has तु after किम्; B. N. have ततः किम् and E. has इति after किम्; B.E.N. insert अनेन before राक्षस°. ८ B. G. N. om. मि; E. reads °क्तव्यं गृहीतस्तेन सपुत्र°; B. G. N. om. पुत्र; R. M. have it after कलत्र. ९ E. has किंवा अत्रान्तरे before this; G. ततः पटाक्षेपेण; B. N. have पटाक्षेपेण after प्रविश्य; जअदुजअदु for जेदु B. N; जयदुजयदु G. E; B. G. have अज्जो for अमच्चो after which E. has अमच्च; B. G. N. अज्ज; सयड° for सअड° E. १० भूमीउपविट्ठो G.; भूमिमुपहिदो E.; भूमिदुवविट्ठो P.; भूमिसुवट्ठिओ M.; भूमिमुवत्थिदो B. N. ११ प्रियंवदक B. N. G. (scored through); om. in R; E. has सहर्षम् before this.

[1]पुरुषः—किं अलिअं अमच्चपादेसु विणिवेदेमि। (क)

राक्षसः—सखे विराधगुप्त, क[2]थमेतत्।

विराधगुप्तः—अमात्य, [3]स्यादेतदेवं यतो भव्यं रक्षति भवितव्यता।

राक्षसः—प्रियंवदक, कि[4]मद्यापि चिरयसि। क्षिप्रं प्रवेशयैनम्।

पुरुषः—तथा। ([5]इति निष्क्रान्तः।)

(प्रविष्टः सिद्धार्थकः शकटदासश्च[6]।)

शकटदासः—([7]स्वगतम्।)

दृष्ट्वा मौर्यमिव प्रतिष्ठितपदं शूलं धरित्र्याः [8]स्थले
तल्लक्ष्मीमिव चेतनाप्रमथिनीं मू[9]र्द्धावबद्धस्रजम्।
श्रुत्वा स्वा[10]म्यपरोपरौद्रविषमानाघाततूर्यस्वना-
न्न ध्वस्तं प्रथमाभिघातकठिनं य[11]त्तन्मदीयं मनः॥२१॥

(क) किमलीकममात्यपादेषु विनिवेदयामि।

दृष्टा मौर्यमिति। अत्र वध्यभूमिखातशूलस्य वध्यस्रजश्च मौर्यतल्लक्ष्मीदृष्टान्तः मत्सरातिशयजनितासूयाकृतः। जीवकर्मेन्द्रियवृत्तीनां मनो-

१ प्रियंव B. N; B.N. have किम् after अलि°; G.E. om. किम्; M.P. read अलीअम्; E. अलियम्; G.om. it; R. om. वि in विणि°; B.N. read अमच्चपादोपजीविणो मन्तिदुं जाणन्ति; E. अमच्चपादोपजीविजनो मन्तेतुं जानादि; G. अमच्चपादोपजीविणो जणाणं अलीअं मन्तिदुं जानान्ति; N. (s) agrees omitting जणाणं and reading ण मन्तिउं जाणन्ति. २ B.N. read किमे°. ३ स्या-तो om.B.; यतो om.E. A. M. P. om. एतत्; G. adds हि after यतो; E. B. have खलु after रक्षति and G. भवितव्यम् for भव्यम्; B. G. E.N. read रक्षति before भव्यम्. ४ B. N. यद्येवं तत्किं वि°; G. यद्येवं तर्हि किं विचारयसि; E. यद्येतत्किं विलम्बयसि; M. has क्षिप्रम् after प्रवे°; R. also, adding एव before एनम्; G. has समाश्वासय for एनम्; E. has क्षिप्रं प्रवेश्य समाश्वासय माम्. ५ B. N. E. जं अमच्चो आणवेदित्ति; G. agrees having इति for त्ति. ६ B. E. N. G. ततः प्रविशति सिद्धार्थकेनानुगम्यमानः शकटदासः. ७ B. N. read दृष्ट्वा आत्मगतम्; E. आत्मग°. ८ तले G. E. N. B.; स्तने K. ९ मूर्ध्नां R; °बध्य° A.; उन्मुच्य वध्यस्र° B; G. and N. (s) उन्मुच्य कण्ठस्र.°; E. om. this and next line. १० स्वाम्युपरोध B. G, E. N.; °स्यपराध M. R; साम्यपरोद्रवि P. ११ मन्ये म°. B. G. E. N.

(उपसृत्यावलोक्य[1] च सहर्षम् ।) अयममात्यराक्षसस्तिष्ठति । य एषः

अक्षीणभक्तिः क्षीणेऽपि नन्दे स्वाम्यर्थमुद्वहन्[2] ।
पृथिव्यां स्वामिभक्तानां प्रमाणे परमे स्थितः ॥ २२ ॥

(उपसृत्य ।) जयत्वमात्यः[3] ।

**राक्षसः**—(विलोक्य[4] सहर्षम् ।) सखे शकटदास, दिष्ट्या कौटिल्यगोचरगतोऽपि त्वं दृष्टोऽसि । तत्परिष्वजस्व माम् ।

(शकटदासस्तथा करोति[5] ।)

**राक्षसः**—(चिरं[6] परिष्वज्य ।) इदमासनमास्यताम् ।

(शकटदासो[7] नाट्येनोपविष्टः ।)

**राक्षसः**—सखे[8] शकटदास, अथ कोऽयं मे ईदृशस्य हृदयानन्दस्य हेतुः ।

---

वृत्त्यधीनतया प्रकृते दर्शनश्रवणबन्धनक्रियाणां मन एव कर्तृ । अतो ध्वंसनक्रिययैककर्तृत्वात् क्त्वाप्रत्ययः । स्वामिनां नन्दानामपरोपो राज्यभ्रंशस्तद्वद्रौद्रविषमानसह्यानित्यर्थः । यद्यस्मात्प्रथमाभिघातेन पूर्वानुभूतानर्थपरंपरासहनेन कठिनमभूत्तस्मान्न ध्वस्तमित्यन्वयः । 'स्वामिपुरोपरोधविषमान्' इति कचित्पाठः ॥ २१ ॥

अक्षीणभक्तिरिति ॥ परमे प्रमाणे प्रथमकोटौ स्थितः ॥ २२ ॥

---

१ B. E.N.G. have नाट्येन for this and om. च; R. प्रकाशम् before उप°; अयेअ° for अयम° E; स for य. N. (s). २ स्वाम्यर्थं धुरमुद्वहन् E. N. (s) G. (reading र्थं for र्थम्). ३ °त्य°. B. N. ४ नाट्येनावलोक्य B.G.E. N;E. reads सहर्षम् before this; P. om. it.; G. om. सखे; E. om. दिष्ट्या.; N. om. कौ. त्वम्; P. om. गोचर; B. E. G. om. त्वम्; E. substitutes दिष्ट्या. ५ G. om. श-ति; E. reads उपसर्पति for त-ति. ६ G.has इति for चिरम् omitting राक्ष°; B. N. have तम् for चिरम्. ७ शक । यदाज्ञापयत्यमात्यः इति ना° B. N; E. agrees omitting इति and G. omitting नाट्येन. ८ om. G; B. N. E. G. have अस्य before मे omitting ईदृ°; G. om.; हृदयस्यानन्दहेतुः E.; हृ... न्दकस्य° G.

**शकटदासः**—(सिद्धार्थकं निर्दिश्य[1] ।) अनेन प्रियसुहृदा सिद्धार्थकेन घातकान्विद्राव्य वध्यस्थानादपहृतो[2]ऽस्मि ।

**राक्षसः**—(सहर्षम् ।) भद्र सिद्धार्थक, किं[3] पर्याप्तमिदमस्य प्रियस्य । तथापि गृह्यताम् । ([4]स्वगात्रादवतार्य भूषणानि प्रयच्छति ।)

**सिद्धार्थकः**—(गृहीत्वा पादयोर्निपत्य[5] स्वगतम् ।) अअं खु अज्जोवदेसो । होदु । तह[6] करिस्सम् । (प्रकाशम् ।) अमच्च, एत्थ पढमपविट्ठस्स णत्थि केवि परिचिदो[7] जत्थ एदं अमच्चस्स पसादं णिक्खिविअ निव्वुदो भविस्सम् । ता इच्छामि[8] अहं इमाए मुद्दाए मुद्दिदं अमच्चस्स एव्वं[9] भण्डाआरे ठाविदुम् । जदा मे पओअणं तदा गेह्णिस्सम् । (क)

---

(क) अयं खलु आर्योपदेशः । भवतु । तथा करिष्यामि । अमात्य, अत्र प्रथमप्रविष्टस्य नास्ति कोऽपि परिचितः यत्रेमममात्यस्य प्रसादं निक्षिप्य

---

आर्योपदेश इति । तस्माच्च सुहृत्प्राणपरिरक्षणपरितुष्टादित्यादिः कर्णे एवमेवेति अतः पूर्वोक्त आर्योपदेश इत्यर्थः । इदमपरं बीजान्वेषणम्

---

१ सि-श्य om. G; for next word B. N. read अमात्य. २ अपवाहितोस्मि B. ३ काममपर्या° B. G. E. N; G. om. इदम्. ४ B. G. N. have इति before this. ५ G. reads प्रणिपत्य and om. all from स्व° to शम्; E. om. from पा° to कोवि.; B. E. N. G. एदं खु for अअं खु; A. P. M. read अज्जोपदे°. ६ °देसेण कारे° B. E. N. G.; करिस्से R.; अत्थ for एत्थ M; B. N. E.G. add मे after this; for next word M. reads पुढमंप°.; A. has °प्पवि°; B. पढमप्र°; R. पुडमप्र°. ७ कोपि P.; येत्थ for जत्थ P.; जहिम् B. E; M. R. om. next word, G. reads एणम्; A. P. इमम्; G. om. स्स in अमच्चस्स; B. P. N. G. read प्पसादं; E. पसायम्; °क्खिपिअ G.; °विय E; P. reads next word as णिअणिविदो; A. णिउदो; M. णिव्वु°; for भविस्सम् G. reads हुवि°; M. हवि°. ८ इच्छेमि A. P.; इच्छम्मि R.; G. A. P. om. next word and N.G. read एदाए for इमाए; मुद्दिआए for मुद्दाए G. B; A. P. read next word as मुद्दिदुम्, G. as मुद्दिअम्. ९ जेव्व B; जेव्व G. E. om; B. reads next word भाण्डागारे; P. भाण्डाआरे; E. भाण्डायारे; णिक्खिविदुम् for ठाविदुं B.; °पिदुम् G; विणिक्खि° N.; निरिक्खवि° E. (?) एदिणा before पओअणं B. N.; एदाणम् G; E. reads पयोजणम्; N. reads हविस्सदि; B. E. G. भविस्स° before तदा; गहिस्सं° R.; गेहि° E.; गिह्णिहस्साम् P. for गेह्णिस्सं; from ता इच्छा° to गेह्णि° om. in M., but the corresponding chhâyâ is given.

**राक्षसः**—भद्र, को[1] दोषः। शकटदास, एवं क्रियताम्।

**शकटदासः**[2]—यदाज्ञापयत्यमात्यः। (मुद्रां विलोक्य जनान्तिकम्।) अमात्य, भवन्नामाङ्कितेयं मुद्रा।

**राक्षसः**—(विलोक्यात्मगतम्[3]।) सत्यं नगरान्निष्क्रामतो मम हस्ताद्ब्राह्मण्या उत्कण्ठाविनोदार्थं[4] गृहीता। तत्कथमस्य हस्तमुपागता। (प्रकाशम्।) भद्र सिद्धार्थक, कुतस्त्वयेयमधिगता।

**सिद्धार्थकः**—अत्थि[5] कुसुमपुरे मणिआरसेट्ठी चन्दनदासो णाम। तस्स गेहदुआरपडिसरे[6] पडिदा मए आसादिदा। (ख)

---

निर्वृतो भवामि। तस्मादिच्छाम्यहमेतया मुद्रया मुद्रितममात्यस्यैव भाण्डागारे स्थापयितुम्। यदा मे प्रयोजनं तदा ग्रहीष्यामि।

(ख) अस्ति कुसुमपुरे मणिकारश्रेष्ठी चन्दनदासो नाम। तस्य गेहद्वारपरिसरे पतिता मया आसादिता।

---

ग्रहीष्यामीति भवतोऽतिसंधानार्थं यदा कटकान्निर्गमिष्यामि तदा ग्रहीष्यामीति कुटिलो गूढाशयः।

---

१ B. N. have भवतु before this; N. (s) has भारः for दोषः; P. E. om. शकट°. २ before this E. has सिद्धा। जं अमच्चो आणवेदित्ति तथा करोति and om. य-त्यः; A. has यथा for यदा°; G. has आयुष्मान् for अमात्यः and B. and N. इति after it. G. has वि° before मुद्राम् and N. and E. om. ज-म् and भवत् after अमात्य. ३ वि-म् om. G;B. N. have सविषादं सावितर्कमात्म° after विलोक्य.-B. N. read कष्टम् for सत्यम् which follows. ४ After सत्यम् in B. G. E; N. G. E. prefix असत् to it; B. N. मत्; G. also adds गृहिण्या after मम and om. ब्राह्मण्या.; G. om. तत् and inserts पुनः after कथम्; B. E. N. read उपगता for उपागता. ५ B. G. E. N. have अमात्य before this; G. om. this; B. N. read °पुरणिवासी for °पुरे in next word; E. मणयार°; P. सेटी; G. सेट्ठि; R. and P. have चन्दण° in next word. ६ दुवार° P. A.; °परिसरे R. M; दुआरे भूमिए B. N; दुवारे भूमिए G; वरदुवरे पडिया समासाइया. E; for पडिदा A. P. read पडिता; M. पतिता; for मए P. मये and M. मया; M. om. आ in आसा°; B. N. E. read समासा°; G. उवलद्धा.

**राक्षसः**—युज्यते।

**सिद्धार्थकः**—अमच्च, एत्थ किं[1] जुज्जइ। (क)

**राक्षसः**—भद्र, [2]यन्महाधनानां गृहे पतितस्यैवंविधस्योपलब्धिरिति।

**शकटदासः**—[3]सखे सिद्धार्थक, अमात्यनामाङ्कितेयं मुद्रा। तदितो बहुतरेणार्थेन भवन्तममात्यस्तो[4]षयिष्यति। दीयतामेषा।

**सिद्धार्थकः**—अज्ज, णं पसादो [5]एसो जं इमाए मुद्दाए अमच्चो [6]परिग्गहं करेदि। (इति[7] मुद्रामर्पयति।) (ख)

**राक्षसः**—सखे शकटदास, अनयैव मुद्रया स्वाधिकारे व्यवहर्त्तव्यं [8]भवता।

---

(क) अमात्य, अत्र किं युज्यते।

(ख) आर्य, ननु प्रसाद एषः यदस्या मुद्रया अमात्यः परिग्रहं करोतीति।

---

किमत्र युज्यत इति मुद्रायाः स्वकीयत्वनिह्नवोऽनेन क्रियत इति जानन्नप्यजानन्निव पृच्छति। भद्र, यदिति। अस्मद्गृहजनस्तत्र वर्त्तत इत्यस्यार्थस्य गोपनार्थमियमुक्तिः।

तदितो बहुतरेणेति। इतो मुद्रामूल्यादप्यधिकतरेणेत्यर्थः।

परिग्रहमित्यादि। यदर्थमियमानीता तत्सिद्धमित्यर्थो गूढः।

---

१ before एत्थ B. E. N; G. om एत्थ; B. N. G. read जुज्जदि. २ B. N. read यतो for यत्; G. om. it; for गृहे G. E. read गृहद्वारि; B. N. द्वारि. ३ भद्र R. M. E; जदि for तदितो G. ४ B. N. have तत् after this and B. G. E. N. मुद्रा at the end of the speech. ५ एसो मे परितोषो B. N. E.; G. agrees adding णम् before एसो and reading °तोसो, and जे for जम् after this. Before इमाए B. E. N; P. reads पडि° in next word. ६ B. E. N. read परिग्गहप्पसादं करोदित्ति and om. इति; B. E. N. G. read मुद्रां समर्पयति. ७ Om. M. G. E. ८ त्वया G.

**शकटदासः**—यदाज्ञापयत्यमात्यः[1] ।

**सिद्धार्थकः**—अमच्च, विण्णवेमि[2] । (क)

**राक्षसः**—[3]ब्रूहि विश्रब्धम् ।

**सिद्धार्थकः**—जाणादि[4] एव्व अमच्चो जह चाणक्कबडुकस्स वि-प्पिअं[5] कदुअ णत्थि पुणो पाडलिउत्ते पवेसो त्ति इच्छामि अहं अ-मच्चचलणे एव सुस्सूसिदुम्[6] । (ख)

**राक्षसः**—भद्रं[7], प्रियं नः । किंतु त्वदभिप्रायापरिज्ञानान्तरि-तोऽयमस्मदनुनयः । तदेवं क्रियताम् ।

**सिद्धार्थकः**—(सहर्षम् ।) अनुगिहिदोह्मि[8] । (ग)

---

(क) अमात्य, विज्ञापयामि ।

(ख) जानात्येवामात्यो यथा चाणक्यबटुकस्य विप्रियं कृत्वा नास्ति पुनः पाटलिपुत्रे प्रवेश इति इच्छाम्यहं अमात्यस्य चरणावेव शुश्रूषितुम् ।

(ग) अनुगृहीतोऽस्मि ।

---

त्वदभिप्राय इति । त्वदभिप्रायापरिज्ञानेनान्तरितो विलम्बितः पूर्वमेवा-स्माभिरेवं भवाननुनेय इत्यर्थः ।

---

१ B. N. have इति after this. २ B. E. add किंपि after this; N. (s) has विणवणिअं किंवि अस्थि; G. विज्ञाप्यं किं वि अत्थि. ३ भद्र before this B. E. N; and this after विश्र° in B.N. ४ E. यानादिय्येव; B. has ज्जेव; G. जेव्व; जधा for जह B. N.; जहा E.; जथा G; in next word B. N. have हदअस for बडु°; E. हदग्गास्स; P.बटुकस्स; G. बटुअस्स; R. बडुअस्स.; ५ अप्पियम् E; नत्थि for णत्थि E; B. E. N. read मे after णत्थि; A. P. read उण for पुणो; M. R. पुणो वि; E. has पवेसो before पाडलि°; P.and E. read °पुत्ते; R. °उत्तम्; G. °उत्त; E. has प्रवे° and om. त्ति; B. E. N. G. read ता after त्ति; इच्छेमि A. M. P; इच्छम्मि R. ६ अज्जस्स ज्जेव सुप्पसणे पादे सेविदुम् B; E. has अमच्चस्स ज्जेव चलने सुतपसण्णे सेखिदुम्; G. agrees except that it reads चलणं सुसेविदुम्; N. agrees with B. save that it reads चलणे सुसुसि-दुम्. ७ Om. M. R. G.; अभिप्रायपरि° B. N. (s); °ज्ञानेनान्त° B. N. (r) E.; °ज्ञानं ततोस्माकमनु°. G. B. N. E. read अस्माकम् for अयमस्मत्. ८ अणुगि-ण्हिद° G.; अणुगिह्णीदो° P. E.; अणुग्गाहिदो° B. N.

राक्षसः—शकटदास[1], विश्रामय सिद्धार्थकम् ।

शकटदासः—तथा[2] । ( इति सिद्धार्थकेन सह निष्क्रान्तः ।)

राक्षसः—सखे विराधगुप्त, वर्णय वृत्त[3]शेषम् । अपि क्षमन्तेऽस्मदुपजापं चन्द्रगुप्तप्रकृ[4]तयः ।

विराधगुप्तः—अमात्य, बाढं क्षमन्ते य[5]थाप्रकाशमनुगच्छन्त्येव ।

राक्षसः—सखे, किं तत्र प्र[6]काशम् ।

विराधगुप्तः—अमात्य, इदं तत्र प्र[7]काशम् । मलयकेतोरपक्रमणात्प्रभृति कुपितश्चन्द्रगुप्तश्चाणक्यस्योपरीति[8] चाणक्योऽप्यतिजितकाशितयासहमानश्चन्द्रगुप्तं[9] तैस्तैराज्ञाभङ्गैश्चन्द्रगुप्तस्य चेतःपीडामुपचिनोति । इ[10]त्थमपि ममानुभवः ।

---

अनुगच्छन्त्येवेति । चन्द्रगुप्तप्रकृतयः भद्रभटादयः मलयकेतूपेक्षणात्कृतघ्नश्चाणक्यबटुर्न विश्वसनीय इत्येवमस्मदुपजापं यथाप्रकाशमनुगच्छन्त्येव । अत्राप्यागन्तुमुद्युञ्जत एवेति भावः । वक्ष्यति चैतत्पञ्चमेऽङ्के प्राक्परिगृहीतोपजापैरित्यादि ।

---

१ सखे before this B. N; गच्छ after this E. which has एनम् for सि—म्. २ यदाज्ञापयत्यमात्य इति B. E. N. G. ३ वर्णयेदानीं कुसुमपुरवृत्तान्तशे°. E. B. N. (r); G. has वृत्तान्त for वृत्त; P. has शेषवृत्तम्; N. (s) agrees with B. omitting कुसुमपुर; कुसुमपुरनिवासिनो B. E. N. (r) after क्षमन्ते. ४ प्रकृतिस्था अमात्यादयः for प्रकृ॰ E. ५ ननु before this B. E. N. G; यथा° om. in N. (s) G.; यथाप्रधानम् B. N. (r); यथाप्रकारम् R; for अनुग° E. has आग° and G. अवगम्यते. ६ P. has तत् for तत्र; B. has कारणम् for प्र°; G. also has it in margin scoring off प्र° in text. ७ G. om. तत्र before this, and A. P. om. अमात्य at the beginning of the speech; B. has कारणम् for प्र°; A. M. P. read यत् after this. ८ R. has चाणक्योपरीति; N. (r) B. पीडितश्चन्द्रगुप्तेन चाणक्य इति; G. agrees reading कुपित for पीडित; N. (s) कुपितश्चन्द्रगुप्तश्चाणक्यस्य; E. agrees and adds इति at the end; B. and E. om. अति further on. ९ G. om. स-प्तम्; N. (s) B. om. च-प्तम्; E. ditto adding अतिजितेन्द्रियतया before जित°; N. (r) om. सहमानः, and reads चन्द्रगुप्तस्य omitting च-स्य further on; आकार for आज्ञा N. (r); N. (r) चित्तपीडामवचि°; B. N. (s) चेतसः पीडामुप°; E. om. all from चेतः to end. १० B. N. G. read अयम् for इत्थम्; P. has इत्ययम्.

राक्षसः—(सहर्षम्। ) [1]सखे विराधगुप्त, गच्छ त्वमनेनैवाहितुण्डिकच्छद्मना [2]पुनः कुसुमपुरम्। तत्र मे प्रियसुहृद्वैतालिकव्यञ्जनः स्तन[3]कलशो नाम प्रतिवसति। स त्वया मद्वचनाद्वाच्यः यथा चाणक्येन क्रियमाणेष्[4]वाज्ञाभङ्गेषु चन्द्रगुप्तः समुत्तेजनसमर्थैः श्लोकैरुपश्लोकयितव्यः। कार्यं चातिनिभृतं करभकहस्तेन संदेष्टव्यमिति।

विराधगुप्तः—यदाज्ञापयत्यमात्यः। ( इति निष्क्रान्तः। )

पुरुषः—(प्रविश्य।) [6]अमच्च, एसो खु सअडदासो विण्णवेदि एदे [7]खु तिण्णि अलंकारसंजोआ विक्कीअन्दि। ता पच्चक्खीकरेदु अमच्चो। (क)

---

(क) अमात्य, एष खलु शकटदासो विज्ञापयति एते खलु त्रयोऽलंकारसंयोगा विक्रीयन्ते। तस्मात्प्रत्यक्षीकरोत्वमात्य इति।

---

ममानुभव इति। इत्थं तत्रत्यवृत्तं मयानुभूयैवागतमित्यर्थः। इदमपि बीजान्वेषणम्॥

अलंकारसंयोगा इति। अलंकारसंयोगाः सम्यग्घटिताः अलंकारा इत्यर्थः। इदमपि बीजान्वेषणम्।

---

१ E. has before this प्रियं नः; G. om. गच्छ; B.N. have तद्गच्छ; B.N.G. om. एव; A. M. read एतेन for अनेन. २ om. A. P. B; E. N. add एव after कु-म्; G. adds एव व्रज; G. has स before तत्र; B. N. G. have हि after it; E. om. मे and B. E. N. G. om. प्रिय; व्यञ्जनकस्तनक° P. ३ B.E.N. have °कलसो; यथा° om. G. ४ आ° for ष्वा° N.(s); सत्या° G. Both om. षु in भङ्गेषु; B. E. N. G. add त्वया after चन्द्रगु° in next word. B. N. have रूपैः for समर्थैः; G. om. it. ५ B. N. add इति here; G. om. अति; E. reads चानिनिवृत्तम्; G. E. om. न in next word. ६ जयदु २ आमच्चो E.; जयदु २ अज्जो G.; जअदु जअदु अम°. B.; जअदु जअदु अज्जो N.; B. E. N. G. om. एसो खु; E. reads सगड°. ७ om. G; विसेसा for संजोआ B.; संजोडा G.; योडिया E. which has तिन्नि after this omitting तिण्णि before; B. A. N. in next word read °क्कीअन्ति; °क्कीयन्ति E.; क्रियन्ति G; P. has जा for ता before पच्च°; करेउ N. (s) R. G. E. M. add त्ति after अमच्चो.

राक्षसः—(विलोक्य[1]।) अहो महार्हाण्याभरणानि । भद्र, उच्यतामस्मद्वचनाच्छकटदासः परितोष्य विक्रेतारं[2] गृह्यतामिति ।

पुरुषः—तथा[3] । (इति निष्क्रान्तः ।)

राक्षसः—[4]यावदहमपि कुसुमपुराय करभकं प्रेषयामि । (उत्थाय[5]।) अपि नाम दुरात्मनश्चाणक्याच्चन्द्रगुप्तो भिद्येत । [6]अथवा सिद्धमेव नः समीहितं पश्यामि । कुतः ।

मौर्यस्तेजसि सर्वभूतलभुजामाज्ञापको वर्त्तते
चाणक्योऽपि मदाश्रयादयमभूद्राजेति जातस्मयः ।
राज्यप्राप्तिकृतार्थमेकमपरं तीर्णप्रतिज्ञार्णवं
सौहार्दात्कृतकृत्यतैव नियतं [7]लब्धान्तरा भेत्स्यति ॥ २२ ॥

(इति निष्क्रान्ताः सर्वे[8] ।)

[9]इति द्वितीयोऽङ्कः ।

---

चन्द्रगुप्तो भिद्येतेति । ततःप्रभृति चन्द्रगुप्तशरीरे सहस्रगुणमप्रमत्तश्चाणक्य इति श्रुत्वा तद्वधोपाये निराशः सन्राक्षसः 'आशा बलवती राजन् शल्यो जेष्यति पाण्डवान्' इति न्यायेन अतःपरं स्तनकलशद्वारा मौर्यचाणक्ययोर्मिथो विरोधेन स्वेष्टसिद्धिं समाशंसते—अपि नामेति ॥

मौर्यस्तेजसीति । राज्यप्राप्त्या प्रतिज्ञार्णवतरणेन च लब्धान्तरा प्राप्तावसरा कृतकृत्यतैव उभौ सौहार्दाद्भेत्स्यति उभयोः सौहार्दं विघटयिष्यतीत्यर्थः । उभौ कृतकृत्यतया परस्परं निरपेक्षौ सन्तौ केनचिन्निमित्तेन विरोधे सति पुनर्न संधास्येते इति भावः । इत्थं पताकाप्राप्त्याशानुगुण्येन गर्भसंधेर्द्वादशाङ्गानि निरूपितानि गर्भसंधिश्च समाप्तः ॥ २२ ॥

इतित्र्यम्बकयज्वप्रभुवर्याश्रितढुण्ढिराजव्यासयज्वविरचिते मुद्राराक्षसनाटकव्याख्याने द्वितीयोङ्कः समाप्तः ॥

---

१ B. E. N. G. add आत्मगतम् here; महाधनान्या° for महार्हाण्या° R. A. P; M. inserts र्हं between हा and ध; B.E.N.G. read प्रकाशम् before भद्र; G.om. भ—ताम्; B.E.N. G. om. अस्मद्वचनात्; G. om. visarga after °दास. २ E.reads परि° after विक्रे° and P. om. final इति. ३ जं अमच्चो आणवेदित्ति B. N. E.; G. has देवो for अमच्चो and om. त्ति. ४ B. N. have स्वगतम् before this. ५ G.E. have इति before this; G. om. नाम; B. E. N. read °क्यहतकात् for °क्यात्. ६ अथ P.; अथा A.;G. om. सि—तः; B. E. N. om. नः. ७ °न्तरम् P. ८ A.P.om. इ-र्वे. ९ A.adds राक्षसविचारो नाम; P. मुद्राराक्षसनाम्नि नाटके; M.R.G.E.om. इति.

# मुद्राराक्षसम् ।

## तृतीयोऽङ्कः ।

(ततः प्रविशति कञ्चुकी ।)

कञ्चुकी—(सनिर्वेदम् ।)[1]

रूपादीन्विषयान्निरूप्य करणैर्यैरात्मलाभस्त्वया[2]
लब्धस्तेष्वपि चक्षुरादिषु हृताः स्वार्थावबोधक्रियाः ।[3]
अङ्गानि प्रसभं त्यजन्ति पटुतामाज्ञाविधेयानि ते[4]
न्यस्तं मूर्ध्नि पदं तवैवं जरया तृष्णे मुधा ताम्यसि ॥ १ ॥[5]

---

अथ राक्षसाभिलष्यमाणचाणक्यचन्द्रगुप्तविरोधकथनार्थं विमर्शसंधिरारभ्यते। तृतीयचतुर्थावङ्कौ विमर्शसंधिः ॥ 'गर्भसंधौ प्रसिद्धस्य बीजार्थस्यावमर्शनम्। हेतुना येन केनापि विमर्शः संधिरुच्यते ॥' इति लक्षणात्। गर्भसंधौ प्रसिद्धस्य मुहुरन्विष्टस्य चाणक्यनीतिरूपस्य बीजस्य कौमुदीमहोत्सवप्रतिषेधादिना प्रकरीनाम्न्याल्पया कथया चावमर्शनात् अनुसंधानात् नियताप्तिप्रकर्योः संबन्धस्य चात्र सत्त्वात्। तृतीयेऽङ्के नियताप्तिः ॥ चतुर्थेऽङ्के राक्षसचारसंवादरूपा कथाप्रकरी वर्ण्यते ॥ नियताप्तिप्रकर्यानुगुण्येनास्य संधेस्त्रयोदशाङ्गानि ॥ 'तत्रापवादसंफेटौ विद्रवद्रवशक्तयः । द्युतिः प्रसङ्गश्छलनं व्यवसायो विरोधनम् । प्ररोचना विचलनमादानं च त्रयोदश ॥'

रूपादीति । यैश्चक्षुरादिभी रूपादिषु विषयेषु गृह्यमाणेषु तत्तद्विषये तृष्णा अभिवर्धते तानीन्द्रियाणि विकलानि सन्ति विषयान्न गृह्णन्ति ।

---

१ Om. B. E. N. G. २ °स्तया P. ३ A. P. om. visarga here and after क्रिया; M. R. read °बोधाः; N. (s) reads रोध for बोध. ४ B. E. N. G. मे. ५ तथैव N. (r); मासधि for ताम्यसि. B.; मोम्यसि E.

(परिक्रम्याकाशे ।) भो भोः सुगाङ्गप्रासादाधिकृताः पुरुषाः सुगृहीतनामा देवश्चन्द्रगुप्तो वः समाज्ञापयति—'प्रवृत्तकौमुदीमहोत्सवरमणीयं कुसुमपुरमवलोकयितुमिच्छामि । तत्संस्क्रियन्तामस्मद्दर्शनयोग्याः सुगाङ्गप्रासादोपरि भूमयः' इति । (पुनराकाशे ।) किं ब्रूथ 'आर्य, किमविदित एवायं देवस्य कौमुदीमहोत्सवप्रतिषेधः' इति । आः दैवोपहताः, किमनेन वः सद्यःप्राणहरेण कथोपोद्धातेन । शीघ्रमिदानीम्

आलिङ्गन्तु गृहीतधूपसुरभीन्स्तम्भान्पिनद्धस्रजः
संपूर्णेन्दुमयूखसंहतिरुचां सचामराणां श्रियः ।
सिंहाङ्कासनधारणाच्च सुचिरं संजातमूर्च्छामिव
क्षिप्रं चन्दनवारिणा सकुसुमः सेकोऽनुगृह्णातु गाम् ॥ २ ॥

---

यौवने तृष्णावशात् हस्तपादादीन्यङ्गानि स्वक्रियायां व्याप्ृतान्यासन् तान्यपि संप्रति जरया पटुतां स्वकार्यक्षमतां त्यजन्तीति जरया क्रियमाणं स्वाङ्गवैकल्यं तृष्णायामुपचर्यते न्यस्तं मूर्ध्नि पदं तवेति । अथापि तृष्णया मुधा ताम्यामीति भावः । कञ्चुकिनिर्वेदो नाटके वर्णनीय इति संप्रदायविदः ॥ १ ॥

अविदित एवायमिति । अयं चाणक्येन क्रियमाण इत्यर्थः ॥ अयं बीजस्य चाणक्यनीतेरवमर्शनम् ।

आलिङ्गन्त्विति । अत्र चामराणां श्रियः स्तम्भानालिङ्गन्तु इत्युक्त्या

---

१ नामधेयः. R; A. P. have एष before सु°; B.N. read यथा before प्रवृत्त; °त्सवम् M. २ °मणीयतरम् B. E. N. G.; तत्क्रि° B. E. N. G.; R. M. om. अस्म—ग्याः. ३ °दस्यो° for °दो° B. E. N.; G. has °दस्योपरितन; तत्किं चिरयन्ति भवन्त before पुन° B. N. G.; B. E. N. G. om. पुनः; B. N. G. add आकर्ण्य after आकाशे; E. has आर्याः before किम्; and G. and E. for ब्रूथ read कथयन्ति भवन्तः; G. inserts इदम् after किम्. ४ B. E. N. G. add चन्द्रगुप्तस्य after देवस्य. ५ E. has कञ्चुकी before this; A. P. have हतकाः for हताः in next word. सद्यः om. in B. E. N. G.; M. R. om. वः and G. has एव for it; E. has सद्यः before किम्; R. M. read प्राणापहरेण; B. E. N. (r) R. om. °पो°; E. has कथाघातेन. ६ R. has अनवद्य for गृहीत; M. किमद्य; M. has also धूम for धूप; P. has सुरभि for सुरभीन्. ७ सु°. P.

किं ब्रूथ—'आर्य, इदमनुष्ठीयते देवस्य शासनम्' इति[1]। भद्राः, त्वरध्वम्[2]। अयमागत एव देवश्चन्द्रगुप्तः। य एषः

सुविश्रब्धैरङ्गैः पथिषु विषमेष्वप्यचलता
चिरं धुर्येणोढा गुरुरपि भुवो[3] यास्य गुरुणा।
धुरं तामेवोच्चैर्नववयसि वोढुं व्यवसितो
मनस्वी दम्यत्वात्स्खलति च न[4] दुःखं वहति च ॥ ३ ॥

(नेपथ्ये[5]।)

इत इतो देवः।

(ततः प्रविशति राजा प्रतीहारी च।)

**राजा**—(स्वगतम्[6]।) राज्यं हि नाम राजधर्मानुवृत्तिपरस्य नृपतेर्महदप्रीतिस्थानम्। कुतः[7]।

---

कामिनामुपभोगः परिस्फुरतीति समासोक्तिरलंकारः। अतिगौरवशालि राजसिंहासनं सुगाङ्गभूमौ तिष्ठतीति तद्धारणात्संजातमूर्च्छामिवेति वस्तूत्प्रेक्षा ॥ २ ॥

सुविश्रब्धैरिति। सुविश्रब्धैर्दृढैः सुप्रयुक्ततया कार्यक्षमैश्चाङ्गैरवयवैः स्वाम्यमात्यादिभिश्च विषमेषु गहनेषु पथिषु मार्गेषु राजतन्त्रेषु चाचलता अस्खलता धुर्येण राज्यभारनिर्वहणक्षमेणास्य गुरुणा तातेन या भुवो धूश्चिरमूढेत्यन्वयः। दम्यत्वादनतिप्रौढत्वात्स्खलति किंचित्खिद्यते मनस्वित्वादुत्साहवत्त्वाद्दुःखं च न वहति ॥ ३ ॥

इत इत इति ॥ इयं चूलिका। अन्तर्जवनिकान्तस्थैश्चूलिकार्थस्य सूचनेति लक्षणात्।

अप्रीतिस्थानं क्लेशावहमित्यर्थः ॥

---

१ B. has आकाशे। किं कथयन्ति भवन्तः एते त्वरामह इति; N. agrees; G. adds श्रुत्वा before आकाशे; E. substitutes श्रुत्वा for आकाशे and adds कञ्चुकी after इति. २ त्वर° twice in G. E.; B. N. G. om. देवः; R. M. read सः for यः. ३ E. has वधुः for भुवः; A. om. भुवः. ४ नच B. N. G. P.; for वहति च G. has न सहते. ५ G. has कञ्चुकी for this; N. (s)इद इदो देवः for what follows and M. ततस्ततः. ६ आत्मग° G. E.; राज्य for राज in राजध° G; M. has वृत्तस्य for वृ—स्य; B. N. have तन्त्र; after पर N. (s); Om. नृपते° R; E. has नरप°; B. N. have भूप°. ७ यतः for कुतः B. N.

परार्थानुष्ठाने रहयति[1] नृपं स्वार्थपरता
परित्यक्तस्वार्थो[2] नियतमयथार्थः क्षितिपतिः ।
परार्थश्चेत्स्वार्थादभिमततरो[3] हन्त परवान्
परायत्तः प्रीतेः कथमिव रसं वेत्ति[4] पुरुषः ॥ ४ ॥

अपि च । दुराराध्या[5] हि राजलक्ष्मीरात्मवद्भिरपि राजभिः ।
कुतः ।

तीक्ष्णादुद्विजते मृदौ परिभवत्रासान्न[6] संतिष्ठते
मूर्खं[7] द्वेष्टि न गच्छति प्रणयितामत्यन्तविद्वत्स्वपि ।
शूरेभ्योऽप्यधिकं[8] बिभेत्युपहसत्येकान्तभीरूनहो
श्रीर्लब्धप्रसरेव वेशवनिता[9] दुःखोपचर्या भृशम् ॥ ५ ॥

---

परार्थानुष्ठान इति । परार्थानुष्ठाने धर्मतः षष्ठांशदानादिप्रकृतिकार्य-परतन्त्रत्वे स्वार्थपरता स्वच्छन्दविहारादिविषयभोगः नृपं रहयति त्यजति। परित्यक्तस्वार्थः राजा नियतमयथार्थः क्षितिपतिः ईदृशस्य राजत्वम-यथार्थं निष्फलं स्वसुखोपभोगाभावादित्यर्थः । अथापि राजधर्मतया स्वार्थं विहाय प्रजार्थ एवानुष्ठेय इति चेदाग्रहस्तदा राजा पराधीनो जातः । पराधीनस्य भृत्यादेः सौख्यलेशः कुत्रापि नास्तीति लोकानुभव-सिद्धमिति भावः ॥ ४ ॥

आत्मवद्भिरिति । समाहितचित्तैरित्यर्थः ॥

तीक्ष्णादिति । मृदौ परिभवत्रासान्मृदौ स्थितां मामन्यो बलवान्पराभ-विष्यतीति तत्र सम्यङ् तिष्ठति । 'समवप्रविभ्यः स्थः' इति तङ् । लब्धप्रसरा कामुकवशीकरणेन लब्धप्रागल्भ्या वेशवनितेव श्रीर्दुराराध्येत्यर्थः ॥ ५ ॥

---

१ जडयति B. G. E.; हरयति N. (r); दहय नृ° P. २ °क्तः G. E. ३ °परो for °तरो A.; °परा P. ४ वेत्तु B. ५ °राधा omitting हि E.; राज्य for राज M.G. E. ६ °भवात्रा° A; M. संतुष्यते for सं-ते. ७ मूर्खान् B. N. R. ८ °भ्य. P. E.; °नपि E. ९ वार N. (r).

[1]अन्यच्च । कृतककलहं कृत्वा स्वतन्त्रेण किंचित्कालान्तरं व्यवहर्त्तव्यमित्यार्यादेशः[2] । स च कथमपि मया पातकमिवाभ्युपगतः । अथ वा शश्वदार्योपदेशसंस्क्रियमाणमतयः[3] सदैव स्वतन्त्रा वयम् । कुतः ।

इह विरचयन्साध्वीं[4] शिष्यः क्रियां न निवार्यते
त्यजति तु यदा[5] मार्गं मोहात्तदा गुरुरङ्कुशः ।
विनयरुचयस्तस्मात्सन्तः सदैव निरङ्कुशाः
[6]परतरमतः स्वातंत्र्येभ्यो वयं हि पराङ्मुखाः ॥ ६ ॥

---

आर्योपदेश इति । आर्योपदेशेन संस्क्रियमाणमतयः शिक्ष्यमाणा इत्यर्थः ॥

इह विरचयन्निति । साध्वाचारः शिष्यः गुरुभिर्न नियम्यते अपि त्वनुमोद्यते । त्यक्तसन्मार्गस्य गुरुरङ्कुशः शिक्षकः । विनये गुरुकृतशिक्षणे रुचिर्येषां ते सदाचारास्तु सदा निरङ्कुशाः स्वतन्त्रा एव वयम् ॥ हिशब्दस्त्वर्थ उक्तवैलक्षण्यद्योतकः । एवं स्वातन्त्र्ये सिद्धेऽपि वयं त्वत एभ्यः । पञ्चम्यास्तसिल् । उक्तविधेभ्यः कंचित्कालं स्वातन्त्र्येण व्यवहर्तव्यमित्यादिष्टेभ्यः स्वातन्त्र्येभ्यः परतरमत्यन्तपराङ्मुखाः सर्वथा ईदृशं स्वातन्त्र्यं नेच्छामः । किंचित्कार्यानुरोधात्त्वार्यादेशेनेदं स्वातन्त्र्यमात्मन्यध्यस्य स्वतन्त्रवद्व्यवहराम इति भावः । यद्वा आर्यानुरोधादिदं स्वातन्त्र्यं कथंचिदभ्युपगतम् । अतः परतरं अत उत्तरे काले । 'कालाध्वनोरत्यन्तसंयोगे द्वितीया' । स्वातन्त्र्येभ्यो वयं पराङ्मुखाः अतः परं कदापि स्वातन्त्र्यं नेच्छामः । आर्याधीना एव सर्वदा वर्तामहे इति भावः ।

---

१ अन्यच्च वा (?) G; M. R. om. कृ-त्वा; P. om. क in कृतक and has स्वातन्त्र्येण for स्व-ण; B. E. N. read च त्वया, G. त्वया, before किंचित्; B. N. read कंचित्कालम्; after this R. has त्वया. २ °त्यार्योपदेशः B.; °त्याचार्यादेशः. G; N. (s) has after this स च कथं कथमपि मया महापातकवदभ्युपगतः; E. agrees with text having only अनुगतः for अभ्युप°. ३ मनसः N. (s); B. N. read सदैवास्व°. ४ हि for वि B. R; om. in M; विचार्यते for निवार्यते N. (s). ५ यथा M; G. has हि before तु. ६ पदमपि यतः E.

([1]प्रकाशम् ।) आर्य वैहीनरे, सुगाङ्गमार्गमादेशय ।

कञ्चुकी—इत इतो देवः । ([2]नाट्येन परिक्रम्य ।) अयं सुगाङ्ग-प्रासादः । शनैरारोहतु देवः ।

राजा—([3]नाट्येनारुह्य दिशोऽवलोक्य ।) अहो शरत्समयसंभृत-शोभानां दिशामतिर्[4]रमणीयता । कुतः ।

शनैः [5]श्यानीभूताः सितजलधरच्छेदपुलिनाः
[6]समन्तादाकीर्णाः कलविरुतिभिः सारसकुलैः ।
चिताश्चित्राकारैर्निशि विकचनक्षत्रकुमु[7]दै-
र्नभस्तः स्यन्दन्ते सरित इव दीर्घा दश दिशः ॥ ७ ॥

अपि च ।

---

शनैरिति शनैः क्रमेण श्यानीभूताः कृशीभूताः । संयोगादेरातो-धातोर्यण्वत इति श्यायतेर्निष्ठानत्वम् । विरलतया प्रतीयमाना दिशः सरितश्च नभस्तः वियत्तः श्रावणमासाच्च । 'नभाः श्रावणिकश्च सः' इत्यमरः । स्यन्दन्ते निःसृता इव दृश्यन्ते । प्रावृषि दिशः सरितश्च घना-वृततया सर्वत उत्कूलसलिलाप्लुततया च विविक्तत्वेन न गृह्यन्ते शरदि तु विरलाः स्फुटं प्रतीयन्ते इति भावः । अत्र शरदि दिशां सरितां च वर्ण्यत्वादिवशब्दमावर्त्य दिशः सरित इव सरितश्च दिश इवेति च परस्पर-मुपमानोपमेयभावः ॥ सितजलधरच्छेदपुलिनाः विकचनक्षत्रकुमुदैरित्यत्र चोपमितसमासः । एवं च 'पर्यायेण द्वयोस्तच्चेदुपमेयोपमा मता' इत्युप-मेयोपमालंकारः । धर्मोऽर्थ इव पूर्णश्रीरर्थो धर्म इव त्वयीति अत्र पूर्णश्री-

---

१ Om. R.; प्रासाद before मार्ग B. E. N. G; M. R. read आदर्शय for आदेशय; G. E. om. मार्ग. २ Before this B. N. have राजा परिक्रामति and for नाट्येन they have कञ्चुकी; E. om. नाट्येन and after परिक्र° has कञ्चु । देव; G. E. have शनैः twice, G. has उपरोढुमर्हत्यार्यः; B. N. आरोढुमर्हत्यार्यः; E. agrees having देवः for आर्यः. ३ °नावरुह्य G; G. and E. add च after °लोक्य further on. संप्रति before शरत्स° G.; N. (s) om. संभृत; for स-भृत G. has समागमसमागतं and शोभां after that. After शोभां G. N. read विभ्रतीनाम्; B. E. read शोभाविभूतीनाम्. ४ दिशामितिरमणीया P.; °मतिराम-णीयकम् G; N. substitutes for कुतः and E. adds after it सप्रति हि. ५ शान्ता B. N.; शान्ती G.; श्यामी P; E. has शान्ताकृता; E. has भू before च्छेद. ६ पुरस्तादाकीर्णाः G. ७ कुसुमैः E.

अपामुद्वृत्तानां निजमुपदिशन्त्या स्थितिपदं
दधत्या शालीनामवनतिमुदारे सति फले ।
मयूराणामुग्रं विषमिव हरन्त्या मदमहो
कृतः कृत्स्नस्यायं विनय इव लोकस्य शरदा ॥ ८ ॥

इमामपि ।

भर्तुस्तथा कलुषितां बहुवल्लभस्य
मार्गे कथंचिदवतार्य तनूभवन्तीम् ।
सर्वात्मना रतिकथाचतुरेव दूती
गङ्गां शरन्नयति सिन्धुपतिं प्रसन्नाम् ॥ ९ ॥

---

त्ववत् श्यानीभूता इत्यादिसाधारणधर्मोपादानम् । अतः पूर्णेयमुपमा । सा च नभस्त इति श्लेषानुप्राणिता । अनेन शरद्गुणकथनेन स्वस्य जैत्रयात्रासंनाहसमय इति ध्वनितम् । वक्ष्यति च चाणक्यः—सोऽयं व्यायामकालो नोत्सवकाल इति ॥ ७ ॥

अपामिति । स्पष्टोऽर्थः । अनेन पद्येनोद्वृत्तस्य मलयकेतोर्भावी निग्रहः राक्षसस्य विषवदत्युग्रविक्रमनीतिविषयकमदापहरणं साम्राज्यफलशालिनो महोन्नतेश्चन्द्रगुप्तस्य विनयसंपच्च समासोक्त्या सूचिता ॥ ८ ॥

भर्तुरिति । बहुवल्लभस्येति हेतुगर्भविशेषणम् । बहुवल्लभत्वादिव कलुषितामिति कालुष्यहेतूत्प्रेक्षा सा च वाचकाभावाद्गम्या । वर्षात्ययेन कृशीभवन्तीं स्वच्छसलिलां गङ्गां भर्तुः समुद्रस्य मार्गे कथंचिदवतार्य शरत्सिन्धुपतिं नयति । अत्रोपमा । रतिकथाचतुरा दूतीवेति दूतीदृष्टान्तानुरोधान्नायकापराधकुपितां विरहकृशां नायिकां प्रसादमुखीं कृत्वा नायकं प्रति यथा चतुरदूती प्रापयति तद्वदिति गम्यते । अनेन पद्येन राक्षसमतिपरिगृहीततया कलुषितां संशयितामिव नन्दकुललक्ष्मीं चतुरदूतीवातिगभीरा चाणक्यनीतिः सागरवदतिगभीराशयं चन्द्रगुप्तं सर्वात्मना सर्वप्रकारेण प्रापयतीति रूपकातिशयोक्त्या सूचितम् । अयमपि बीजावमर्शः ॥ ९ ॥

---

१ B. N. have visarga here and पथम् for पदम् at the end. E. also has पथम्; P. om. it. २ ददत्या M. R.; दत्या A. P. ३ मुद° P. ४ अपि च B. N.; इमां च G. ५ कण्ठात् G. ६ °न्नम् P.

[1](समन्तान्नाट्येनावलोक्य।) अये, कथमप्रवृत्तकौमुदीमहोत्सवं कुसुमपुरम्। आर्य वैहीनरे, [2]अथास्मद्वचनादाघोषितः कुसुमपुरे कौमुदीमहोत्सवः।

कञ्चुकी—[3]अथ किम्।

राजा—[4]तत्किं न गृहीतमस्मद्वचनं पौरैः।

कञ्चुकी—(कर्णौ पिधाय।) [5]शान्तं पापं शान्तं पापम्। पृथिव्यामस्खलित[6]पूर्वं देवस्य शासनं कथं पौरेषु स्खलिष्यति।

राजा—[7]तत्कथमप्रवृत्तकौमुदीमहोत्सवमद्यापि कुसुमपुरम्।

धूर्तैर[8]न्वीयमानाः स्फुटचतुरकथाकोविदैर्वेशनार्यो
नालंकुर्वन्ति रथ्याः पृथुजघनभराक्रान्ति[9]मन्दैः प्रयातैः।
अन्योन्यं स्पर्द्धमाना न च गृहविभवैः स्वामिनो मुक्तशङ्काः
[10]साकं स्त्रीभिर्भजन्ते विधिमभिलषितं पार्वणं पौरमुख्याः॥१०॥

---

धूर्तैरिति। स्वामिनो गृहस्वामिनो वसनभूषणादिसमृद्धिं स्पर्धयान्योन्यमाधिक्येन दर्शयन्तः पौरमुख्याः स्वस्त्रीभिः सार्द्धं राजानुमतत्वान्मुक्तशङ्का अत एव बहिःक्रीडनं विगीतमपि पावनं राजानुमत्या प्रशस्तमित्यर्थः। चिरादीप्सितं क्रीडाविधिं कुतो न भजन्त इति कञ्चुकिनं प्रति

---

१ For स-क्य. M. R. read निर्वर्ण्य; A. P. om. नाट्येन; G. E. have तत् before कथ°; G. om. प्र and reads °त्तम् for °त्त; E. adds एव before कुसुम°; B. N. G. (in margin) add पश्यामि after °परम्. २ B. N. add त्वया after अथ. G. reads मद्वच° for अस्मद्वच.° ३ B. E. N. read देव before this and आघोषितो देवस्याज्ञया कुसुमपुरे कौमुदीमहोत्सवः after किम्. ४ Before तत् B. E. N. G. have आर्य and after it B. N. have एवम्; R. M. B. N. add परि before गृही°; B. E. N. G. read पौरजनेन for पौरैः. ५ देव before this B. E. N. G; one शा-पम् om. R. E. ६ पृथिव्याम् comes after this in G. E. and शासनम् before देवस्य M.; स्खलितुमर्हति for स्खलिष्यति B. E. N. G. ७ B. E. N. G. have आर्य वैहीनरे before this; G. has यद्येवं तत्किमर्थमप्रवृत्तम्; E. यद्येवं तत्किमप्रवृत्तकौ°; अद्या-पुरम् om. in G; A. P. om. कुसुम; B. E. N. G. add पश्यामि। पश्य after पुरम्. ८ दूतैर°M. ९ °क्रान्त°G. १० सायम् N. (s); सार्द्धम् N. (r); पावनम् for पार्वणं A. M. R.

कञ्चुकी—[1]एवमेवैतत् ।

राजा—किमेतत् ।

कञ्चुकी—[2]देव, इदम् ।

राजा—[3]स्फुटं कथय ।

कञ्चुकी—[4]प्रतिषिद्धः कौमुदीमहोत्सवः ।

राजा—([5]सक्रोधम् ) आः, केन ।

कञ्चुकी—[6]देव, नातः परं विज्ञापयितुं शक्यम् ।

राजा—न खलु [7]आर्यचाणक्येनापहृतः प्रेक्षकाणामतिशयरमणीयश्चक्षुषो वि[8]षयः ।

कञ्चुकी—[9]देव, कोऽन्यो जीवितुकामो देवस्य शासनमतिवर्तेत ।

राजा—शोणो[10]त्तरे, उपवेष्टुमिच्छामि ।

---

प्रश्नः । 'पार्वणम्' इति कचित्पाठः । पर्वणि कार्तिक्यां पौर्णमास्यां भवं क्रीडाविधिमित्यर्थः ॥ १० ॥

एवमेतदिति । चाणक्यकृतं प्रतिषेधं सहसा स्फुटं वक्तुमतिभीतस्येदमस्फुटं सचकितं प्रतिवचनम् ।

---

१ B. E.N. G. have देव before this; B.E. N. om एव; G. om. एतत्; R. M. read तत् for एतत्. २ om. G. E.; B. G. N. have अतः after this; E. has आः. ३ B. E. N. G. have आर्य before this and अभिधीयताम् for कथय. ४ B. E. N. G. have देव before this. ५ सरोषम् G; B. N. have आर्य after this and G. om. आः. ६ B. N. om. this; B. E. N. G. read अस्माभिर्देवो before विज्ञापयितुं and शक्यते for शक्यम् (G. has शक्यः). ७ आर्येण B. N; E. has आर्य before न. ८ °षोऽविषयः E; M. R. om. अपहृत-यः. ९ om. M. R; कोन्यो after जी-मो G. E.; जीवित° A. P.; जीवतु° E.; उल्लङ्घयिष्यति for अतिवर्तेत B. E. N. G. १० Before this P. A. E. read सक्रोधम्; G. सरोषम्.

प्रतीहारी—देव[1], एदं सिंहासणम्। (क)

राजा—(नाट्येनोपविश्य[2]।) आर्य वैहीनरे, आर्यचाणक्यं द्रष्टुमिच्छामि।

कञ्चुकी—यदाज्ञापयति देवः। (इति[3] निष्क्रान्तः।)

(ततः प्रविशति आसनस्थः[4] स्वभवनगतः कोपानुविद्धां चिन्तां नाटयंश्चाणक्यः।)

चाणक्यः—कथं[5] स्पर्द्धते मया सह दुरात्मा राक्षसः।

कृतागाः कौटिल्यो भुजग इव निर्याय[6] नगरा-
द्यथा नन्दान्हत्वा[7] नृपतिमकरोन्मौर्यवृषलम्।
तथाहं मौर्येन्दोः श्रियमपहरामीति कृतधीः
प्रकर्षं[8] मद्बुद्धेरतिशयितुमेष व्यवसितः॥ ११॥

---

(क) देव, इदं सिंहासनम्।

---

महात्मत्वात्संग्राह्यः स्वशत्रुपक्षमाश्रित इति रोषावेशाद्दुरात्मेति गालनम्।

कृतागा इति। नन्दैः कृतमागोऽऽसनाकर्षणरूपं यस्य सः। अत्र दृष्टान्तानुरोधेन तथाहं मौर्यं हत्वा मलयकेतुं राज्ये स्थापयिष्यामीत्येतावति वक्तव्ये श्रियमपहरामीत्येतावन्मात्रं राक्षससाहसं अनुवदतश्चाणक्यस्यायं भावः। ममेव नास्य बुद्धिबलं परंतु मत्सरमात्रेण 'अशक्तोऽहं गृहारम्भे शक्तोऽहं गृहभञ्जने' इति न्यायेन मौर्यापकारमात्राय प्रयतमानः सन्केवलं

---

१ Om. M.; देव्व R.; देव scored through in G; G. has इअं सीहासनं उपविसदु देवो; E. दैवस्स इमं सिंहासणं उपविशदु देवो; B. N. agree with text adding उपविसदु देवो. २ सक्रोधम् before this E; G. om. आर्य; A. M. read आर्य चा°; A. P. have अकृतकृत्यान्तरम् before that; N. (s) has प्रष्टुम् for द्रष्टुम्. ३ E. om. इति. ४ G. E. om. आसनस्थः and after °गतः add कृतासनपरिग्रहः. ५ आत्मगतम् before this B. G. N; E. has स्पर्धते after सह and reads स्पर्धति; B. N. read राक्षसहतकः for राक्षसः; G. E. B. N. add कुतः after this. ६ निर्गत्य M. R. ७ नन्दं हत्वा B. N. G. ८ °मुप° G; G. reads हतधीः for कृतधीः. ९ प्रभावम् B. E. N.; प्रसादम् G; A. has यद्ब°.

( आकाशे लक्ष्यं बद्ध्वा । ) राक्षस राक्षस, विरम्यतामस्माद्दुर्व्यसनात् ।[1]

उत्सिक्तः कुसचिवदृष्टराज्यभारो
नन्दोऽसौ न भवति चन्द्रगुप्त एषः ।
चाणक्यस्त्वमपि[3] च नैव केवलं ते
साधर्म्यं मदनुकृतेः[4] प्रधानवैरम् ॥ १२ ॥

( विचिन्त्य । ) अथ वा नातिमात्रमत्र वस्तुनि मया मनः खेदयितव्यम् । कुतः[5] ।

मद्भृत्यैः किल सोऽपि[6] पर्वतसुतो व्याप्तः प्रविष्टान्तरै-
रुद्युक्ताः स्वनियोगसाधनविधौ सिद्धार्थकाद्याः[8] स्पशाः ।

---

पौरुषबलमवष्टभ्य मद्बुद्धेः प्रकर्षमतिशयितुं व्यवसित इति अहो राक्षसस्य दुर्व्यवसितमिति । वक्ष्यति च । केवलं प्रधानवैरं मदनुकृतेः साधर्म्यमिति ॥ ११ ॥

उत्सिक्त इति । उद्रिक्त इत्यर्थः । प्रधानवैरं परिवृढद्वेषः केवलं ते तव मदनुकृतेः मदनुकरणस्य संबन्धि मत्स्पर्धाविषयकमिति यावत् । साधर्म्यं समानो धर्मः । स्वार्थे ष्यञ् बहुव्रीहेर्भावे वा । न तु बुद्धिप्रकर्षादिः मत्सादृश्ये तव समानो धर्मोऽस्ति । अनेन यथा नन्दा उन्मूलितास्तथाहमपि मौर्यमुन्मूलयामीति प्रधानवैरमात्रेण मया सह स्पर्धते न तु बुद्धिप्रकर्षेणेति भावः। मदनुकृताविति विषयसप्तम्यन्तः पाठः साधुः॥१२॥

मद्भृत्यैरिति । प्रविष्टान्तरैर्वशीकृतशत्रुहृदयैर्भागुरायणादिभिः । स्पशा गूढप्रणिधयः । 'अपसर्पश्चरः स्पशः' इत्यमरः। सिद्धार्थकादयो भेदकर्मणि उद्युक्ता एव वर्तन्ते। अहमपि संप्रति चन्द्रगुप्तेन सह कृतककलहं

---

१ प्रत्यक्षवत् added before this in B. E. G. N.; राक्षस om. in R. E. M.; रे for it G; G. has विरम्यताम् twice.; दुर्व्यवसितात् B. N.; व्यवसितात् G.; दुरध्यवसितात् E; E. adds कुतः after this. २ तन्त्रो. B. E. N. G. ३ °स्त्वमासि N. (s); नचैव R. P. ४ G. om. visarga. ५ Om. R; after अथवा P; °मस्मिन् for °मत्र B. E. N. G. ६ Om. R. ७ नाम B. E. N. G.; प्रतिष्ठान्तरैः for प्रविष्टान्तरैः B. N. ८ उद्युक्ताश्च नि° B.; चराः for स्पशाः N. (s) E.

कृत्वा संप्रति कैतवेन कलहं मौर्येन्दुना राक्षसं
भेत्स्यामि स्वमतेन भेदकुशलस्त्वेषं प्रतीपं द्विषः ॥ १३ ॥

(प्रविश्य ।)

कञ्चुकी—कष्टं खलु सेवा ।

भेतव्यं नृपतेस्ततः सचिवतो राज्ञस्ततो वल्लभा-
दन्येभ्यश्च वसन्ति येऽस्य भवने लब्धप्रसादा विटाः ।
दैन्यादुन्मुखदर्शनापलपनैः पिण्डार्थमायस्यतः
सेवां लाघवकारिणीं कृतधियः स्थाने श्ववृत्तिं विदुः ॥१४॥

(परिक्रम्यावलोक्य च ।) इदमार्यचाणक्यगृहम् । यावत्प्रविशामि ।

कृत्वा तेनोपायेन प्रतीपमस्मासु प्रतिकूलचारिणं राक्षसं द्विषः सपत्नान्मलयकेतोः सकाशात् भेत्स्यामि तयोर्विरोधं संपादयिष्यामीत्यर्थः । यद्वा प्रतीपमिति विधेयं विशेषणं द्विष इति षष्ठी । राक्षसं द्विषः प्रतीपं सन्तं भेत्स्यामि प्रतिकूलत्वेनापाद्य विघटयिष्यामीत्यर्थः । एष राक्षसः स्वमतेन स्वसंमत्या भेदकुशलोस्तु, चन्द्रगुप्ताच्चाणक्यं भेत्स्यामीति स्वस्मिन्कुशलंमन्योस्तु, न त्वस्य ममेव सामग्रीपौष्कल्यं बुद्धिबलं चास्तीति भावः । इयं नियताप्तिः । 'अपायाभावतः कार्यनिश्चयो नियताप्तिका' इति लक्षणात् ॥ १३ ॥

कष्टमिति । सामान्ये नपुंसकम् ।

भेतव्यमिति । दैन्याद्धेतोः उन्मुखदर्शनानि च अपलपनानि च राजरहस्यगोपनानि च तैः पिण्डार्थमुदरभरणार्थमायस्यतः क्लिश्यमानस्य सेवकजनस्य सेवामित्यन्वयः । श्वविषये अपलपनं ताडनभयेन गात्रसंकोचनम् । सिषाधयिषितकार्यानुरोधादिदमाहितं चाणक्यमौर्ययोः कपटवैमत्यं तथ्यत्वेनैव गृह्णतः कञ्चुकिनोऽयं निर्वेदः ॥ १४ ॥

१ कुशलो ह्येष B. N. E.; °लं ह्येष G.; प्रतीप M. R. २ कष्टा. B. G. N; B. E. G. N. add नाम । कुतः at the end of this sentence. ३ भेत्तव्यम्. A. ४ भवन्ति B. E. N. G; for येस्य. M. E. read यस्य. ५ दर्शनेन नटनैः N. (r); दर्शनापनयनैः G.; दर्शनोपनयनैः E; P. has सेवार्थम् for पिण्डार्थम्; आयास्यतः B. E. N. (r); आपश्यतः E.; आदास्यतः G. ६ E. om. अव-च.; R. and M. om. च; °माचार्य° for °मार्य° P. G; B. E. N. G. add स्य before गृहम्.

([1]प्रविश्यावलोक्य च।) अहो राजाधिराजमन्त्रिणो विभूतिः । तथाहि ।

उपलशकलमेतद्भेदकं गोमयानां
बटुभिरुपहृतानां बर्हिषां [2]स्तूपमेतत् ।
शरणमपि समिद्भिः शुष्यमाणाभिराभि-
र्विनमि[3]तपटलान्तं दृश्यते जीर्णकुड्यम् ॥ १५ ॥

[4]तत्स्थाने खल्वस्य वृषलोद्यश्चन्द्रगुप्त इति । कुतः ।

[5]स्तुवन्ति श्रान्तास्याः क्षितिपतिमभूतैरपि गुणैः
[6]प्रवाचः कार्पण्याद्यदवितथवाचोऽपि पुरुषाः ।
अभावस्तृष्णायाः स खलु सकलः स्यादितरथा
निरीहाणामीशस्तृणमिव तिरस्कारविषयः ॥ १६ ॥

---

उपलशकलमेतदिति । त्रेताग्निसंभरणसमिन्धनाद्यर्थं शुष्कगोमयगोलकचूर्णनार्थमुपलशकलम् । उपलोऽपि शकलो न संपूर्णोपल इति विभूतिनैरपेक्ष्यमस्योपलशकलजीर्णकुड्यादिभिरुक्तम् । बर्हिषां दर्भाणां स्तूपं निधननामकमुष्टिसमूहः । शरणं गृहं समिद्भारेण विनमितपटलान्तमतिजीर्णत्वाद्विभुग्नतृणमयछदिप्रान्तम् । 'वलीकनीध्रे पटलप्रान्तेऽथ पटलं छदिः' इत्यमरः । अनेनास्याप्रतिग्रहत्वकर्मठत्वादयः श्रोत्रियगुणा उक्ताः । तथोक्तं पुरस्तात्—'वंशे विशालवंशानामृषीणामिव भूयसाम् । अप्रतिग्राहकाणां यो बभूव भुवि विश्रुतः ॥' इति ॥ १५ ॥

वृषलोद्य इति । वृषलशब्देन वदितुमर्हः । 'सुपि क्यप् च' इति क्यप्प्रत्ययः । निस्पृहत्वाद्राजानमपि तृणीकृत्य भृत्यवद्व्यपदिशतीत्यर्थः ।

तदेव विवृणोति—स्तुवन्तीति । अवितथवाचः सत्यवचनशीला

---

१ B. E. N. G. have नाट्येन before this. महाराजा° for राजा° E; G. adds स्य before मन्त्रि°; गृहभू° for विभू° B. N; B. E. G. N. have कुतः for तथाहि. २ स्तोम B. G.; कूट E.; गुच्छ N. (r); सूप (?) N. (s) ३ विंमलित. A. ४ ततः स्था° B. N. (s); R. E. M. N. (s) om. खलु; वृषलो देवः for वृषलोद्यः B. N. G; देवोद्ग° E; G. E. om. इति. ५ °न्तः G. E.; °न्त्य° B. N. ६ प्रवादैः M. R.; अति for यत् B.; कृतिनः for पुरुषाः B.

([1] विलोक्य संभयम् ।) अये, तदयमार्यचाणक्यस्तिष्ठति ।

> यो नन्दमौर्यनृपयोः परिभूय लोक-
>
> मस्तोदयावदिशदप्रतिभिन्न[2]कालम् ।
>
> पर्यायपातितहिमोष्ण[3]मसर्वगामि
>
> धाम्नातिशाययति धाम सहस्रधाम्नः ॥ १७ ॥

([4] जानुभ्यां भूमौ निपत्य ।) जयत्वार्यः ।

**चाणक्यः**—[5] वैहीनरे, किमागमनप्रयोजनम् ।

---

अपि कार्पण्यात्प्रवाचः उद्दण्डवचनाः सन्तः अभूतैरसत्यैर्गुणैः स्तुवन्तीति यत्स खलु तृष्णायाः प्रभाव इति योजना ॥ १६ ॥

अये तदयमिति । तदयमिति कर्मधारयसमासः सोऽयमित्यर्थः ।

यो नन्देति । लोकं नन्दामात्यादिकं परिभूय स्वमन्त्रशक्त्या मोहयित्वा नन्दमौर्ययोरभिन्नकालं युगपदस्तोदयौ दत्तवान् । अत एव सर्वशत्रुव्यापिना स्वेन धाम्ना असर्वगामि पर्यायेण कालक्रमेण पातितं नाशितं हिममुष्णं वा येन तत्सहस्रधाम्नः सूर्यस्य धाम तेजः अतिशाययति अतिक्रामयति । धामातिशेते तेन धाम्ना स्वयं अतिशाययति । सोऽयमार्यश्चाणक्यस्तिष्ठतीति पूर्वेणान्वयः । अतिपूर्वकाच्छीङो हेतुमण्णिच् । अत्र लोकशब्देन लोकालोकपर्वतो लक्ष्यते । असर्वगामीत्यनेन सूर्यतेजसस्तद (न?) तिक्रमणमुक्तम् । एवं च लोकं परिभूयातिक्रम्य नन्दमौर्ययोर्युगपदस्तोदयौ दिशच्चाणक्यतेजःलोकमनतिक्रामतोऽत एवासर्वगामिनः क्रमेण हिमो-

---

१ B. N. A. P. om. विलो;° M. R. read स्वगतम् for वि-म्.—G. om. अये तत्. which follows; E. om. तत्; B. N. om अये; N. (s) adds स एषः; E. य एषः. २ For अदिशदप्रति°. B. N. read प्रतिदिशन्नवि°; M. अदिशधक्प्रति (?). ३ °ष्णिम° B. N.; °स्थम (?) A.; °ष्ण° om. in E. ४ प्रकाशम् before this M. R.; पतति for निपत्य G; B. N. have जयतु twice; E. reads जयत्यार्यः and G. om ज-र्यः. ५ B. E. N. G. have नाट्येनावलोक्य; E. has also आर्य before this.

कञ्चुकी—आर्य, प्रणतससंभ्रमोच्चलितभूमिपालमौलिमालामाणिक्यशकलशिखापिशङ्गीकृतपादपद्मयुगलः सुगृहीतनामधेयो देवश्चन्द्रगुप्त आर्यं शिरसा प्रणम्य विज्ञापयति—'अकृतक्रियान्तरायमार्यं द्रष्टुमिच्छामि' इति।

चाणक्यः—वृषलो मां द्रष्टुमिच्छति। वैहीनरे, न खलु वृषलश्रवणपथं गतोऽयं मत्कृतः कौमुदीमहोत्सवप्रतिषेधः।

कञ्चुकी—आर्य, अथ किम्।

चाणक्यः—(सक्रोधम्।) आः, केन कथितम्।

कञ्चुकी—(सभयम्।) प्रसीदत्वार्यः। स्वयमेव सुगाङ्गप्रासादगतेन देवेनावलोकितमप्रवृत्तकौमुदीमहोत्सवं पुरम्।

चाणक्यः—आः, ज्ञातम्। ततो भवद्भिरन्तरा प्रोत्साह्य कोपितो वृषलः। किमन्यत्।

(कञ्चुकी भयं नाटयंस्तूष्णीमधोमुखस्तिष्ठति)।

---

ष्णयोरुदयास्तमयौ दिशतः सूर्यतेजसोऽप्यतिशयितमिति व्यतिरेकालंकारः लोकमिति श्लेषानुप्राणितः॥ १७॥

---

१ प्रणतिसंभ्र° B. E. N. G.; °भ्रमच° A. E; °मससमुच° E. N.; °माच° P.; °मे omitting all to भूमि° G.; B. E. N. G. om. माला further on and read मणि for माणिक्य and सकल for शकल; युगुल for युगल at the end of the compound P. २ For सु-स्य B. and N. read पादपद्मयोरार्यं प्रणिपत्य देवश्चन्द्रगुप्तो; G. E. agree, om. पद्म and G. reading आर्यस्य. ३ For अकृ°- °मार्यम् B. N. (r) read क्रियान्तरमन्तरायमन्तरेणार्यम् and E. reads क्रियान्तराय &c.; P. agrees with text but has °राल° for राय°; E. also om. last इति. ४ After इच्छति E; G. has वैहीनरे before this instead of after इच्छति. ५ B. E. N. G. have वृषलस्य; B. N. श्रवणमुपग°; E. श्रवणपथमुपग°; G. श्रवणपथमाग°; G om. मत्कृतः; B. N. read मया कृतः. ६ भयं नाटयित्वा B. N.; भयं नाटयन् E.; °यति G.; शिखर before गतेन B. N. ७ A. P. read °नालोकि°; M. om. अवलोकितम्; A. P. om. कौमुदी and B. E. N. G. add कुसुम before पुरम्. ८ आ E; G. om. it and ज्ञातम्; B. N. after ज्ञातम् read तिष्ठ तावद्भवद्भिरेव मदन्तरेण प्रो°; G. has तिष्ठतु तावत्ततो भवद्भिरन्तरेण प्रो°; E. उत्तिष्ठ ततो भवद्भिर्मदन्तरेण प्रो°; B. N. read रोषितो for कोपितो. ९ B. G. N. read सभयम् for भ-यन्; A. has एव before अधो°; G. om. all after सभयम्.

चाणक्यः—अहो, राजपरिजनस्य चाणक्योपरि[1] प्रद्वेषपक्षपातः। अथ क्व वृषलः[2]।

कञ्चुकी—(भयं नाटयन्।[3]) आर्य, सुगाङ्गगतेन देवेनाहमार्यपादमूलं प्रेषितः।

चाणक्यः—(उत्थाय।[4]) सुगाङ्गमार्गमादेशय।

कञ्चुकी—इत[5] इत आर्यः।

(उभौ परिक्रामतः।)

कञ्चुकी—एष[6] सुगाङ्गप्रासादः। शनैरारोहत्वार्यः।

चाणक्यः—(नाट्येनावरुह्यावलोक्य च।[7]) अये, सिंहासनमध्यास्ते वृषलः। साधु[8] साधु।

नन्दैर्वियुक्तमनपेक्षितराजराजै-[9]
रध्यासितं च वृषलेन वृषेण राज्ञाम्।
सिंहासनं सदृशपार्थिवसंगतं च
प्रीतिं परां[10] प्रगुणयन्ति गुणा ममैते ॥ १८ ॥

---

नन्दैर्वियुक्तमिति। अनपेक्षितराजराजैस्तृणीकृतकुबेरैः। राज्ञां वृषेण श्रेष्ठेन। कुबेरवदतिधनाढ्यानपि नन्दान्हत्वा तत्पदे यः कश्चिदयोग्यो न स्थापितः किंतु नन्देभ्योऽप्यतिशयितो धीरोदात्तत्वादिमहाराजगुणोत्तरश्चन्द्रगुप्तोऽभिषेचितः। अतः सिंहासनं योग्यपार्थिवसंगतं जातमिति शेषः।

---

१ °क्यस्यो B. E. N. G.; P. om. प्र; G. reads महान् for प्रद्वेष; B. N. read वि for प्र. २ तिष्ठति after this B. N. G.; E. has क्व after वृ°. ३ G. E. om. भ-न्; G. om. आर्य; प्रासाद before गतेन B. E. N. G.; आर्यस्य E; A. om. पाद. ४ नाट्येन before this P; B. E. N. G. have कञ्चुकिन् after this and प्रासाद after सुगाङ्ग; G. E. om. मार्ग and R. reads आदर्शय. ५ P. R. om. one इत; M. E. आर्य; B. N. add इति before उभौ. ६ अयम् B. N.; आर्यासुम G.; परिक्रम्य कञ्चुकी। आर्यायम् E.; °सादं शनैः शनैः &c. G; E. also has शनैः twice; °रारोढुमर्हत्यार्यः B. E. N. G. ७ वि for अव G; B. E. N. G. after च add सहर्षमात्मगतम्; °सनमा° A. ८ B. N. G. om. one साधु further on. ९ वृत्तैः B. N. १० भृशम् for पराम् G.; प्रीतित्रयम् E.

(उपसृत्य।) विजयतां[1] वृषलः।

**राजा**—(आसनादुत्थाय[2]।) आर्य, चन्द्रगुप्तः प्रणमति। (इति पादयोः पतति)।

**चाणक्यः**—(पाणौ गृहीत्वा।) उत्तिष्ठोत्तिष्ठ[3] वत्स।

आ शैलेन्द्राच्छिलान्तःस्खलितसुरनदीशीकरासारशीता-[4]
 त्तीरान्तान्नैकरागस्फुरितमणिरुचो[5] दक्षिणस्यार्णवस्य।
आगत्यागत्य भीतिप्रणतनृपशतैः[6] शश्वदेव क्रियन्तां
 चूडारत्नांशुगर्भास्तव[7] चरणयुगस्याङ्गुलीरन्ध्रभागाः॥ १९॥

**राजा**—आर्यप्रसादादनुभूयत[8] एव सर्वम्। तदुपविशत्वार्यः।

(उभौ यथोचितमुपविष्टौ[9]।)

**चाणक्यः**—वृषल, किमर्थं वयमाहूताः[10]।

---

इति स्वस्योचितकारित्वादिगुणैः स्वयमन्तस्तुष्यति। 'प्रीतिं परां प्रगुणयन्ति गुणा ममैते' इति। एते नन्दोद्धारणादिसाधका मम गुणा मम प्रीतिं प्रगुणयन्ति वर्धयन्ति॥ १८॥

आ शैलेन्द्रादिति। शिलान्तस्खलितेत्यादिविशेषणात् शैलेन्द्रो हिमवान्गम्यते। आ हिमाचलादासेतोश्च समागत्य सर्वे नृपतयः त्वां प्रणमन्त्वित्याशीः॥ १९॥

---

१ देवः G. २ सिंहास°. B. N; B. E. after उत्थाय add चाणक्यस्य पादौ गृहीत्वा and B. E. and G. om. इति-ति at the end of speech. ३ B. E. N. om. one उत्तिष्ठ, G. has वत्स before this and पश्य after it. ४ °न्तः A. G; B. N. read धुनी for नदी further on; N. (s) सीकराचारवर्षा; °E. has वर्षा° for शीता°. ५ For °त्तीरा°. B. E. G. read °दातीरान्नै°; N.(s) °दाप्रान्तान्नै°; P. also reads धामस्फुटित for रा-त. ६ भीत M. R.; एवम् for एव A. P. ७ रत्न A. P. ८ E. has युष्मत् before प्रसा°, G. om. प्रसादात्. For सर्वं, तत् B. N. G. एतन्नाशास्यते; E. एतन्नाशास्यं मे; B. N. add इति after आर्यः. ९ G. om. उभौ; B. E. N. G. read यथासनम्. १० वयम् before कि° A. P.

**राजा**—आर्यस्य दर्शनेनात्मानमनुग्राहयितुम्[1]।

**चाणक्यः**—([2]सस्मितम्।) अलमनेन प्रश्रयेण न निष्प्रयोजनमधिकारवन्तः प्रभुभिराहूयन्ते[3]।

**राजा**—[4]आर्य, कौमुदीमहोत्सवप्रतिषेधकस्य किं फलमार्यः पश्यति।

**चाणक्यः**—(स्मितं कृत्वा।) [5]उपालब्धुं तर्हि वयमाहूताः।

**राजा**—शान्तं पापं शान्तं पापम्। नहि नहि। विज्ञापयितुम्[6]।

**चाणक्यः**—[7]यद्येवं तर्हि विज्ञापनीयानामवश्यं शिष्येण स्वैररुचयो न निरोद्धव्याः।

**राजा**—एवमेतत्[8]। कः संदेहः। किंतु न कदाचिदार्यस्य निष्प्रयोजना प्रवृत्तिरित्यस्ति[9] नः प्रश्नावकाशः।

---

स्मितमिति। इत्यादिदोषप्रख्यापनमपवादः। चाणक्येन स्वोपालम्भस्य दोषस्य प्रख्यापनात्।

स्वैररुचय इति। स्वैररुचयः स्वतन्त्रा गुरवो न निर्बन्धनीया भृत्यवन्नानुयोज्या इति।

---

१ G. om. आर्यस्य at the beginning of the speech; B. and N. (r) read for this अनुग्रहीतुम्; N. (s) अनुगृहीतम्. २ स्मितं कृत्वा B. E. N. G; B. E. N. G. also have वृषल after this; प्रणयेन for प्रश्रयेण N. (s). ३ B. E. N. G. add तत्प्रयोजनमभिधीयताम्. ४ Om. G. ५ वृषल before this B. E. N. G; N. (s) also adds यद्येवम् between this and वृषल; G. om. तर्हि. ६ B. N. have instead of all this आर्य नोपालब्धुम्। चाण°। किं तर्हि। राजा। विज्ञापयितुम्; G. E. have नोपलब्धुं किं तर्हि विज्ञापयितुम्. ७ वृषल before this B. E. N. G.; शिष्यैः for शिष्येण M. E; B. E. N. G. om. स्वैर. For what follows A. has °रुचयो नावरो°; M. °रुचयः स्वतन्त्रा रो°; R. °रुचयः स्वतन्त्रा नावरो°; N. (s). G. रुचयो नानुरो°; B. N. (r) रुचयोनुरो°. ८ For ए-त् B. E. N. G. read आर्य; B. E. N. G. have अपि before आर्यस्य. ९ रुचिः प्रवर्ति (र्तयि G.) ष्यत इत्य°, B. N. G; M. agrees with text omitting प्रवृ°; E. ditto, inserting भविष्यति before इति; G. reads इतोस्ति; G. E. read प्रश्नस्यावकाशः.

चाणक्यः—वृषल, सम्यग्गृहीतवानसि न[1] प्रयोजनमन्तरा[2] चाणक्यः स्वप्नेऽपि चेष्टत इति ।

राजा—आर्य, अत एव शुश्रूषा मां[3] मुखरयति ।

चाणक्यः—वृषल, श्रूयताम्[4] । इह खल्वर्थशास्त्रकारास्त्रिविधां सिद्धिमुपवर्णयन्ति—राजायत्तां[5] सचिवायत्तामुभयायत्तां चेति । ततः[6] सचिवायत्तसिद्धेस्तव किं प्रयोजनान्वेषणेन । यतो वयमेवात्र नियुक्ता[7] वेत्स्यामः ।

( राजा सकोपं[8] मुखं परावर्त्तयति । )

( नेपथ्ये[9] वैतालिकौ पठतः । )

एकः[10]—

---

वत्स्याम इति । वृतुधातोर्भविष्यति लटि उत्तमपुरुषबहुवचनम् । 'न वृद्भ्यश्चतुर्भ्यः' इतीण्निषेधः । 'वृद्भ्यः स्यसनोः' इति परस्मैपदम् । तत्तत्कार्यानुगुण्येन वर्तिष्यामह इत्यर्थः ॥

---

१ मदाशयम् before this and हि after it B. N. २ B. N. E. read अनपेक्षमाणः for अन्तरा; G. अनपेक्ष्य; B. E. N. G. read चाणक्यः not here but after स्वप्नेपि (or सुप्तोपि the reading of E. which also has श्रूयताम् before सुप्तोपि); For चेष्टते. E. has चेष्टिष्यते; P. G. om. इति and B. and N. read रुचिं प्रवर्तयिष्यति for चे-ति. ३ B. E. N. G. have प्रयोजन before शुश्रूषा and माम् not here but before प्रयो°. ४ Om. G; अवधार्यताम् after this R; शास्त्रार्थका° R. For त्रिविधाम् B. N. read त्रिविध. ५ B. E. N. G. have तद्यथा before this. ६ तत्र E.; तत् B. N. G; B. N. G. have भवतः for तव which E. reads before सचि°; फलान्वे° for प्रयोजनान्वे° B. N.; प्रयोजनानामन्वे° G; before यतो B. N. (r) E. have वाङ्मनसयोः खेदमुत्पादयितुम् (E. adds फलम् to this).; G. N. (s) वाङ्मनसी खेदयितुम्; G. E. om. यतो. ७ अभि for नि G. E.; वेदिष्यामः for next word R. M.; वर्त्स्यामः A.; वत्स्यामः P. ८ सकोप इव B. E. N. G.; परि° for परा° B. E. N. G. ९ ततो before this B. E. N. G; G. has नेपथ्ये after वैता°. १० Om. A. P. E.; प्रथमः M.

आकाशं काशपुष्पच्छविमभिभवता भस्मना शुक्लयन्ती
शीतांशोरंशुजालैर्जलधरमलिनां क्लिश्नती कृत्तिमैभीम्।
कापालीमुद्वहन्ती स्रजमिव धवलां कौमुदीमित्यपूर्वा
हास्यश्रीराजहंसा हरतु तनुरिव क्लेशमैशी शरद्वः॥ २०॥

अपि च।

प्रत्यग्रोन्मेषजिह्मा क्षणमनभिमुखी रत्नदीपप्रभाणा-
मात्मव्यापारगुर्वी जनितजललवा जृम्भितैः साङ्गभङ्गैः।
नागाङ्कं मोक्तुमिच्छोः शयनमुरु फणाचक्रवालोपधानं
निद्राच्छेदाभिताम्रा चिरमवतु हरेर्दृष्टिराकेकरा वः॥ २१॥

---

आकाशमिति। अपूर्वा कापि लोकोत्तरगुणाभिरामा ऐशी तनुरिव शरद्वः क्लेशं मलयकेतुराक्षसाभियोगजनितं क्लेश हरतु। कीदृशी ईशतनुः। काशपुष्पच्छविमभिभवता तच्छविसदृशेन भस्मना आकाशं शुक्लं कुर्वती शीतांशोश्चूडायां वर्तमानस्यांशुजालैर्जलधरमलिनां जलधरसदृशीं ऐभीं गजासुरसंबन्धिनीं कृत्तिं क्लिश्नती क्लिष्टां कुर्वती तन्नैल्यमभिभवन्तीत्यर्थः। कौमुदीमिव धवलां कापालीं स्रजमुद्वहन्ती शरद्विषये भस्मधवलया काशपुष्पच्छव्याकाशं शुक्लयन्तीत्यादि योज्यम्। हास्यश्रीरिव राजहंसो यस्यां शरदि राजहंसीव हास्यश्रीर्यस्यां तनावित्युभयत्र विग्रहः। उपमालंकारः॥ २०॥

प्रत्यग्रोन्मेष इति। शरदि क्षीरनिधौ शेषशयनादुत्थितस्य हरेराकेकरदृष्टिप्रतिपादकानि प्रत्यग्रेत्यादिविशेषणानि। प्रत्यग्रेण निद्राच्छेदानन्तरोदितेनोन्मेषणेनोन्मीलनेन जिह्मा कूणितप्रान्ता। स्पष्टमन्यत्। नागाङ्कं शेषपर्यङ्करूपम्। अत्र स्वभावोक्तिरलंकारः॥ २१॥

आकाशमिति प्रत्यग्रोन्मेष इति चन्द्रगुप्तवैतालिकेन पठितम्। उत्तरपद्यद्वयं सत्त्वोत्कर्षभूषणाद्युपयोगेनेति च राक्षसगूढप्रणिधिना वैतालिकवेषधारिणा स्तनकलशनाम्ना चन्द्रगुप्ततेजःसमुत्तेजनार्थं पठितमिति ज्ञेयम्।

---

१ तूल E. २ क्लिन्दतीम् B.; क्लिश्यती N. (s); क्लिष्यती G.; क्लिशती E. ३ हासश्रीराजहंसा B. E. N. G. ४ प्रत्यग्रामेष° E. ५ °मास° P.; रवा for लवा G.; जम्भि° for जृम्भि° A.; स्वाङ्ग for साङ्ग° N. (s) ६ °गाङ्गम् E.

**द्वितीयः—**

सत्त्वोत्कर्षस्य धात्रा निधय इव कृताः केऽपि कस्यापि हेतो-
जेंतारः स्वेन धाम्ना मदसलिलमुचां नागयूथेश्वराणाम् ।
दंष्ट्राभङ्गं मृगाणामधिपतय इव व्यक्तमानावलेपा
नाज्ञाभङ्गं[1] सहन्ते नृवर नृपतयस्त्वादृशाः सार्वभौमाः ॥२२॥

अपि च ।

भूषणाद्युपभोगेन[2] प्रभुर्भवति न प्रभुः ।
परैरपरिभूताज्ञस्त्वमिव[3] प्रभुरुच्यते ॥ २३ ॥

**चाणक्यः**—( स्वगतम्[4] । ) प्रथमं तावद्विशिष्टदेवतास्तुतिरूपेण प्रवृत्तशरद्गुणप्रख्यापनमाशीर्वचनम्[5] । इदमपरं किमिति नावधारयामि । ( विचिन्त्य । ) आः[6], ज्ञातम् । राक्षसस्यायं प्रयोगः । दुरात्मन्राक्षस, दृश्यसे भोः[7] जागर्ति खलु कौटिल्यः ।

**राजा**—आर्य वैहीनरे, आभ्यां[8] वैतालिकाभ्यां सुवर्णशतसहस्रं दापय ।

**कञ्चुकी**—यदाज्ञापयति देवः । ( इत्युत्थाय[9] परिक्रामति । )

---

सत्त्वोत्कर्षेति । सत्त्वोत्कर्षस्य बलातिशयस्य केऽपि लोकोत्तरमहिमानः कस्यापि हेतोः विपक्षक्षपणायेत्यर्थः । व्यक्तौ प्रसिद्धौ मानावलेपौ येषां ते ॥ २२ ॥

---

१ आज्ञाभङ्गे R. २ N. (s) भ्रमणाद्युपचारेण; R. M. भूषणाद्युपयोगेन. ३ परैरनभिभू° P. R. E. ४ आकर्ण्यात्मगतम् B. E. N. G.; देवतारूपणेन B. N.; देवतारूपकेन E.; देवतारूपकेन G. ५ A. P. om. आशीर्वचनम्; B. N. read इदम् between प्रख्यापनम् and आशी°; E. has °ख्यापनेनाशी°; G. reads प्रवृत्तशरद्वर्णनमाशीर्वचनमिदम्.; M. has अपरमिदं कि°.; G. om. न and adds इति after अवधा°. ६ आः भवतु for आः ज्ञातम् G.; आ भवतु E.; आ. before दुरात्म° and हतक after राक्षस B. N. ७ B. E. N. G. om. भोः. ८ B. E. N. G. have दीयताम् before this omitting दापय at the end of the speech. ९ om. E; M. R. E. om. उत्थाय; and G. has निःक्रामति for परिक्रा°.

चाणक्यः—(सक्रोधम् ।) वैहीनरे, तिष्ठ[1] न गन्तव्यम् । वृषल, किमयमस्थाने[2] महानर्थोत्सर्गः ।

राजा—(सकोपम्[3] ।) आर्येणैवं सर्वत्र निरुद्धचेष्टाप्रसरस्य मे बन्धनमिव राज्यं न राज्यमिव[4] ।

चाणक्यः—वृषल, स्वयमनभियुक्तानां राज्ञामेते दोषाः संभ[5]-वन्ति । तद्यदि न सहसे ततः स्वयमभियुज्यस्व ।

राजा—एते[6] स्वकर्मण्यभियुज्यामहे ।

चाणक्यः—प्रियं[7] नः । वयमपि स्वकर्मण्यभियुज्यामहे ।

राजा—यद्येवं तर्हि[8] कौमुदीमहोत्सवप्रतिषेधस्य तावत्प्रयोजनं श्रोतुमिच्छामि ।

---

सक्रोधमित्यादि । एतदादि राजचाणक्ययो रोषसंभाषणं संफेटः । वृषलेत्यादि । स्वयमनभियुक्तानां स्वातन्त्र्यमलभमानानामेते दोषा गुरुजनगौरवासहनरूपाः संभवन्ति । स्वस्वातन्त्र्यलिप्सया गुरुजनस्वातन्त्र्यं न सहन्त इति भावः । स्वयमभियुज्यस्व स्वातन्त्र्यमवलम्बस्व ।

एते स्वकर्मणीति । इदं गुरोरवमाननं छलम् ।

वयमपि स्वकर्मण्यभियुज्यामह इति । स्वकर्मण्यग्निहोत्रादाविति बहिरर्थः । अनेन कपटकलहेन राक्षसवशीकरणकर्मणि व्याप्रियामह इति गूढम् ।

---

१ तिष्ठ twice in B· E. N. G; E. has न गन्तव्यम् also twice; G. E. have also वृषल twice. २ एव after this B. N; M. has महार्थोत्सर्गः; G. महानर्थव्ययः; B. E. N. G. add क्रियते at the end. ३ Om. in B. N. E.; सरोषम् G.; सर्वतो for सर्वत्र B. N; M. reads निरुद्धस्य; B. N. read मम for मे. ४ A. P. R. substitute इदम् for इव; M. adds it after इव. ५ B. E. N. G. om. सम्; Om. ततः in E; तदा B. N. which add एव after स्वयम्. ६ B. N. add वयम् after this. ७ कल्याणम् A. M. R; P. om. this speech; M. om. all after नः. ८ तेन हि चाणक्य G.; तेनाहम् E.; °त्सवानुष्ठानप्रति° for °त्सवप्रति° G. B. N. om. तावत्; E. has एव तावत् and G. has it after प्रयोजनम्.

**चाणक्यः**—वृषल, [1]कौमुदीमहोत्सवानुष्ठानस्य किं प्रयोजनमित्यहमपि श्रोतुमिच्छामि ।

**राजा**—प्रथमं [2]तावन्ममाज्ञाव्याघातः ।

**चाणक्यः**—वृषल, [3]ममापि तवाज्ञाव्याघात एव कौमुदीमहोत्सवप्रतिषेधस्य प्रथमं प्रयोजनम् । कुतः ।

अम्भोधीनां तमालप्रभवकिसलयश्यामवेलावनाना-
मा पारेभ्यश्चतुर्णां चटुलतिमिकुलक्षोभितान्तर्जलानाम् ।
मालेवाम्लानपुष्पा तव नृपतिशतैरुह्यते या शिरोभिः
सा मय्येव स्खलन्ती कथयति विनयालंकृतं ते प्रभुत्वम् ॥२४॥

---

प्रथममिति । ममाज्ञाव्याघातजनितो मनस्ताप एव प्रथमफलत्वेन पर्यवसित इति सोल्लुण्ठनं वचनम् ।

इदमेव मुख्यप्रयोजनत्वेन श्लाघ्यतया त्वयानुमन्तव्यमिति समाधत्ते—अम्भोधीनामिति । चटुलतिमिकुलेति अम्भोधीनां दुस्तरत्वमुक्तम् । पारेभ्यः परतीरेभ्यः आ पारान्प्राप्नुवद्भिः पारंगतैरित्यर्थः । अभिविधावाङ् । नृपतिशतैर्या तवाज्ञा शिरोभिरुह्यते वक्ष्यते । वर्तमानसामीप्ये वर्तमानवत् । मदाशिषा मन्त्रीतिबलेन चाम्भोधिपारगानपि द्वीपाधिपानाज्ञाविधेयान्करिष्यसीत्यर्थः । सा मय्येव स्खलति चेत्तव विनयातिशयः प्रभुत्वस्यालंकरणायैवेति भावः । इत्यादि चाणक्यवचनजातं गुरुकीर्तनं प्रसंगः । गुरोः कीर्तनं गुरु बहु वा कीर्तनमित्यन्वर्थात् ॥ २४ ॥

---

१ ताहि before this G; M. R. om. कौमुदी; G. has करण for अनुष्ठान and substitutes अहमपि for किम् omitting इत्यहमपि. २ °माज्ञाया अव्या° E. R.; °ज्ञाविधानम् N. (s); G. has प्रथममाज्ञाविघातः. ३ मयापि G; B. E. N. have after this खलु त्वदाज्ञा° &c. G. has तदा° for तवा° and वि for व्या further on. ४ P. om. प्रतिषेध and G. has तत् for कौ-व.; E. has कारणम् for प्रयोजनम्.; B. N. have इति after प्रयो°. ५ बहुलमिति E. ६ °वाज्ञा सपु° B. N; B. N. E. have नत for तव; G. has नव. ७ प्रथ° B. E. N.; कथमिति P.

अथ त्वम[1]परमपि प्रयोजनं श्रोतुमिच्छसि तदपि कथयामि ।

**राजा**—कथ्य[2]ताम् ।

**चाणक्यः**—शोणोत्तरे[3], मद्वचनात्कायस्थमचलं ब्रूहि—' यत्त-द्भद्रभट[4]प्रभृतीनामितोपरागादपक्रम्य मलयकेतुमाश्रितानां लेख्यपत्रं दीयताम्[5]' इति ।

**प्रतीहारी**—जं अज्जो आणवेदित्ति[6] । (निष्क्रम्य पुनःप्रविश्य ।) अज्ज, इमं पत्तअम्[7] । ( क )

**चाणक्यः**—( गृहीत्वा । ) वृषल, दृश्यतामिदम्[8] ।

**राजा**—( आत्मगतं वाचयति । ) स्वस्ति[9] सुगृहीतनामधेयस्य देवस्य[10] चन्द्रगुप्तस्य सहोत्थायिनां प्रधानपुरुषाणामितोपक्रम्य वध्य[11]मलयकेतुमाश्रितानां प्रमाणलेख्यपत्रमिदम् । तत्र प्रथम-

---

( क ) यदार्य आज्ञापयतीति । आर्य, इदं पत्रकम् ।

---

दृश्यतामिति । रहस्यत्वाद्दृश्यतां न तु स्फुटं वाच्यतामित्यर्थः ।

---

१ In B. N. G. the words beginning with अथ are attributed to राजा and with तदपि to Chânạkya.; B. N. om. त्वम्; G. substitutes तु for त्वम्; E. om. अथ.; B. N. have यत्तत् before श्रोतुम् and B. G. N. have इच्छामि for इच्छसि; G. E. have ततः before तदपि. २ A. P. add अवहितोस्मि after this. ३ Twice in B. N. G.; °मचलदत्तम् for °मचलं B. N; P. om. °मच°. ४ °भट्ट E.; इतो-तानाम् om. in. B. E. N. G; R. adds वध्य before मलय. °५तत्ता-वत् before this B. E. N. G; G. om. इति after this. ६ °वेदीति P. G. ७ एदं पत्रम्. B. N.; इमं पत्तयम् E.; इदं तं पत्तअम् R; एदं तं पडअम् M.; इमं तं पत्तअम् A. ८ B. E. read श्रूयताम् for दृ-दम्; G. reads श्रूयतामिदम्; R. and N. (s) have दृश्यताम्; B. E. G. N. (r) have after this राजा । दत्तावधानोस्मि ॥ चाण । वाचयति स्वस्ति &c. ९ Om. G. E. १० Om. E; G. om. प्रधान. ११ B. N. (r) om. वध्य; N. reads °माश्रित्य for °माश्रितानाम्; परिमाण° for प्रमा° B. G. E; लेख्यम् omitting पत्रमिदम् N. G; P. om पत्रं; B. om. इदम्.

मेवं[1] तावद्गजाध्यक्षो भद्रभटः अश्वाध्यक्षः पुरुषदत्तः महाप्रतीहारस्य चन्द्रभानोर्भागिनेयो डिङ्गि[2]रातः देवस्य स्वजनसंबन्धी महाराजो बलदेवगुप्तः देव[3]स्यैव कुमारसेवको राजसेनः सेनापतेः सिंहबलस्य [4]कनीयान्भ्राता भागुरायणो मालवराजपुत्रो लोहिताक्षः क्षत्रगण[5]मुख्यो विजयवर्मेति । एते वयं देवस्य कार्ये अवहिताः स इति । ( प्रकाशम् ।) आर्य, [6]एतावदेतत्पत्रकम् । अथैतेषामपरागहेतून्विज्ञातुमिच्छामि ।

चाणक्यः—वृषल, श्रूयताम् । [7]अत्र यावेतौ गजाध्यक्षाश्वाध्यक्षौ भद्रभटपुरुषदत्तनामानौ[8] तौ खलु स्त्रीमद्यमृगयाशीलौ हस्त्य-

---

कुमारसेवक इति । देवं कौमारमारभ्य सेवत इति कुमारसेवकः ।

सादरमात्मगतं वाचयित्वा बहिर्लोकान्प्रत्यवहेलयति । एतावदिति ॥

इतोऽपरागादपक्रम्य विपक्षमाश्रितानां किमनेन पत्रदर्शनेनेति भावः ।

---

१ B. N. om. एव and R. adds स before गजा°; G. om. तावत्; °भट्टाः for °भटः E.; °ध्यक्षो A. २ हिङ्गु° B.; डिङ्गि° R.; डिण्डि° N. G.; डिगि° E; G. adds एव after देवस्य and B. G. N. read गन्धी for संबन्धी in next word; महाराज° for महाराजो° G.; °राजवल्लभो. E. ३ B. E. N. G. om. देव in next word and G. om. देवस्यैव following that; Om. M.R.; सिंहपालस्य for सिंहबलस्य G. N.; सिंहबलदत्तस्य B. ४ G. has भ्राता before कनी°.; रोहि° B. E. N. ५ °गुण° for °गण° E. A. G.; °मुख्यतमो for °मुख्यो B. N.; मुख्यभूतो E.; विनयवर्मेति G; आत्मगतम् before एते B. N. (r); G. om. all from एते to पत्रकम्; E. to प्रकाशम्. For दे-र्ये P. has कर्मसु; B. E. N. G. om. आर्य. ६ E. has एव after एतावत्; R. has एव तत् for एतत्; B. N. R. G. read पत्रम् for पत्रकम्; B. E. N. G. read before अथ, राजा । आर्य एतेषाम् &c.; हेतुम् for हेतून् G.E.; for विज्ञातुमिच्छामि B. N. have श्रोतुमिच्छामि; G. has पृच्छामि; A. विज्ञापयितुमिच्छामि. ७ Om. M.; अश्वाध्यक्षगजाध्यक्षौ R. ८ °दत्तौ E; B. N. have एतौ for following तौ; G. om. खलु; B. N. have हि after °क्षणे; M. °पक्षेणाभियुक्तौ; G. वेक्षणेषु, after which it has अधिका° omitting what goes between.

श्चावेक्षणेऽनभियुक्तौ मयाधिकाराभ्यामवरोप्य स्वजीवनमात्रेणैव स्थापिताविति परपक्षे स्वेन स्वेनाधिकारेण गत्वा मलयकेतुमाश्रितौ। यावेतौ डिङ्गरातबलगुप्तौ तावप्यत्यन्तलोभाभिभूतौ त्वद्दत्तं जीवनमबहु मन्यमानौ तत्र बहु लभ्यत इत्यपक्रम्य मलयकेतुमाश्रितौ। योऽप्यसौ भवतः कुमारसेवको राजसेन इति सोऽपि तव प्रसादादतिप्रभूतको-शहस्त्यश्वं सहसैव तन्महदैश्वर्यमवाप्य पुनरुच्छेदशङ्कयापक्रम्य मलयकेतुमाश्रितः। योऽयमपरः सेनापतेः सिंहबलस्य कनीयान्भ्राता भागुरायणोऽसावपि तत्र काले पर्वतकेन सह समुत्पन्नसौहार्दस्त-त्प्रीत्या च पिता ते चाणक्येन व्यापादित इत्युत्पाद्य रहसि त्रास-यित्वा मलयकेतुमपवाहितवान्। ततो भवदपथ्यकारिषु चन्दनदा-सादिषु निगृहीतेषु स्वदोषाशङ्कयापक्रम्य मलयकेतुमाश्रितः। ते-

---

इत्युत्पाद्येति। तथ्यमपि तन्मिथ्यात्वेन लोकप्रत्ययनार्थं उत्पाद्येत्युक्तिः। कथमकौशलमित्यादि वचनं विरोधशमनं शक्तिः। किमकौशलादिति कार्या-

---

१ B. E. N. G. have इति instead of मया and B. N. have स्वाधिका°; B. G. E. N. have मया after स्व°.; E. has स्वल्प for स्व; P. om. स्व. २ M. R. read °वित्यपरपक्षे; B. E. N. G. read वित्यपरक्तौ after which B. N. have गत्वा स्वेन &c.; E. अपक्रान्तौ स्वेन &c.; G. इदानीमितोपक्रम्य स्वेन &c.; P. M. R. om. one स्वेन; B. N. have च before अधि°; B. E. N. G. have व्यवस्थाप्य for गत्वा; °मास्थतौ E.; यौच तौ for यावेतौ G. ३ °काख्यौ for °गुप्तौ A. M. R.; बलभद्राख्यौ P; G. om. next तौ; A. P. R. om. अपि; M. has अत्यर्थ for अत्यन्त.; लोभाभियुक्तौ N; E. has तावप्यतिलोभाभिभूतत्वात्त्वद्दत्तं &c.; लोभासक्तौ or लुब्धप्रकृती B. For त्व-नम् B. N. read दत्तं धनम्. ४ B. E. N. G. om. अपक्रम्य; E. om. त in लभ्यत. ५ B. G. N. om. इति. For प्रभूत B. N. G. read मात्रम्; E. मात्र; B. N. read कोष for कोश. ६ B. E. N. G. read सु for तत्; °च्छेदा° for °च्छेद° E.; °देदा° (?) G; M. om. अपक्रम्य; R. reads प्रक्रम्य. ७ सिंहबलदत्तस्य B. ८ E. om. सम्; M. om. च. ९ घातित- B. E. N. G. all of which om. उत्पाद्य further on. १० °दासप्रमुखेषु E.; °प्रभृतिषु G. N. (s); both in B; B. E. N. G. read next word as निगृह्य-माणेषु; P. has दासादिपुनर्गृहीतेषु; A. P. G. om. स्व; M. R. read राजा for स्व; R. M. P. read दोषप्र° for दोषाश°.

[1]नाप्यसौ मम प्राणरक्षक इति कृतज्ञतामनुवर्त्तमानेनात्मनोऽनन्तरममात्यपदं[2] ग्राहितः । यौ तौ लोहिताक्षविजयवर्माणौ तावप्यतिमानित्वात्स्वदायादेभ्यस्त्वया दीयमान[3]मसहमानौ मलयकेतुमाश्रितौ इत्ये[4]षामपरागहेतवः ।

राजा—एवमेतेषु परिज्ञातापरागहेतुषु क्षिप्रमेव कस्मान्न [5]प्रतिविहितमार्येण ।

चाणक्यः—वृषल, न पारितं[6] प्रतिविधातुम् ।

राजा—किमकौशलादुत प्रयोजनापेक्षया[7] ।

चाणक्यः—[8]कथमकौशलं भविष्यति । प्रयोजनापेक्षयैव ।

राजा—प्रयोजनमिदानीं[9] श्रोतुमिच्छामि ।

चाणक्यः—[10]श्रूयतामवधार्यतां च । इह खलु विरक्तानां प्रकृतीनां

---

विरोधे पृष्टे तस्य विरोधस्य शमनात् ।

---

१ गतेना° M. R.; ममानेन प्राणाः परिरक्षिता इति B. N. E; G. agrees reading एतेन for अनेन.; B. N. G. add before आत्मनो, पैतृकं च परिचयम्; E. पैतृकं च परिचयं ज्ञात्वा; for °नन्तर° after this G. has °चिततर°. २ For पदं ग्राहितः E. has °पदवीमारोपितः.; यावेतौ B. E. N. G; B. E. N. G. read रोहि°; तावत्यन्त° for तावप्यति° B. N.; तावप्यत्यन्त G. E. ३ बहु before this R. M.; बहुधनम् E; B. N. have बहुसंमानम् after this. ४ इत्येतेषाम् A. P. G; ५ आर्य before this B. N. G; G. has एवमेषु; विज्ञाता° for परिज्ञाता° M. R; विज्ञापिता° A. P; B. N. add अपि after हेतुषु. प्रतिविधानं विहि° G. ६ सांप्रतम् M; G. om. प्र-म्. ७ °पेक्षितया. B. N. (r). ८ किम° M. R; B. E. N. G. have नियतम् before प्रयो°; पेक्षितया. B. N. (r); पेक्षया G. E. N. (s). ९ तदप्रतिविधानप्र° B. N; G. E. insert अप्रतिविधानस्य after प्रयो°; P. has इदम् for इदानीम्.; B. also om. मि in इच्छामि at the end of this speech. १० वृषल before this B. E. N. G; P. om. च after अवधार्यताम्; after that B. E. G. have राजा । उभयमपि क्रियते कथ्यताम् ॥ चाण । वृषल इह &c.; E. agrees inserting तत् before कथ्यताम्.; E. om. खलु.

द्विविधं प्रतिविधानम्—अनुग्रहो[१] निग्रहश्च। अनुग्रहस्तावदाक्षिप्ताधिकारयोर्भद्रभटपुरुषदत्तयोः पुनरधिकारारोपणमेव। अधिकारश्च[२] तादृशेषु व्यसनयोगादनभियुक्तेषु पुनरारोप्यमाणः सकलमेव[३] राज्यस्य मूलं हस्त्यश्वमवसादयेत्। डिङ्गरातबलगुप्तयोरतिलुब्धयोः[४] सकलराज्यप्रदानेनाप्यपरितुष्यतोरनुग्रहः कथं शक्यः[५]। राजसेनभागुरायणयोस्तु धनप्रणाशभीतयोः कुतोऽनुग्रहस्यावकाशः। लोहिताक्षविजयवर्मणोरपि दायाद[६]मसहमानयोरतिमानिनोः कीदृशोऽनुग्रहः प्रीतिं जनयिष्यतीति परिहृतः पूर्वः पक्षः। उत्तरो[७]ऽपि खलु वयमचिरादधिगतनन्दैश्वर्याः सहोत्थायिनं प्रधानपुरुषवर्गमुग्रेण दण्डेन पीडयन्तो नन्दकुलानुरक्तानां प्रकृतीनाम[८]विश्वास्या एव भवाम इत्यतः

---

१ तद्यथानुग्र° B. N. G; E. reads निग्रहोनुग्र°; after °ग्रहश्च B. N. R. M. add इति. २ G. has for this सच; B. N. have पुनः after this; दोषा for योगा B. N. E; G. reads अयुक्तेषु for अनभियु°. ३ °लस्यैव B; N. om. °मेव and स्य in राज्यस्य.; M. om. अव in अवसा°; B. E. N. G. read अवसादयति. ४ °रत्यन्त B. N. E; B. N. read लुब्धप्रकृतिकयोः; G. E. लुब्धप्रकृत्योः; B. N. have सम् before प्रदा°; G. has संपादनेनाप्य°; E. has प्रसादेननाप्य°. ५ कर्तुं शक्यते B. N.; °ग्रहः कर्तुं न शक्यः E; स्वधनप्राणनाश B. N.; धनप्राणनाश E.; धनप्रनाश G. ६ For दा-नोः B. E. N. read दायादमानप्रदानपीडितयोर्मानमप्यपमानं मन्यमानयोरत्यन्तमानिनोः; G. om. प्रदान and मान-नयोः; M. दायादमानमसहमाणयोरतिमानिनोः; E. reads की° after अनुग्रहः adding वि before जन°; इति om. M. R; G. om. visarga in पूर्वः; M. adds अयम्. ७ अपरोपि E; M. om. खलु. For अचिरादधिगत M. P. R. read अपि; A. अति. For °श्वर्याः A. M. P. R. read °श्वर्यं; for °यिनम्, °यिनः; for पुरुषवर्गमुग्रेण, M. R. पुरुषानुल्वण, A. P. पुरुषा उल्वणेन; G. after °श्वर्याः reads चन्द्रगुप्तसहोत्थायिप्रधानपुरुषमुग्रदण्डेन पीडयतः &c. ८ M. R. om. प्रकृतीनाम्; P. has °श्वास for श्वास्या; B. E. N. G. om. एव, G. reading अविश्वस्यतामाभूम, E. °श्वास्या मा वयं भूम; B. has माभूम or भवाम instead of एव भवाम; G. om. अतः; A. has परिकृतः here as well as before.

परिहृत एव । तदेवमनुगृहीतास्तपक्षो राक्षसोपदेशप्रवणो महीयसा म्लेच्छबलेन परिवृतः पितृवधामर्षी पर्वतकपुत्रो मलयकेतुरस्मानभियोक्तुमुद्यतः । सोऽयं व्यायामकालो नोत्सवकाल इति दुर्गसंस्कारे प्रारब्धव्ये किं कौमुदीमहोत्सवेनेति प्रतिषिद्धः ।

राजा—आर्य, बहु प्रष्टव्यमत्र ।

चाणक्यः—वृषल, विश्रब्धं पृच्छ । ममापि बह्वाख्येयमत्र ।

राजा—सोऽप्यस्य सर्वस्यानर्थस्य हेतुर्मलयकेतुः कस्माद् पक्रामन्नुपेक्षितः ।

चाणक्यः—वृषल, अनुपेक्षणे द्वयी गतिः निगृह्येत वा प्रतिश्रुतं राज्यार्द्धं प्रतिपाद्येत वा । निग्रहे तावत्पर्वतकोऽस्माभिरेव व्यापादित

---

१ For °मनु° G. reads सु°, E. °मुप°; बलो for पक्षो G; B. N. E. add भृत्य before पक्षो; E. reads राक्षसस्योप°. and B. N. add श्रवण before प्रवणो; राज after म्लेच्छ B. E. N. G; M. R. om. परिवृतः. २ °वधादमर्षितः E; °वधामर्षितः B. G. N. ३ इति after this B. N. and G. which also adds. तत् before सो°. ४ अतो before this B. G. N; आ° for प्रा° B. N.; एवा E; विधातव्ये for प्रारब्धव्ये G; for नोत्सवकाल before this E. reads नसुरगासिकायाः; °षिद्धम् for °षिद्धः M. R; G. om. इति प्रतिषिद्धः. ५ Om. R; G. adds मया after अत्र. ६ विसर्वम् E; E. has मयापि for ममापि; G. has अस्ति for अत्र at the end of the speech. After this B. N. add राजा । एष पृच्छामि । चाण° । अहमप्येष कथयामि; G. has only the first of these speeches and then omitting राजा goes on with आर्य योयम् &c.; E. has वृषल before अह° in the second speech. ७ आर्य योस्य E; आर्य योयमस्माकम् G.; B. E. N. add एव after सर्वस्य.; B. N. om. स्य in अनर्थस्य. After °केतुः B. N. add स; and आर्येण after कस्मात्; G. after हेतुः reads सकथं मलयकेतुरुपक्रामन् &c.; E. do. reading °रपक्रा° for °रुपक्रा°; M. R. agree with text reading कस्मादुपक्रा°. ८ M. om. वृषल and for अनुपे° has उपे°; B. N. after वृषल read मलयकेतोरपक्रमणानुपेक्षणे; G. मलयकेतोरनुपेक्षितोपक्रमेण; E. मलयकेतावनुपेक्षितापक्रमणे. B. N. G. read स्यात् । अनुगृह्येत before निगृह्येत; E. has only स्यात्; After वा B. N. have अनुग्रहे पूर्वप्रति° &c. G. has अनुग्रहे तावत्पूर्वप्रति° &c. E. has only पूर्वप्रति &c. ९ Om. B. E. N; G. reads दीयतेस्य for प्र-वा; अस्य before पर्वत° B. E. N.; G. reads त्वस्य पिता for तावत्; B. E. N. G. also om. एव further on.

इति कृतघ्नतायाः स्वहस्तो[1] दत्तः स्यात् । प्रतिश्रुतराज्यार्द्धप्रतिपादनेऽपि पर्वतकविनाशः[2] केवलं कृतघ्नतामात्रफलः स्यादिति मलयकेतुरुपक्रामन्नुपेक्षितः[3] ।

राजा—अत्र[4] तावदेवम् । राक्षसः पुनरिहैव वर्तमान आर्येणोपेक्षित इत्यत्र किमुत्तरमार्यस्य[5] ।

चाणक्यः—राक्षसोऽपि[6] स्वामिनि स्थिरानुरागित्वात्सुचिरमेकत्र वासाच्च[7] शीलज्ञानां नन्दानुरक्तानां प्रकृतीनामत्यन्तविश्वास्यः प्रज्ञापुरुषकाराभ्यामुपेतः[8] सहायसंपदाभियुक्तः कोशवानिहैवान्तर्नगरे[9]

---

कृतघ्नतायाः स्वहस्त इति । कृतघ्नता दृढा स्यात् । तथा च राक्षसोपरि पातितं तदयशः परिहृतं स्यात् । तच्चानिष्टम् । राज्यार्द्धप्रदाने तव कृत्स्ननन्दराज्यलाभार्थमुपांशुकृतोपि पर्वतकवधो व्यर्थः स्यात् । कृतघ्नतामात्रं फलं यस्य तथोक्तं केवलं स्यात् । किं तया राक्षससाचिव्यलाभविकलया कृतघ्नतया फलम् । अतो मलयकेतूपेक्षणमेव वरमनया प्रकृतया राज्यकार्यसंविधानप्रणाल्या राक्षसोपसंग्रहसाधकमित्याशयः ।

कृतघ्नतामात्रफलः स्यादिति । तव संपूर्णनन्दराज्यफलो न स्यादिति

---

१ स्वयम् for स्व B. E. N; G. has °तायाम् before this; G. has भवति for स्यात्; E. adds इति after स्यात्. B. N. have अर्धं before राज्य; and R. M. om. प्रतिश्रुत; G. reads राज्यार्द्धप्रदाने. २ °नाशे for नाशः N. R. omitting केवलम्; P. adds एव after केवलम्. R. M. read परिहारः for फलः; G. फलकः; E. has मात्रकम्. ३ °रूप° for °रप° A. G. ४ आर्य before this B. E. N; तु before पुनः F. E; R. om. पुनः; after °हैव B. E. N. have अन्तर्नगरे, G. नगरे. ५ G. inserts कथम् after आर्येण, M. एव.; अत्र after किम् M. R; इति किमत्रमार्यस्य (sic.) A. ६ वृषल before this B. E. N. G; खलु निज after अपि. B. N.; खलु only. G. E; °राग° for °रागि° A. P. E.; °मेवात्र B. N. G. ७ G. has संवाहाच्च; A. संवासाच्च; P. संवास; B. N. सहवासाच्च; अत्यन्तम् B. E. N. ८ प्रज्ञापुरुषकारणामुपेत्यत P; M. R. read सह for सहाय; and अभि in अभियुक्त is om. in. B. E. N. G. ९ कोषबलवान् B. N; B. N. have खलु after महा°. E. has स and G. नः before खलु.; A. P. read प्र before कोप°.

वर्त्तमानः खलु महान्तमन्तःकोपमुत्पादयेत् । दूरीकृतस्तु बाह्यको-[1]पमुत्पादयन्नपि कथमप्युपायैर्वशयितुं शक्य इत्ययमत्रस्थ एव हृदये-शयः शङ्कुरिवोद्धृत्य दूरीकृतः ।

राजा—आर्य, कस्माद्वि[2]क्रम्य न गृहीतः ।

चाणक्यः—[3]राक्षसः खल्वसौ । विक्रम्य गृह्यमाणो युष्म-द्बलानि [4]बहूनि नाशयेत्स्वयं वा विनश्येत् । एवं सत्युभयथापि दोषः । पश्य ।

स हि भृशमभि[5]युक्तो यद्युपेयाद्विनाशं
नन्नु वृषल वि[6]युक्तस्तादृशेनापि पुंसा ।
अथ तव बलमुख्यान्घात[7]येत्सापि पीडा
[8]वनगज इव तस्मात्सोऽभ्युपायैर्विनेयः ॥ २५ ॥

---

भावः ।

अत्र तावदेवमिति । अत्र मलयकेतूपेक्षणे तावदेवमुत्तरं भवतु । राक्ष-सोपेक्षणं तु सर्वथानुचितमिति राक्षसपक्षपातं दर्शयन्निवाह—अत्रेत्यादि ।

---

१ बाह्यमर्थं विद्वन्नपि M. R.; बाह्यार्थं विकुर्वन्नपि A.; बाह्यार्थमविकुर्वन्नपि P. for बा-पि; E. om. अपि. For क-तः B. N. read न दुःखसाध्यो भविष्यतीत्यतो-ऽपक्रामन्नुपेक्षितः । राजा । तत्किमर्थमिहस्थ एवोपायैर्नोपक्रान्तः । चाण° । अथ कथमपक्रान्तो भविष्यति । ननूपायैरेवासौ हृदयेशयः शङ्कुरिवोद्धृत्य दूरीकृतः । दूरी-करणस्य चोक्तं प्रयोजनम्; G. and E. agree; G. om. अतो in first speech; both reading अत्रस्थ for इहस्थ in second and E. also reading एवार्य न नोपक्रा° for एवोपायैर्नोपक्रा°; both reading कथुमनुपक्रान्तो for अ-न्तो in third speech; E. also reading हृदयशल्यः for हृ-यः and G. omitting च in चोक्तम्; P. om. कथमपि and शयः in हृदयेशयः. २ वा before विक्रम्य R. G. A. ३ वृषल before this B. E. N. G; नि before गृह्य° B. E. N. G; P. om. °क्रम्य. ४ For बहूनि B. E. N. G. read वा वि.; B. E. N. G. read स्व-त् before यु-त्. दोषाः for दोषः M. ५ [illegible]मुप° A. P. G. ६ B. and N. (r) °युक्ता°. For अपि M. reads असि; A. P. पुत्र. ७ नाशयेत् for घातयेत् B. E. N. ८ नवगज B. N. (r).; °प्युपा° for °भ्युपा° E.

**राजा**—न[1] शक्नुमो वयमार्यस्य मतिमतिशयितुम् । सर्वथा अमात्यराक्षस ए[2]वात्र प्रशस्यतरः ।

**चाणक्यः**—( स[3]क्रोधम् । ) न भवानिति वाक्यशेषः । भो वृषल, तेन किं कृतम् ।

**राजा**—श्रू[4]यताम् । येन खलु महात्मना

ल[5]ब्धायां पुरि यावदिच्छमुषितं कृत्वा पदं नो गले
व्याघातो जयघोषणादिषु बलादस्मद्बलानां कृतः ।
अत्यर्थं विपुलैः स्व[6]नीतिविभवैः संमोहमापादिता
विश्वास्येष्वपि विश्वसन्ति मतयो न स्वेषु व[7]र्गेषु नः ॥ २६ ॥

---

तन्न शक्नुम इति । मया क्वचित्कार्यविरोधे पृष्टे मतिबलेन केवलं समाधत्से राक्षसोपेक्षणं तु सर्वथानुचितमिति भावः ।

न भवानिति । वाक्यशेषो मास्तु नाम । तस्मिन्को गुणो दृष्ट इति पृच्छति—न तावदिति ।

लब्धायामिति । अस्यायमर्थः—अस्माभिर्निरुद्धासारप्रसारतया बलवदुपनिरुद्धं पुरमसुरक्षं पश्यन्नभयमस्मत्तो याचमान इव पुरमस्मदधीनं कर्तुमस्मद्बलान्यन्तः प्रवेश्याभिर्लब्धायां वशीकृतायां पुर्यस्मदीयजयापादनघोषणाय प्रवृत्तान्यपि तानि बलानि बलाद्व्याहत्य निगृह्य बहिःस्थितान्बलवतोप्यस्मानगणयन्नस्मदुपांशुवधाय विषकन्यानियोजनकूटतोरणशयनगृहनिर्माणादिस्वकार्यसाधनपर्यन्तमन्तर्नगर एव कंचित्कालं स्वच्छन्दमुषितवान् । अनन्तरमुपांशु सुरङ्गया सर्वार्थसिद्धिमपवाह्य स्वयमपि निर्गत्य बहिः सुहृद्बलमुत्थाप्य पुनरप्यस्मानभियोक्तुमुद्यतः । एवं स्वनीतिविभवैरनेन संमोहिता अस्मन्मतयो विश्वास्येष्वपि जीवसिद्धिभागुरा-

---

१ तन्न A. P.; वाचा वाचमति° for मति °B. N.; मतिमतितुम् A. २ M. om. अत्र. ३ Om. G. E; R. om. न and reads भवान्नेति. After वाक्यशेषः—मा तावदेवम् । भो &c. B. N.; न तावत् A.; ननु तावत् P.; न तावत्त्वम् E; खल for वृषल G. ४ यदि न ज्ञायते तदा before this B. N; E. and G. agree; E. om. तदा and G. substituting तत्; B. N. read तेन for येन and B. P. read खलु before येन. ५ लब्धानाम् M.; यावदित्थम् for यावदिच्छ° G. ६ सु for स्व B. N.; च M. R. G. ७ वर्ग्येषु A. E.; मार्गेषु G.

चाणक्यः—(विहस्य।) [1]एतत्कृतं राक्षसेन । वृषल, मया पुनर्ज्ञातं नन्दमित्र [2]भवन्तमुद्धृत्य भवानिव भूतले मलयकेतू राजाधिराजपदे [3]नियोजित इति ।

राजा—[4]अन्येनैवेदमनुष्ठितं किमत्रार्यस्य ।

चाणक्यः—[5]हे मत्सरिन्,

आरुह्यारूढकोपस्फुरणविषमि[6]ताग्राङ्गुलीमुक्तचूडां
लोकप्रत्यक्षमुग्रां सकलरिपुकुलो[7]त्सादद्दीर्घां प्रतिज्ञाम् ।
केनान्येनावलिप्ता नवनवतिशतद्रव्यकोटीश्वरास्ते
नन्दाः पर्या[8]यभूताः पशव इव हताः पश्यतो राक्षसस्य ॥ २७ ॥

---

यणप्रभृतिषु स्वेषु वर्गे[ष्व]पि न विश्वसन्ति यतो वयं तानपि पुरान्निःसारितवन्त इत्यहो मतिम[ान्] [श]ूरः साहसी महात्मा राक्षस इति ॥ २६ ॥

विहस्येत्यादि । [५] राक्षसनीतिविभवाधिक्षेपार्थं सोत्प्रासवचनं स्वशक्तिप्रशंसनं व्यवसायः । नन्दोद्धरणमौर्याधिराज्यस्थापनहेतोः स्वशक्तेः प्रशंसनात् ।

अन्येनैवेदमिति । इदं नन्दोद्धरणमित्यर्थः । इयं गुरुतिरस्कृतिर्द्रवः ।

हे मत्सरिन्निति । मत्सरः परोत्कर्षासहनम् ।

आरुह्यारूढेति । प्रवृद्धकोपावेशेन विषमिताभिर्विसंष्ठुलं प्रचलिताभिरग्राङ्गुलीभिरङ्गुल्यग्रैर्मुक्तचूडा शिखा यस्याम् । सकलानां रिपू-

---

१ वृषल before this B. E. N. G. Before वृषल further on B. E. N. have a speech राजा । अथ किम् । एतत्कृतममात्यराक्षसेन (E. om. अथ किम्) G. om. वृषल and inserts न after पुनः further on. २ °मुत्कृत्य for मुद्धृत्य E.; E. has पदम् and om. final इति. ३ G. N. (s) read योजितः for नियो°; A. P. E. read °तुरधिराज्यपदे; B. N. (r) read तुरधिराज्यमारोपितः. ४ अनेनै° A; B. N. read अलमुपालम्य आर्य दैवेनेदम् &c., M. after किन्स्य adds इयं गुरुरस्कृतिः; R. इयं गुरुतिरस्कृतिः. ५ अहो M. R. ६ For विषमिता° M. reads °मिवकरा°.; °च्छे° for °त्सा° B. E. N.; °त्से° A. ८ सूरा for भूताः G.

अपि च ।

गृध्रै[1]राबद्धचक्रं वियति विचलितैर्दीर्घनिष्कम्पपक्षै-
धूमैर्ध्वस्तार्कभासां सघनमिव दिशां मण्डलं द[2]र्शयन्तः ।
नन्दै[3]रानन्दयन्तः पितृवननिलयान्प्राणिनः पश्य चैता-
न्निर्वान्त्यद्यापि [4]नैते स्रुतबहलवसावाहिनो हव्यवाहाः ॥ २८ ॥

राजा—अन्येनैवेदमनुष्ठितम् ।

चाणक्यः—आः, केन ।

णामुत्सादनाय कालविलम्बात्प्रतिज्ञाया दीर्घत्वमीदृशीमुग्रां प्रतिज्ञामारुह्य कृत्वा केनान्येन नन्दाः पर्यायभूता एकस्यां तस्यां दामनिबद्धाः पशव इव क्रमेण हता इत्यन्वयः । पश्यतो राक्षसस्य पश्यन्तं राक्षसमनादृत्ये-त्यर्थः । 'षष्ठी चानादरे' इति षष्ठी ॥ २७ ॥

गृध्रैरिति । वियति आबद्धचक्रं विरचितमण्डलं यथा तथा विचलितै-र्दीर्घा निःकम्पाः पक्षा येषां तैर्गृध्रैरेव धूमैरिति व्यस्तरूपकम् । चिता-ग्नीनां ज्वलदङ्गारमात्रशेषतया सहजधूमाभावात् गृध्रा एव धूमत्वेन निरूपिताः । तैर्गृध्रधूमैर्ध्वस्तार्कभासां तिरोहितसूर्यतेजसां दिशां मण्डलं सघनमिव मेघमण्डलप्रच्छादितमिवेत्युत्प्रेक्षा दर्शयन्तः बहलवसावशेषै-र्नन्दैः श्मशाननिलयान्प्रेतवृकादीन् एतान्प्राणिनः प्रीणयन्तः एते परितः श्मशानेषु दृश्यमाना हव्यवाहा अद्यापि न निर्वान्ति न शाम्यन्ति । पश्य चेति वाक्यार्थः कर्म । अतिक्रान्तेऽपि विषये रोषावेशवशादेतानेत इति च बुद्धौ प्रत्यक्षीकृत्य निर्देशः । नन्दकुलनिर्दहनक्रोधोऽद्यापि न शान्त इत्यर्थः । अयं वधरूपो विद्रवः ॥ २८ ॥

आः केनेति । इयं तर्जनरूपा द्युतिः ।

१ °रब्ध for °बद्ध. M.; विचरितैः for विचलितैः M.; विचलितोद्दी° A.; चलतया G.; चलनया B. N. २ तैर्धयन्तः M. ३ For नन्दैरा° B. E. N. G. have नन्दा-नाम्; M. has °नाय° for °नन्द°; चैते for चैतान् G. ४ तेन P. From प्रतिज्ञाम् in the second line of the preceding stanza down to this all is wanting in E.; बहुल for बहल M. R. ५ om. in B. E. N. G.

16

राजा—नन्दकुलविद्वेषिणा दैवेन[1]।

चाणक्यः—दैवमविद्वांसः प्रमाणयन्ति ।

राजा—विद्वांसोऽप्यविकत्थना भवन्ति ।

चाणक्यः—(सकोपम्[2]।) वृषल, भृत्यमिव मामारोढुमिच्छसि।

शिखां मोक्तुं बद्धामपि[3] पुनरयं धावति करः

(भूमौ पादं प्रहृत्य[4]।)

प्रतिज्ञामारोढुं पुनरपि चलत्येष[5] चरणः ।

प्रणाशान्नन्दानां[6] प्रशममुपयातं त्वमधुना

परीतः कालेन ज्वलयसि मम[7] क्रोधदहनम् ॥ २९ ॥

राजा—(सावेगमात्मगतम्[8]।) अये, कथं सत्यमेवार्यः कुपितः । तथाहि ।

---

नन्दकुलविद्वेषिणा दैवेनेति । एतदादि क्रोधसंरब्धयोरन्योन्याधिक्षेपो विरोधनम् ।

आरोढुमिच्छसीति । अधिक्षेप्तुं प्रवर्तसे इत्यर्थः ।

शिखामिति । तीर्णप्रतिज्ञत्वाद्बद्धुमिष्टामपि न बध्नामीत्यर्थः । शिखाया अद्यापि न बद्धत्वान्निर्वहणान्ते भंत्स्यमानत्वात् । 'तीर्णप्रतिज्ञेन मया केवलं बध्यते शिखा' (७। १७) इति वक्ष्यति ।

प्रतिज्ञामारोढुमिति । कालेन मृत्युना परीतः वशीकृत इवेति लुप्तोपमा न तु त्वं कालपरीतः चिरजीवित्वेन वर्धिष्णुत्वादिति भावः । अत्र वीरो रसः स्थायी क्रोधेनानुभावेन पौष्कल्यं नीतः ॥ २९ ॥

अये कथं सत्यमेवार्यः कुपित इति । मया तदाज्ञयैव कार्यानुरोध-

---

१ B. E. N. add इदमनुष्ठितम्. २ Om. in M. R.; कोपं नाटयित्वा E.; कोपं नाटयन् B. N; A. reads वृष simply for next word, after which B. N. G. add वृषल again; E. adds कथम्; अधि for आ in आरोढु° E. ३ E. has मम for अपि. ४ भू-त्य om. R. M; भूमौ पादप्रहारं दत्वा. G. E.; do° कृत्वा for दत्वा B. N. ५ चलत्येव M. R. ६ प्रणशनन्दा°. E.; °यान्तम् for °यातम् R. ७ पुनः B. N. ८ स्व for आत्म B. N. G; M. has simply सोद्वेगम्; तत् before कथम् B. E. N.; आर्यः after कुपितः B. N.

संरम्भोत्स्पन्दि[1]पक्ष्मक्षरदमलजलक्षालनक्षामयापि
भ्रूभङ्गोद्भेद[2]धूमं ज्वलितमिव पुरः पिङ्गया नेत्रभासा ।
मन्ये रुद्रस्य रौद्रं रसमभिनयतस्ताण्डवेषु[3] स्मरन्त्या
संजातोग्र[4]प्रकम्पं कथमपि धरया धारितः पादघातः ॥ ३० ॥

चाणक्यः—( कृतककोपं[5] संहृत्य । ) वृषल वृषल, अलमुत्तरोत्तरेण । यद्यस्मत्तो गरीयान्[6]राक्षसोऽवगम्यते तदिदं शस्त्रं तस्मै दीयताम् । ( इति शस्त्र[7]मुत्सृज्योत्थाय चाकाशे लक्ष्यं बद्ध्वा स्वगतम् । ) राक्षस राक्षस, एष भवतः[8] कौटिल्यबुद्धिविजिगीषोर्बुद्धेः प्रकर्षः ।

चाणक्यतश्च[9]लितभक्तिमहं सुखेन
जेष्यामि मौर्यमिति संप्रति यः प्रयुक्तः ।

---

कैतवेन कोपितोऽपीति शेषः ।

संरम्भोत्स्पन्दीति । संरम्भेण क्रोधावेशेनोत्स्पन्दीन्युच्चलितानि पक्ष्माणि यस्याः । अत एव क्षरता गलतामलजलेन क्रोधाश्रुणा यत्क्षालनं तेन क्षामया रूक्षयापि क्रोधावेशात्पिङ्गयारुणया नेत्रभासा कर्त्र्या भ्रूभङ्गोद्भेदः क्रोधजनितभ्रूविकारविशेषः स एव धूमो यस्मिन्कर्मणि तद्यथा तथा पुरोभागे ज्वलितमिव दीप्तमिव । भावे क्तः । वह्नेर्ज्वलदवस्थायां धूम उद्गच्छतीति वस्तुस्थितिः । ताण्डवेषु पुरुषकर्तृकनृत्यविशेषेषु रौद्रं रसमभिनयतः अभिनीय दर्शयतः रुद्रस्य स्मरन्त्या । 'अधीगर्थदयेशां कर्मणि' इति षष्ठी । धरया पृथिव्या संजातोग्रप्रकम्पं यथा तथा कथमपि कृच्छ्रादार्यस्य पादघातो धारित इत्यन्वयः । रौद्रताण्डवकारिणो रुद्रस्य पादघात इवातिक्रूरश्चाणक्यपादघात इति रौद्रो रसः । वीररसोऽङ्गम् । इयमुद्वेजनरूपा द्युतिः ॥ ३० ॥

---

१ °म्भास्पन्दि B. E. N. G; R. om. पक्ष्म. २ द्भूत E; B. E. N. read पुनः for पुरः. ३ सम् for षु B. N. ४ °तोदग्रकम्प B. N.; संपातोदग्रक° E.; तान्त्रप्रक° G; कथमिव for कथमपि R; पादपादः for पादघातः E. ५ कृतकम् B. N; G. reads रोषम्; वृषल (अल?) मुत्तरेण A. R. M; G. om. one वृषल. ६ वरी° B. E. N.; तस्मादिदम् for तदिदं B. E. N; G. om. तत्. ७ निष्क्रामन् before this M; P. om. च.; B. E. N. G. add प्रत्यक्षवत् after च.; A. P. om. स्वगतम्; E. has आत्मगतम्; A. R. G. om. one राक्षस. ८ P. has एव for एष. For भवतः M. R. read ते. B. N. add एव after एष; °र्बुद्धिप्र° E. ९ °तः स्ख° B. N. (r) E; विजेतुम् for सुखेन. (?) M.

भेदः किलैष भवता सकलः स एव
संपत्स्यते[1] शठ तवैव हि दूषणाय ॥ ३१ ॥

( इति[2] निष्क्रान्तः । )

**राजा**—आर्य[3] वैहीनरे, अतः प्रभृत्यनादृत्य चाणक्यं चन्द्रगुप्तः स्वयमेव राज्यं[4] करिष्यतीति गृहीतार्थाः क्रियन्तां प्रकृतयः[5] ।

**कञ्चुकी**—( आत्मगतम्[6] । ) कथं निरुपपदमेव चाणक्यमिति, नार्यचाणक्यमिति । हन्त, संगृहीतो[7]ऽधिकारः । अथ वा न खल्वत्र वस्तुनि देवदोषः[8] । कुतः ।

स दोषः सचिवस्यैव यदसत्कुरुते नृपः ।
याति यन्तुः प्रमादेन गजो व्यालत्ववाच्यताम् ॥ ३२ ॥

**राजा**—आर्य, किं[9] विचारयसि ।

**कञ्चुकी**—देव[10], न किंचित् । दिष्ट्या देव इदानीं देवः संवृत्तः ।

---

चाणक्यत इति । दूषणायानिष्टायेत्यर्थः इदं स्वगुणाविष्करणं विचलनम् ॥ ३१ ॥

स दोष इति । नृपः सचिवमसत्कुरुते नाद्रियते । आदरानादरयोः सदसती । इति यत्स सचिवस्यैव दोषः न नृपस्य । व्यालत्वेन दुष्टगजत्वेन गजः वाच्यतां निन्द्यतां यन्तुः प्रमादेनैव याति न स्वतः । यन्ता शिक्षणेऽवहितश्चेद्गजोऽपि विनीतो वशीभवतीत्यर्थः ॥ ३२ ॥

---

१ बत M. R.; सतु G.; for हि-य B. N. (r) read विनाशनाय. २ Om. E. B. E. N. G. add चाणक्यः after निष्क्रान्तः. ३ Om. G.; अद्य for अतः B. E. N. G.; इतः R. ४ राज्यकार्याणि B. N. G.; राजा कार्याणि E. ५ Before क्रि° B. N. ६ स्वग° B. N. G.; एव for मेव B. N. G; चाणक्यो नार्यचाणक्य इति for चा-ति B. N. G. E; G. has नार्यः; M. om. ना-ति. ७ P. om. सम्; E. reads संहतो.; B. N. सत्यमेव हृतो &c.; G. om. हन्त and has सत्यं संहताधिकारः; खल्वस्मिन् E. ८ दैवदोषः for देवदोषः R. G.; देवं दोषेणावगन्तुमर्हामि B. N; E. agrees reading दैवम्; B. N. om. कुतः. ९ Om. R; G. reads विचारयति. १० नरदेव (?) M; B. N. after किंचित् add विचारयामि । किंत्वेतद्विज्ञापयामि; E. agrees reading चिन्तयामि for विज्ञा°.; B. N. add इति after संवृतः.

राजा—( आत्मगतम् । ) एवमस्मासु गृह्यमा[1]णेषु स्वकार्यसिद्धि-कामः सं[2]कामो भवत्वार्यः । ( प्रकाशम् । ) शोणोत्तरे, अनेन शुष्कक-लहेन शिरोवे[3]दना मां बाधते । शयनगृहमादेशय ।

प्र[4]तीहारी—एदु एदु देवो । (क)

राजा—( आ[5]त्मगतम् । )

> आर्याज्ञयैव मम लङ्घितगौरवस्य
> बुद्धिः प्रवेष्टुमिव भू[6]विवरं प्रवृत्ता ।
> ये सत्यमेव हि[7] गुरूनतिपातयन्ति
> तेषां कथं नु हृदयं न भिनत्ति लज्जा ॥ ३३ ॥

( इति निष्क्रान्ताः सर्वे )

[8]तृतीयोऽङ्कः ।

---

( क ) एतु एतु देवः ।

---

एवमिति । एवमावयोः कृतेऽपि ( कृतकेऽपि ) विरोधे लोकैस्तथ्यत्वेन गृहीते आर्यचिकीर्षितो मलयकेतुराक्षसयोर्विरोधः सुष्ठु संपत्स्यत इति भावः । इदं सिद्धवद्भाविश्रेयःकथनं प्ररोचना ।

आर्याज्ञयैवेति । भूविवरं प्रवेष्टुं लज्जातिशयेन स्वनिल( विल )यमभ्युप-गन्तुमिव प्रवृत्तेत्यर्थः । इत्थमत्र नियताप्तिः प्रदर्शिता ॥ ३३ ॥

इति श्रीत्र्यम्बकयज्वप्रभुवर्याश्रितढुण्ढिराजव्यासयज्वविरचिते मुद्रा-राक्षसनाटकव्याख्याने तृतीयोऽङ्कः समाप्तः ॥

---

१ विगर्ह्यमाणेषु E.; निगृ.° B. N. G. २ °कामःस° om. in R; after प्रकाशम् E. has आर्य आर्य शीघ्रं गच्छ गच्छ । कञ्चु°. यदाज्ञापयत्यार्य इति निष्क्रान्तः । राजा । शोणोत्तरे &c. as in text; G. has आर्ये before शोणो°; R. om. अनेन.; ३ शिरोव्यथा G; B. N. P. add तत्, E. ततः before शयन°; °गृहमार्यमा°. P.; मार्गमा A. ४ कञ्चु° M; P. R. E. om. one. एदु. For देवो R. has देव्वो, B. N. महाराओ. ५ B. E. N. add आसनादुत्थाय before this; G. om. this all. ६ वेष्टुमवनेर्विवे° B. E. N. G; G. reads विवरे. ७ न B. E. N. G; E. reads गुरुम्; For अतिपातयन्ति G. and N. (s) read प्रतिपादयन्ति; B. E. read प्रतिमानयन्ति. ८ इति before this in B. N.; इति मुद्राराक्षसनाटके in P.; कृतककलहः in E.

# मुद्राराक्षसम् ।



## चतुर्थोऽङ्कः ।



( ततः प्रविशत्यध्वगवेषः[1] पुरुषः )

**पुरुषः**—ही हीमाणहे[2] हीमाणहे । (क)

राअणिओओ[3] महिओ को णाम गआगअमिह करेइ ।

अद्धाणगमणगुव्वी[4] पहुणो अण्णा जइ ण होइ ॥ १ ॥ (ख)

---

( क ) आश्चर्यमाश्चर्यम् ।

( ख ) राजनियोगो महीयान्को नाम गतागतमिह करोति ।

अस्थानगमनगुर्वी प्रभोराज्ञा यदि न भवति ॥ १ ॥

---

अथ चतुर्थेऽङ्के राक्षसचारसंवादरूपाल्पा कथा प्रकरी कथ्यते । ही हीमाणहे इति । अयं निपातसमुदाय आश्चर्यद्योतकः ।

'जोअणसअसमहिअ' इति कचित्प्रथमपादे पाठः । योजनशतसमधिकं यथा तथेति क्रियाविशेषणम् ।

अस्थानगमन इति । अस्थाने अकाण्डे एव गमने प्रस्थानविषये गुर्वी अनतिक्रमणीया ॥ १ ॥

---

१ वेशः B. N. २ B. E. om. first ही; N. (s) reads हाहामा°; R. E. om. second हीमा°. ३ G. N. read जोअणसअं समहिअम्; B. °धिअम्; E. ditto reading य for अ in this; गदागदं B.; गआगत° N.; गयागअ° G.; गयागय° E.; गआगआ R.; गआगआइ M; E. om. इह following and P. and A. read एह; for करेइ A. P. read करेदि; N. E. करिज्ज; G. करेज्ज. ४ अत्था° B. E. N. G; for गुव्वी at the end of the compound P. has गुर्वी, B. N. गुरुई, E. गुरुद्दे (?). In the next word A. P. read प्पु for हु. G. reads होज्जइ, E. हुज्जइ, for होइ; E. has also अन्ना जइ for अण्णा जइ.

जाव[1] अमच्चरक्खसस्स एदं गेहं गच्छामि। (श्रान्तवत्परिक्रम्य।) को[2] एत्थ दुवारिआणं। णिवेदेह भट्टिणो अमच्चरक्खसस्स एसो करभओ[3] तुवरन्तो पाटलिपुत्तआदो आगदोत्ति। (क)

( प्रविश्य )

**दौवारिकः**—भद्द, सणेहिं[4] मन्तेहि। एसो अमच्चो कज्जचिन्ताजणिदेण जाअरेण[5] समुप्पण्णसीसवेअणो अज्ज वि सअणं[6] ण मुञ्चदि। ता चिट्ठ मुहुत्तअं। लब्धावसरो तुह आअमणं णिवेदेमि[7]। (ख)

---

( क ) यावदमात्यराक्षसस्यैतद्गेहं गच्छामि। कोऽत्र दौवारिकाणाम्। निवेदय भर्तुरमात्यराक्षसस्य एष करभकस्त्वरयन्पाटलिपुत्रादागत इति।

( ख ) भद्र, शनैर्मन्त्रय। एषोऽमात्यः कार्यचिन्ताजनितेन जागरेण समुत्पन्नशीर्षवेदनोद्यापि शयनं न मुञ्चति। तस्मात्तिष्ठ मुहूर्त्तम्। लब्धावसरस्तवागमनं निवेदयामि।

---

१ B. G. N. have ता before this. E. has याव for this. B. N. have जेव्व for एदं; E. जेव. For गच्छामि at the end of the sentence M. R. read गच्छम्मि; A. P. गच्छेमि; परिश्रान्त° for श्रान्त° B. G. N. E. २ भो before this B. G. N; P. has येत्थ for एत्थ; for दुवा° B. N G. have दुआ°; E. दोवा°; निवे° for णिवे° B. E. N; B. N. add दाव after it. ३ Before this B. N. have क्खु, E. खु; G. reads करहओ; E. करभको; B. N. करहको; B. adding after this करहका विअ कज्जम्; E. करभको विय कज्जम्; G. adds विअ only omitting व in next word; पाडलिउत्तादो N.; पाडलिउत्तआदो R.; पाडलिपुत्तादो E.; पाटलिउत्तादो G.; पाटलिपुत्तादो B.; पाटलिवुत्तआदो M.; पाटलिपुत्तोआदो P; R. M. read आअदो° in next word and E. आगतो°. ४ सणिअ A. P.; मा उच्चम् B. E. N. G.; क्खु भट्टा अमच्चरक्खसो B. N.; क्खु अमच्चर° E.; अमच्चर° G; B. and N. (r) read रज्ज for कज्ज after अमच्चो. ५ जागरेण N. E.; °गरएण° R; G. has समुप्पादिद for समुप्पण्ण after this and सरीर for सीस. ६ वि दाव ण सअणदलम् B.; अजविणताव सयणअलं विमु°. G.; अज्जावि ताव ण सअणदलं विमु°. N.; अज वि दाव सजनयलनं मु°. E.; मुहुत्तयम् G. E.; मृजतअम् (?) N. Before this B. N. read ताव; B. G. N. add जाव से, E. जाव, after it; भविअ भवदो for तुह B.; भविअ तुह N.; भविअ भअदागमणम् G.; आगमणम् B. E. ७ निवेदेमि E.; णिवेदेह्मि R.

पुरुषः—[1]भद्दमुह, तह करेहि। (क)

([2]ततः प्रविशति शयनगृहगत आसनस्थः शकटदासेन सह सचिन्तो राक्षसः।)

राक्षसः—([3]आत्मगतम्।)

मम विमृशतः कार्यारम्भे विधेरविधेयता-
[4]मपि च कुटिलां कौटिल्यस्य प्रचिन्तयतो मतिम्।
[5]अथ च विहिते मत्कृत्यानां निकाममुपग्रहे
कथमिदमिहेत्युन्निद्रस्य [6]प्रयात्यनिशं निशा॥ २॥

अपि च।

कार्योपक्षेपमादौ तनुमपि रचयंस्तस्य विस्तारमिच्छ-
न्बीजानां गर्भितानां फलमतिगहनं गूढमुद्भेदयंश्च।
कुर्वन्बुद्ध्या [7]विमर्शं प्रसृतमपि पुनः संहरन्कार्यजातं
कर्त्ता वा नाटकानामिममनुभवति क्लेशमस्मद्विधो वा॥ ३॥

---

(क) भद्रमुख, तथा कुरु।

---

ममेति। मम कार्यारम्भे कार्यारम्भप्रभृति विधेर्दैवस्याविधेयतां प्रतिकूलतां विमृशतः मत्कृत्यानां विषकन्यादिकपटकार्याणामुपग्रहे निरोधे अन्यथाभावे कथमिदमिह राजकार्यं भविष्यतीत्युन्निद्रस्यानिशं निशा प्रयातीत्यन्वयः॥ २॥

कविरत्राद्भुततरनीतिविषयकस्वसंविधानक्लेशं राक्षसवचनव्याजेन प्रस्तौति—कार्योपक्षेपमिति। कार्योपक्षेपं बीजन्यासं तनुं स्तोकोद्दिष्टमादौ

---

१ G. reads भद्द मुहुत्तअं तथा करेमि; N. भद्दमुह तहा करेमि; E. भद्दमुहा करेहि; B. भद्दमुह जधा दे रोअदि; P. has करोमि for करेहि in text. २ B. E. N. G. om. गृह after शयन; B. E. N. read °गतेन for °स्थः in आसनस्थः; B. N. read अनुगम्यमानः for सह and B. has चिन्तितो for सचिन्तो. ३ स्वगतम् G. ४ °अथच E., सहज B. N., for अपिच. ५ अपि E.; विहते तत्कृ° for विहितेमत्कृ° B.; तत् for मत् E.; °ह° for °हि° N. ६ °न्त्य°...शाः B. E. N. G. ७ °मर्षम् B. N.; मर्शान् E.; मुहुः for पुनः N.; पुरः G.

[१]तदपि नाम दुरात्मा चाणक्यबटुः—

(उपसृत्य)

**दौवारिकः**—[२]जेदु (क)

**राक्षसः**—[३]अतिसंधातुं शक्यः स्यात्।

**दौवारिकः**—[४]अमच्चो। (ख)

**राक्षसः**—([५]वामाक्षिस्पन्दनं सूचयित्वा आत्मगतम्।) दुरात्मा चाणक्यबटुर्जयत्वतिसंधातुं शक्यः स्यादमात्य [६]इति वागीश्वरी वामाक्षिस्पन्दनेन [७]प्रस्तावगता प्रतिपादयति। तथापि नोद्यमस्त्याज्यः। (प्रकाशम्।) भद्र, किमसि वक्तुकामः।

---

(क) जयतु।

(ख) अमात्यः।

---

मुखसंधौ रचयंस्तस्य बीजस्य विस्तारं व्यक्तिं प्रतिमुखसंधाविच्छन्कुर्वन् गर्भितस्य दृष्टनष्टस्य बीजस्य गहनं फलं गूढं यथा तथा गर्भसंधावुद्भेदयन् अन्विष्यन्विमर्शसंधौ तस्यैव बीजस्य बुद्धया विमर्शमनुसंधानं कुर्वन् प्रसृतमपि यथायथं विप्रकीर्णमपि कार्यजातं मुखसंध्याद्यर्थजातं निर्वहणसंधौ संहरन्नैकार्थ्यमुपनयन्नाटकानां कर्त्ता वा तथा आदौ गूढमारब्धं राजकार्यजातं अन्तरान्तरा विस्तारयन्गर्भितानां गूढानां बीजानां मन्त्राणां फलं साध्यं मुहुरुद्भेदयन् उन्नयन् बुद्धया विमृशंश्च आयतौ प्रसृतं शुभोदर्कं संहरन्नुपसंहरन् अस्मद्विधो मन्त्री वा महान्तमायासमनुभवतीत्यर्थः॥ ३॥

वागीश्वरीति। वागीश्वरी उपश्रुतिरूपा वामाक्षिस्पन्दनेन प्रस्तावं संवादं गता प्राप्ता सती पूर्वोक्तमर्थं सूचयतीत्यर्थः। इदं कार्यसंग्रहणमादानं नाम विमर्शसंधेरन्त्यमङ्गम्। चाणक्यकर्तृकस्य राक्षसातिसंधान-

---

१ M. R. om. तद्; A. P. om. नाम. २ जअदुजअदु B. N.; जयदुजयदु E. G. which add अज्जो. ३ अभि° B. E. N. G.; अनु° P. ४ G. adds राक्षसः. ५ स्पन्दम् B. N. G; B. E. N. G. R. omit दुरात्मा; B. N. read जयति अभि°; G. E. जयतु अभि°. ६ E. adds राक्षस before this; B. N. (r) om. वागीश्वरी and E. reads दौवारिकमवलोक्य प्रकाशम् before वागीश्वरी. ७ गतम् B. E; P. reads पतिमापा° for प्रतिपा°.

दौवारिकः—अमच्च, [1]करभओ दुआरे चिट्ठदि । (क)

राक्षसः—[2]शीघ्रं प्रवेशय ।

दौवारिकः—[3]तहेत्ति । ( निष्क्रम्य पुरुषमुपसृत्य । ) भद्द, उपसप्प [4]अमच्चम् (ख) ( इति [5]निष्क्रान्तः । )

करभकः—(उपसृ[6]त्य ।) जेदु अमच्चो । (ग)

राक्षसः—[7]भद्र, उपविश ।

करभकः—जं [8]अमच्चो आणवेदित्ति । ( भूमावुपविष्टः । ) (घ)

---

( क ) अमात्य, करभको द्वारि तिष्ठति ।

( ख ) तथेति । भद्र, उपसर्प अमात्यम् ।

( ग ) जयत्वमात्यः ।

( घ ) यदमात्य आज्ञापयति ।

---

रूपस्य कार्यस्य राक्षसेनैव दुरुपश्रुतिदुःशकुनप्रतिपादनद्वारा संग्रहणात् ।

---

१ B. E. have एसोक्खु before this; G. एसो.; N. B. read ह for भ and E. °को for ओ; R. M. read दुवारेचिट्ठइ; G. दुवारि; B. reads पाडलिपुत्तादो आअदो इच्छदि अमच्चं पेक्खिदुम्; E. agrees reading वो for दो in पुत्तादो and ग for अ in आअदो; N. has एसो पाडलिउत्ताओ आसूदो करहओ आअदो इच्छदि &c. २ अवारितम् B.; अविलम्बितम् E; N. G. add आर्य किं विचारयसि before this; B. adds एनम् after प्रवे°. ३ for तहेत्ति B. E. N. G. read जं अमच्चो ( G. देवो ) आणवेदित्ति ( इति G.; om. E. ); G. om. निष्क्रम्य; E. substitutes निर्गत्य; P. om. तहेत्ति निष्क्रम्य and reads पुरु° पुनरुप°. भद्र B N. G; B. N. E. add here एसो आमच्चो चिट्ठदि ता; G. agrees adding खु after एसो and om. ता. For उपसप्प; R. reads उवसप्प; G उप्पसप्पदु; A. उपसृप्प; E. उवसप्पे हि. ४ B. E. N. G. have णम् for अम्°. ५ E. om. इति; B. E. N. G. add दौवारिकः after this. ६ Before कर° G; B. N. add राक्षसम् before उप°; B. G. N. have जअदु जअदु; E. जयदु जयदु; ७ B. E. N. G. before this नाट्येनावलोक्य and करभक स्वागतमुपविश्यताम् for what follows. ८ अज्जो A. P.; देवो G; for त्ति G. reads इति; E. om. it; and B. and N. read. उपविशति for उपविष्टः further on.

**राक्षसः**—(आत्मगतम्[1]।) कस्मिन्प्रयोजने ममायं प्रहित इति प्रयोजनानां[2] बाहुल्यान्न खल्ववधारयामि। (इति चिन्तां नाटयति।)

(ततः प्रविशति वेत्रपाणिर्द्वितीयः[3] पुरुषः)

**पुरुषः**—ओसलेह[4] ओसलेह। आअदो। अवेह अवेह माणवा। किं ण पेक्खह[5]। (क)

दूले पच्चासत्ती[6] दंसणंवि दुल्लहमधण्णैः।
कल्लाणकुलहराणं[7] देआणं विअ मणुस्सदेआणं ॥ ४ ॥ (ख)

---

(क) अपसरत अपसरत। आगतः। अपेत अपेत मानवाः। किं न पश्यथ।

(ख) दूरे प्रत्यासत्तिर्दर्शनमपि दुर्लभमधन्यैः।
कल्याणकुलधराणां देवानामिव मनुष्यदेवानाम् ॥ ४ ॥

---

आत्मगतमिति। राक्षसकरभकसंवादावसरे भागुरायणेन मलयकेतुमतिसंधातुं तयोः प्रवेशावसरदानाय राक्षसचिन्तानाटनं कविनोपनिबद्धमिति द्रष्टव्यम्। इदमङ्कावतरणम्। अत्र राक्षसं प्रति करभकेण वक्ष्यमाणस्य मौर्यचाणक्ययोर्मिथो विरोधस्य पूर्वकार्यानुसंगतत्वात्। लक्षणं तु पूर्वमेवोक्तम्—'यत्र स्यादुत्तराङ्कार्थः' इत्यादिना।

राज्ञो गमनत्वरासंभ्रमादपसरतापसरतेति पुनरुक्तिः।

कल्याणकुलधराणामिति। कल्याणकुलं धरन्तीति कल्याणकुलधराः

---

१ स्वग° B. N; B. E. N. have अथ after this; G. om. अयम्; B. N. add प्रणिधिः after it. २ G. E. read कार्याणाम्; B. E. N. om. बाहुल्यात् and read प्रभूतत्वात् before प्रयो°; G. reads बहुत्वात् for बाहुल्यात्. ३ अपरः for द्वितीयः B. E. N. ४ ओसलध अज्जा ओसलध। अवेध माणहे अवेध। किम् &c. B. N.; ओसलह ओसलह अज्ज। अवेह माणहे अवेह। ता किम् &c. G.; ओसलध अज्जा ओसलध। अवेह माणहे अवेह E; R. and M. have ओसलेह and अवेह once only; R. has अअम् before आअदो. ५ पेक्खेह R. M.; पेक्खध B. N. G. ६ °सत्ती. R.; °णमवि for °णवि B. E. N.; °णमपि G.; °ण्णेहिं for ण्णैः B. E. N. G. ७ घ. B.; हरणम् N; R. reads देव्वाणम् in both places; N. देवाणम्; B. and E. read देवाणं च भूमिदेवाणम्; G. has भूमिदेवाणम् omitting दे—अ.

(आकाशे)

[1]अज्जा,—किं भणाह—'किंणिमित्तं ओसालणं करिअदि' त्ति । [2]अज्जा, एसो क्खु कुमालो मलयकेदु समुप्पण्णसीसवेअणं अमच्चरक्खसं पेक्खि[3]दुं इदो एव आअच्छदि । ता ओसालणा करीअदि ।

(इति निष्क्रान्तः पुरुषः ।) (क)

(ततः प्रविशति भागुरायणेन कञ्चुकिना [4]चानुगम्यमानो मलयकेतुः)

मलयकेतुः—(नि[5]श्वस्यात्मगतम् ।) अद्य दशमो मासस्तातस्योपरतस्य न चास्माभिर्वृथापुरुषाभिमानमुद्वहद्भिस्तमुद्दिश्य तोयाञ्जलिरप्यावर्जितः । [6]प्रतिज्ञातमेतत्पुरस्तात् ।

वक्षस्ताडनभिन्नरत्नवलयं भ्रष्टोत्तरीयांशुकं
हाहेत्युच्चरितार्त्तनादकरुणं भूरेणुरूक्षालकम् ।

---

(क) आर्याः किं भणथ किंनिमित्तमपसारणा क्रियते इति । आर्याः एष खलु कुमारो मलयकेतुः समुत्पन्नशीर्षवेदनममात्यराक्षसं प्रेक्षितुमित एवागच्छति तस्मादपसरणा क्रियते ।

---

महोन्नतवंशाः मनुष्यदेवाः राजानः । देवास्तु कल्याणः सुवर्णमयः कुलधरः कुलपर्वतो मेरुर्येषां तथोक्ताः ॥ ४ ॥

आकाशेति । आकाशलक्षणं पूर्वमुक्तम् ।

वक्ष इति । निवापाञ्जलिः श्राद्धतर्पणमिति भावः । 'पितृदानं निवापः स्यात्' इति । त्रिकाण्डी । 'वक्षस्ताडन–' इत्यादि जातिवर्णनम् ॥ ५ ॥

---

१ अज्ज B. N; for भणाह B. has भणाध; P. भणह; °लणा for °लणं B. E. N. G; B. N. having एसा before it. For करिअ° R. M. read करेअ°; G. कलीअ°; N. किलीय; B. करीअ°; E. करीय°; B. om. त्ति. २ अज्ज R. E; G. om. क्खु; G. E. read °केदू and M. R. उप्पण्ण°. ३ देखि°. A. P; B. has सुणिअ before this. For इ-व B. N. have इहज्जेव्व; E. इहय्येव; G. इदोजेव्व; आग° for आअ° E.; आअच्छइ R.; for ता B. E. N. G. read एदिणा कालणेण.; G. E. and N. (s) adding ता before एदि°; R. has ओसालणम्; G. कलीअ°; and A. P. read त्ति for इति. ४ B. N. om. च and have सह before कञ्चु°; E. has अनुगम्य° before कञ्चु°. ५ निःश्वस्या° A. P. G.; अथ for अद्य P. ६. अथवा before this B. N.

तां[1]दृग्भ्रातृजनस्य शोकजनितं संप्रत्यवस्थान्तरं
शत्रुस्त्रीषु मया वि[2]धाय गुरवे देयो निवापाञ्जलिः ॥ ५ ॥

किं[3]मत्र बहुना ।

उ[4]द्यच्छता धुरमकापुरुषानुरूपां
गन्तव्यमाजिनिधने[5]न पितुः पथा वा ।
आच्छिद्य वा स्वजननीजनलोचनेभ्यो
नेयो मया रिपुवधूनयनानि बाष्पः ॥ ६ ॥

(प्रकाशम्[6] ।) आर्य जाजले, उच्यन्तामसद्वचनादनुयायिनो राजानः—'एक एवाहममात्यराक्षसस्यातर्कि[7]तगमनेन प्रीतिमुत्पादयितुमिच्छामि । त[8]त्कृतमनुगमनक्लेशेन' इति ।

कञ्चुकी—त[9]था । ( इति परिक्रम्याकाशे । ) भो भो राजानः, कुमारः समाज्ञापयति—'न खल्वहं केनचि[10]दनुगन्तव्यः' इति । ( वि-

---

उद्यच्छतेति । उद्यच्छतेत्यत्र यद्यपि 'समुदाङ्भ्यो यमोऽग्रन्थे' इत्यात्मनेपदेन भवितव्यम्, तथापि 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' इत्यतः सूत्रात् 'कर्त्रभिप्राये' इत्यनुवर्तनात्स्वपौरुषोद्यमनक्रियाफलस्य स्वजननीजनलोचनबाष्पापनयनस्य रिपुवधूलोचनगामित्वाभिप्रायेण परस्मैपदं कविना प्रयुक्तमित्यवधार्य संतोष्टव्यं वैयाकरणवर्यैः । आच्छिद्यापनीय रिपुवधेन तन्नयनबाष्प उत्पादिते स्वजननीजनदुःखमपमार्जितप्रायं स्यादित्यर्थः । सुगममवशिष्टम् ॥ ६ ॥

कृतमिति । कृतमित्ययं अलमित्यर्थे ।

---

१ °ग्मा°. E. २ निधा°. E.; तिलायाञ्जलिः for निवापा° N.; जलस्याञ्जलिः E. ३ तत्किमिह. B.; तत्किमत्र N.; किमिति E. ४ उद्व° G. For धुरमका°. P. has धुरमरौ. and A. M. धुरमरौ. ५ °माजिविहितेन. B. E. N.; °माजिनिहतेन G. ६ प्रकाशम् om. in A. P; उच्यताम् P. G. E; G. om. वचनात् in असद्व°. ७. °र्किताग° B. E. N. G. R. ८ अतः for तत् B.; ततः E.; यतः G; G. has अनुगमनेनेति. ९ यदाज्ञापयति कुमारः B. G; N. has यच्चाज्ञा° and E. has परिक्रम्य before this. कुमारो वः समादिशति. G. १० °चिदवग.° G. N; P. om. इति; दृष्ट्वा for विलोक्य. E.

लोक्य सहर्षम् ।) [1]कुमारस्याज्ञानन्तरमेव सर्वे राजानः प्रतिनिवृत्ताः । [2]पश्यतु कुमारः ।

[3]सोत्सेधैः स्कन्धदेशैः खरतरकविकाकर्षणात्यर्थभुग्नै-
रश्वाः [4]कैश्चिन्निरुद्धाः खमिव [5]खुरपुटैः खण्डयन्तः पुरस्तात् ।
केचिन्मातङ्गमुख्यैर्विहतजवतया मूकघण्टैर्निवृत्ता
मर्यादां भूमिपाला जलधय इव ते देव नोल्लङ्घ[6]यन्ति ॥ ७ ॥

**मलयकेतुः**— आर्य[7], त्वमपि सपरिजनो निवर्तस्व । भागुरायण [8]एको मामनुगच्छतु ।

**कञ्चुकी**—[9]तथा । (इति सपरिजनो निष्क्रान्तः ।)

**मलयकेतुः**—सखे भागुरायण, विज्ञ[10]प्तोऽहमिहागच्छद्भिर्भद्रभट-प्रभृतिभिः 'यथा न [11]वयममात्यराक्षसद्वारेण कुमारमाश्रयणीयमाश्र-

---

सोत्सेधैरिति । खरतराणां तीक्ष्णलोहकण्टककीलितानां कविकानां खलीनानां आकर्षणादत्यर्थं भुग्नैर्नम्रितैरत एव सोत्सेधैर्मध्यभागोन्नतैः स्कन्धदेशैर्ग्रीवाभागैरुपलक्षिताः अश्वाः कैश्चिन्निरुद्धाः । केचित् योधाः । सहसा जवनिरोधे सति मूकघण्टैरिति स्वभावोक्तिः । मातङ्गमुख्यैर्निवृत्ताः जवनान्मातङ्गान्सहसा संनिगृह्य निवृत्ता इत्यर्थः ॥ ७ ॥

---

१ E. has कुमार एते before this; B. N. read कुमार कुमार एते भवदाज्ञासमनन्तरमेव प्रतिनिवृत्ताः सर्व एव राजानः; G. E. read प्रतिनिवृत्ताः सर्वे राजानः. २ B. G. N. add हि after this. ३ सोत्सेकैः E.; सौधोच्चै P. For खरतरकविका B. N. read मुखरकविकया., G. E. खरकविककशा., R. M. read खरतरकलिका; °त्यन्त° for °त्यर्थ° R. M. ४ खरपदैः G. ५ कश्चि° P; र्विहित° for र्विहत° P. A. E. ६ °यन्ते R. ७ राजा. A. P; after आर्य B. E. N. add जाजले. ८ एक एव B. N. ९ यदाज्ञापयति कुमार इति. B. E. N. G; R. G. M. om. सपरिजनो. १० विज्ञापितो B. E. N.; किम् before विज्ञप्तो G. ११ M. R. om. न after यथा and insert it before कुमार°.; B. E. N. (r) om. आश्रयणीयम् after this.

यामहे । किंतु कुमारस्य सेनापतिं शिखरकमुरीकृत्य[1] दुष्टामात्यपरिगृहीताच्चन्द्रगुप्तादपरक्ताः कुमारमाभिरामिकगुणयोगादाश्रयणीयमाश्रयामहे[2]' इति । तन्न[3] मया सुचिरमपि विचारयता तेषामयं[4] वाक्यार्थोऽवधारितः ।

भागुरायणः—कुमार, न दुर्बोधोऽयमर्थः[5] । विजिगीषुमात्मगुणसंपन्नं प्रियहितद्वारेणाश्रयणीयमाश्रयेदिति ननु न्याय्य एवायमर्थः ।

मलयकेतुः—सखे भागुरायण, नन्वमात्यराक्षसोऽस्माकं प्रियतमो हिततमश्च[6] ।

भागुरायणः—एवमेतत्[7] । किंत्वमात्यराक्षसश्चाणक्ये बद्धवैरो न चन्द्रगुप्ते[8] । तद्यदि कदाचिच्चाणक्यमतिजितकाशिनमसहमानः[9]

आश्रयाम_ इति । राक्षसस्य दुष्टत्वं ध्वनयितुं दुष्टामात्येति चाणक्यविशेषणम् । आभिरामिकगुणेति च मौर्यदूषणाय ।

अवधारित इति । अतःपरं भागुरायणस्य मलयकेत्वतिसंधानवचनं सर्वं बीजार्थस्यावमर्शनम् ।

---

१ °कमुररीकृत्य P.; शिखरसेनमुरी°. G.; शिखरसेनं द्वारीकृत्य B. E. N. २ सन्तः before this B. E. N. ३ तत्र P. ४ अयम् om. in B. N. For अव °B.N. (r) have अधिगतः, P. नाव°. ५ B. N. have एवायमत्यन्त before this and om. अयम् after; B. N. G. add पश्य after अर्थः. ६ B. N. read वि...रात्म...न्नः प्रि°. &c; G. agrees omitting visarga after न्न. For हित G. has विहित; °श्रयतेति for °श्रयेदिति M. R.; °णाश्रयणीय इति G.; °श्रयीतेति. A. P. which om. ननु following; A. reads न्याय्यम् and G. न्यायम् for न्याय्यः; B. N. G. om. अर्थः; E. om. this and last speech. ७ अस्माकम् is before अमात्य &c. in B. E. N. G; E. has निरर्गलम् before प्रिय° which last G. has after हिततमः. ८ कुमार before this B. E. N.; R. has एवमेव तत्. ९ तु before this B. G N.; चन्द्रगुप्तः before चाणक्य in B. E. N. G; °काशितयासह° for काशिनमसह° E.

स[1] साचिव्याद्वरोपयेत्ततो नन्दकुलभक्त्या नन्दान्वय एवायमिति सुहृज्जनापेक्षया चा[2]मात्यराक्षसश्चन्द्रगुप्तेन सह संदधीत । चन्द्रगुप्तोऽपि पितृपर्या[3]यागत एवायमिति संधिमनुमन्येत । ए[4]वं सत्यस्मासु कुमारो न विश्वसेदित्ययमेषां वाक्यार्थः ।

मलयकेतुः—युज्यते । अ[5]मात्यस्य गृहमादेशय ।

भागुरायणः—इ[6]त इतः कुमारः ।

(उभौ परिक्रामतः ।)

भागुरायणः—इ[7]दममात्यगृहम् । प्रविशतु कुमारः ।

मलयकेतुः—एष प्रविशा[8]मि ।

राक्षसः—( आत्मगतम् । ) अ[9]ये, स्मृतम् । ( प्रकाशम् ।) भद्र, अपि दृष्टस्त्वया कुसुमपुरे स्तनकलशः ।

पु[10]रुषः—अमच्च, अह इं । (क)

(क) अमात्य, अथ किम् ।

सुहृज्जनेति । सुहृज्जनाश्चन्दनदासशकटदासादयः ।

१ A. P. B. E. N. G. om. स and for °द्वरोप° A. E. have °दपरोप° and P. °देवरोप°; °नन्दाकुन्वएवा°. A.; नंकुलान्वयएवा° P; after इति B. N. read कृत्वा संपत्, and G. E. संयत; E. has a च after एव. २ वा. P. ३ °पारंपर्याग° B; कृत्वा after °मिति B N. ४ य before this E; B. E. N. add अपि after अस्मासु; °श्वस्यदि° for विश्वसेदि° E; R. has एतेषाम् for एषाम्°. ५ B. N. G. read अमात्यराक्षसस्य; E. अमात्यराक्षस; B. N. have सखे भागुरायण before this, and मार्ग after गृह. ६ G. om. this speech; R. om. one इतः; B. N. have इति before उभौ. ७ कुमार before this B. E. N. G. which have राक्षसस्य after अमात्य.; G. om. प्र-रः. ८ B. N. add इति प्रवेशनं नाटयतः; E. प्रवेशं नाटयतः. ९ आः B. N.; E. has स्मृत्वा for अ-म्; B. E. N. G. om. आत्म°; P. reads स्वग°; त्वया after कुसुम° R. M. G; B. E. N. add वैतालिकः after पुरे. १० कर° B. N.; अध for अह B. E. N. G.; किम् for इम् E.

मलयकेतुः—(आकर्ण्य ।) भागुरायण, कुसुमपुरवृत्तान्तः प्रस्तूयते । न तत्र तावदुपसर्पामः । शृणुमस्तावत् । कुतः ।

सत्त्वभङ्गभयाद्राज्ञां कथयन्त्यन्यथा पुरः ।
अन्यथा विवृतार्थेषु स्वैरालापेषु मन्त्रिणः ॥ ८ ॥

भागुरायणः—यदाज्ञापयति कुमारः ।

राक्षसः—भद्र, अपि तत्कार्यं सिद्धम् ।

पुरुषः—अमच्चप्पसाएण सिद्धम् । (क)

मलयकेतुः—सखे भागुरायण, किं तत्कार्यम् ।

भागुरायणः—कुमार, गहनः सचिववृत्तान्तः । नैतावता परिच्छेत्तुं शक्यते । अवहितस्तावच्छृणु ।

राक्षसः—भद्र, विस्तरेण श्रोतुमिच्छामि ।

पुरुषः—सुणादु अमच्चो । अत्थि दाव अहं अमच्चेणाणत्तो

---

(क) अमात्यप्रसादेन सिद्धम् ।

(ख) शृणोत्वमात्यः । अस्ति तावदहममात्येनाज्ञप्तः यथा—'करभक,

---

सत्त्वभङ्गभयादिति । सत्त्वभङ्गो मनोभङ्गो विवृतार्थेषु परस्परविस्पष्टार्थेषु ॥ ८ ॥

---

१ B. E. N. have सखे for this; वर्तते for प्रस्तूयते B.; प्रस्तुतः E; °त्तान्तेन तावदुपशमोऽस्य G. For what follows B. N. read तत्रोप°, E. M. तन्नतावदुप°, G. तत्पटान्तरितावेव श्रृ°; °सर्पावः for सर्पामः B. E. N. and शृणुवः for शृणुमः also in G. २ किं कारणमिति. B. N.; किं कारणमेतत्. G. किं कारणमिति पश्य. E. omitting शृ-त् before this. ३ मन्त्र B.; पुनः for पुरः A. M. P. ४ Before भद्र R. G. ५ अमचस्स B. E. N; प for प्प. E; and ए B. E. N. ये G. रे P. for दे in प्पसादेण. ६ om. G. E; M. R. om भागु°; E. reads तत्किं कार्यं सिद्धम्. ७ खलु after this B. E. N. ८ श्रोतुमर्हति कुमारः B. N. G; E. agrees reading इच्छति for अर्हति. ९ तत् before श्रोतुम्. G. १० सुणोदु R; E. reads अज्जो for अमच्चो and G. मच्चो; ताव for दाव G. which om. अमच्चेण further on.

जह[1]—'करभअ, कुसुमपुरं गच्छ । मह वअणेण भण वआलिअ थणकलसं[2] जह चाणक्कहदएण तेसु तेसु अण्णाभङ्गेसु अणुचिट्ठीअमाणेसु चन्दउत्तो उत्ते[3]अणसमत्थेहि सिलोएहि उवसिलोअइदेव्वो[4]' त्ति । (ख)

**राक्षसः**—भद्र[5], ततस्ततः ।

**करभकः**—तदो[6] मए पाडलिउत्तं गदुअ सुणाविदो अमच्चसंदेसं वेआलिओ थणकलसो । एत्थन्तरे णन्दउलविणासदूणस्स

---

कुसुमपुरं गच्छ मम वचनेन भण वैतालिकं स्तनकलशं यथा चाणक्यहतकेन तेषु तेषु आज्ञाभङ्गेषु अनुष्ठीयमानेषु चन्द्रगुप्तः उत्तेजनसमर्थैः श्लोकैरुपश्लोकयितव्यः' इति ।

(क) ततो मया पाटलिपुत्रं गत्वा श्रावितः अमात्यसंदेशं वैतालिकः स्तनकलशः । अत्रान्तरे नन्दकुलविनाशदूनस्य पौरजनस्य परितोषं

---

१ जहा G.; जधां B. N.; यद्वाह E.; B. N. G. have करभअ twice. For गच्छ मह B. reads गच्छिअभणिदव्वो मम &c.; N. agrees reading मह; G. E. reading भणि° after वअणेण further on. For भण B. N. read तुए वैतालिओ.; G. वेआलिओ; E. आवलिअ. २ त्थणकलसो. B. E.; थणअलसो. G. N; B. G. N. read जधा for जह following; °हदगेअणुविहयमाणेसु for °हदएण omitting अणुचिट्ठी° coming further on E; चाणक्य. B. N; A. M. read तेषु तेषु; आण्णा for अण्णा B. E. N; and M. has °भङ्गेषु; B. has an anusvara at the end of all the locatives and instrumentals here; B. and N. read समुत्तेअण further on. ३ °जन for °अण P. ४ उवसिलोगइ° E.; उवसिलोअइअव्वो° G.; N. reads हिलोएहि° for सिलो° before this; and P. सिलोहएहि; ५ om. B. N; R. om. one ततः. ६ अदो E.; मये for मए G. and पाढलि.° B. N.; पाटलि° A. P; °पुत्तम् A.; °पुत्रम् P; गच्छिअ for गदुअ B. G. N.; गच्छिव E; सुणाविओ. G; अमच्चस्स for अमच्च B. N. E; संदेसो B. N; वैतालिओ. B; E. om. the word; त्थणक° B. E.; त्थणअ° N. G. After this B. N. have a speech. रा°. ततस्ततः Karabhaka then goes on with एत्थ° &c. ७ कुल B. N. E; for दूणस्स A. reads दुम्मिअस्स., P. म्मिअस्स., G. दूमिअस्स., E. हसिअस्स., B. N. दुम्मणस्स.

पो[1]रंजणस्स परितोसं समुप्पादअन्तेण रण्णा आघोसिदो कौमुदी-म[2]होसवो। सो अ चिरकालपरिवट्टमाणो जणिदपरिचओ अभिम-दवधूजणसमागमो विअ ससिणेहं [3]माणिदो णअरजणेण। (क)

**राक्षसः**—( सबाष्पम्। ) हा देव नन्द,

> कौमुदी कुमुदानन्दे जगदानन्दहेतुना।
> कीदृशी सति चन्द्रेऽपि नृपचन्द्र [4]त्वया विना ॥ ९ ॥

**करभकः**—[5]तदो सो लोअलोअणाणन्दभूदो अणिच्छन्तस्स

---

समुत्पादयता राज्ञाघोषितः कौमुदीमहोत्सवः। स च चिरकालपरिवर्त्तमानो जनितपरिचयोऽभिमतवधूजनसमागम इव सस्नेहं मानितो नगरजनेन।

(क) ततः स लोकलोचनानन्दभूतोऽनिच्छत एव तस्य निवारितश्चाण-

---

चिरकालेति। चिरकालाद्वहो: कालात्परिवर्तमानः परितो वर्तमानो जायमानः जनितपरिचयः परिचितपूर्व इत्यर्थः।

कौमुदीमहोत्सवः कुमुदानन्दे कुमुदानां कुवलयानां आनन्दजनके चन्द्रे कोः पृथिव्या मुदमानन्दयति समर्धयति कुमुदानन्दे चन्द्रगुप्ते स-त्यपि ताभ्यामप्यतिशयितेन सकलजगदानन्दहेतुना त्वया विना कीदृशी व्यर्थेत्यर्थः। व्यतिरेकालंकारः ॥ ९ ॥

अनिच्छत इति। अनिच्छन्तमनादृत्येत्यर्थः। 'षष्ठी चानादरे' इति षष्ठी।

---

१ पौर A. P. E; परिओसम् B. N.; परिदो° G.; परिदोअंसम् E. For द G. reads अ., E. य; B. and N. om. it. For रण्णा G. E. read चन्दउत्तहदगेण; B. N. चन्दउत्तेण; आघोसिओ for आघोसिदो A. P. E; B. N. add कुसुमउरे, E. कुपुरे after this. R. reads कोमु° for कौमु°. २ महूस° A.; महूस्स E.; महोत्स° P.; महोस्स B. N. For सोअ P. has सो, B. N. सोवि, G. अ; आल for काल B. N. For परिवट्ट° B. E. N. read पवत्त.° For °माणो B. N. G. E. read °माण°; परिओसो for परिचओ B. E. N. G.; परिचिज R. For अभि following B. N. read अहि.° For वधू B. E. N. G. read बन्धु, M. R. वहू. For समागमो M. R. read समाअमो. ३ बहु before this. B. E. N. G.; माणिओणाअर° A. P.; माणिदोणायर° G. E. ४ After विना E; B. G. N. have भद्र ततस्ततः after this stanza. ५ B. E. N. have अमच्च before this; P. G. om. लोअ. For °णाणन्द° B. G. N. read °णानन्द°; E. has रायलोयलोयणाणन्द. For भूदो N. (s) has भूओः A. P. read भूतो. In the next word A. P. read अनिच्छ°.

एँव[1] तस्स णिवारिदो चाणक्कहदएण । एत्थन्तरे थणकलसेण चन्द-उत्तसमुत्तेजिआ[2] सिलोअपरिपाटी पवट्टिदा । (क)

राक्षसः[3]—कीदृशी सा ।

(पुरुषः 'सत्त्वोद्रेकस्य' इत्यादि पूर्वोक्तं पठति ।)

राक्षसः—(सहर्षम्[4]) साधु स्तनकलश, साधु । काले भेद-बीजमुप्तमवश्यं[5] फलमुपदर्शयति । कुतः ।

सद्यः क्रीडारसच्छेदं प्राकृतोऽपि न मर्षयेत् ।
किं नु[6] लोकाधिकं तेजो बिभ्राणः पृथिवीपतिः ॥ १० ॥

मलयकेतुः—एँवमेतत्[7] ।

राक्षसः—ततस्ततः[8] ।

---

क्यहतकेन । अत्रान्तरे स्तनकलशेन चन्द्रगुप्तसमुत्तेजिका श्लोकपरिपाटी प्रवर्तिता ।

---

१. एव्व R.; जेव्व. G.; य्येव E.; जेव B. N. For तस्स B. N. read तधा णाअरजणस्य., G. णअरजणस्य, E. नषरजणस्स; R. तह; °हदकेण B. N.; हदगेण E; B. N. add कौमुदीमहोस्सवो after this. २ °उत्तस्स R. M. B. N; B. E. N. G. read पउत्ता before this and om. पवट्टिदा at the end of the speech. For next word M. R. read समुत्तेइआ, E. समुत्तेयणसमछा यिलोयणसमछा शिलोय परिवाडी.; B. N. G. °त्तेअणसमत्था सिलोअपरिबाटी (पाडी. G.); °पाडी R.; °वाजा (?) M. ३ This and next speech om. in B. E. N. G; M. R. read in next speech सत्त्वोद्रेकमित्यादि. ४ Om. G; B. E. N. G. add सखे after साधु. ५ B. N. add एव after this; P. om. उप्तम् before it; R. M. om. उप in उपदर्शं°; B. N. read उपदर्शयिष्यति and यतः for कुतः. ६ किम् E.; किं तु P. R. G. N.; किमु B. ७ B. N. add सद्यः क्रीडेत्यादि पुनः पठति; G. adds सद्यः क्रीडारसेत्यादि; E. सद्यःक्रीडारसच्छेदमिति पठति. ८ G. E. add भद्र before this and R. om. one ततः.

**करभकः**—तदो चन्दउत्तेण [1]अण्णाभङ्ककलुसिदेण पसङ्गसू-चिदं [2]अमच्चगुणं पसंसिअ अपब्भंसिदो अहिआरादो चाणक्कह-दओ । (क)

**मलयकेतुः**—सखे भागुरायण, [3]गुणप्रशंसया दर्शितश्चन्द्रगुप्तेन राक्षसे भक्तिपक्षपातः ।

**भागुरायणः**—[5]न तथा गुणप्रशंसया यथा चाणक्यबटोर्निरा-करणेन ।

**राक्षसः**—किमयमेवैकः कौमुदीमहोत्सवप्रतिषेधश्चन्द्रगुप्तस्य चा-णक्यं प्रति कोपकारणमुतान्यदप्यस्ति ।

**मलयकेतुः**—[6]सखे, चन्द्रगुप्तस्यापरकोपकारणान्वेषणेन किं फ-लमेष पश्यति ।

**भागुरायणः**—[8]कुमार, मतिमांश्चाणक्यो न निष्प्रयोजनमेव चन्द्रगुप्तं कोपयिष्यति, न च [10]कृतवेदी चन्द्रगुप्त एतावता गौरवमुल्ल-

(क) ततश्चन्द्रगुप्तेनाज्ञाभङ्गकलुषितेन प्रसङ्गसूचितममात्यगुणं प्रशस्या-पभ्रंशितोऽधिकाराच्चाणक्यहतकः ।

---

न तथेति । गुणवन्तमेनं संग्रहीतुमेव चाणक्यबटुरनेन निराकृत इत्यर्थः ।

---

१ आण्णा B. E. N. G. For कलु° G. reads कलुसहिअएण, E. कलुदहियएण, B. N. कलुसिदहिअएण, A. °कलुषिदेण; °सूइदम् M. R. for सूचिदम्; B. E. N. G. read सुइदम्. २ For अ-णम् M. R. G. E. read अमच्चस्स गुणम्; P. has उणम् for गुणम्; प्पसंसिअ for पसंसिअ B. E. N.; संसिअ G. For अ-दो which follows G. has ब्भंसिओ., E. ब्भंसिदो, B. N. प्पम्बसिओ, R. अवब्भंसिदो; अधिआ° for अहिआ° G. ३ शंसा P. ४ R. G. P. om. भक्ति. ५ कुमार before this B. N; E. after °शंसया has दर्शितः &c. as in previous speech. ६ भद्र before this. B. E. N; P. om. एव further on. ७ G. om. अपि. ८ भागुरायण after this. B. E. N; G. E. om. °स्यापर; °न्वेषणे for °न्वेषणेन B. E. N. ९ Om. R. M; B. N. read एतत्फलं पश्यति अतिमति°; E. एतत्फलमेष पश्यति मति°; B. E. N. om. न and add किमिति after नि-व; For नि-व. E. reads स्वल्पप्रयोजने. १० कृत्यवे.° R.; कृवे° E. ११ E. has चाणक्य before गौरव and A. P. R. read उल्लङ्घयिष्यति, E. उल्लङ्घयति.

ङ्कयिष्यति । सर्वथा चाणक्यचन्द्रगुप्तयोः पुष्कलात्कारणाद्यो वि-श्लेषः[1] उत्पद्येत स आत्यन्तिको भविष्यतीति ।

करभकः—अत्थि[2] अण्णं वि चन्दउत्तस्स कोवकारणम् । उवेक्खिदो णेण[3] अवक्कमन्तो मलअकेदू अमच्चरक्खसो त्ति । (क)

राक्षसः—शकटदास[4], हस्ततलगतो मे चन्द्रगुप्तो भविष्यति । इदानीं[5] चन्दनदासस्य बन्धनान्मोक्षस्तव च पुत्रदारैः[6] सह समागमः ।

मलयकेतुः—सखे भागुरायण[7], हस्ततलगत इति व्याहरतः कोऽस्याभिप्रायः[8] ।

---

(क) अस्त्यन्यदपि चन्द्रगुप्तस्य कोपकारणम् । उपेक्षितोऽनेनापक्रामन्मलयकेतुः अमात्यराक्षस इति ।

---

आत्यन्तिक इति । दृढः अप्रतीकार्य इति यावत् ।

---

१ Om. A. P; B. E. N. G. read उत्पद्यते for °द्येत. A. P. om. इति; G. has भवति; E. भवतीति. २ अमच्च before this B. E. N. G. For अण्णं वि G. has अण्णाइं वि, B. E. N. अण्णइं पि, E. अन्नाइ omitting च also in चन्द°; चाणक्क before कोव° E.; कोप° A. P.; कालणम् R.; कारणाइम्. B. E. N. G; B. N. add चाणक्के. After which B. N. add राक्ष°. किं किम् । कर° जधा पढमं दाव उवेक्खिदो &c., P. reads उपेक्खि° and G. उवेक्षि°. ३ B. N. read अणेण; G. E. om. म and A. P. read न्दो for न्तो in next word; कुमारो before मलअ° B. E. N; B. N. read मलयकेतू; G. E. read मलयकेदू. For त्ति at the end of the speech B N. read अ.; R. E. अत्ति. ४ B. N. have सहर्षम् । सखे before this, G. E. सहर्षम् only; B. E. N. have हन्त after this; संप्रति for मे B. N; E. has it before मे. ५ B. N. have शकट° before this; G. om. बन्धनात् and B. N. read भवताम् for तव. ६ For दा-ह E. reads कलत्रेण. After समागमः B. N. add जीवसिद्धिप्रभृतीनां क्लेशच्छेदः ॥ भागु । आत्मगतम् । जातः सत्यं जीवसिद्धेः क्लेशच्छेदः. ७ Om. G. A. P; B. N. add मे संप्रति चन्द्रगुप्तो भविष्यति after हस्ततलगतः; G. adds मे चन्द्रगुप्तः only. E. adds संप्रति only and then om. all from इति to अपकृष्टस्य in the next speech. ८ B. N. add अयम् after कः.

भागुरायणः—[1]किमन्यत् । चाणक्यादपकृष्टस्य चन्द्रगुप्तस्यो-द्धरणान्न किंचित्कार्यमवश्यं पश्यति ।

राक्षसः—भद्र, [2]हृताधिकारः क सांप्रतमसौ बटुः ।

करभकः—तहिं [3]एव्व पाडलिउत्ते अहिवसदि । (क)

राक्षसः—(सावेगम्[4] ।) भद्र, तत्रैव प्रतिवसति । तपोवनं न गतः प्रतिज्ञां वा [5]पुनर्न समारूढवान् ।

करभकः—[6]अमच्च, तपोवणं गच्छदित्ति सुणीअदि । (ख)

राक्षसः—[7]शकटदास, नेदमुपपद्यते । पश्य ।

---

(क) तस्मिन्नेव पाटलिपुत्रे अधिवसति ।

(ख) अमात्य, तपोवनं गच्छतीति श्रूयते ।

---

चाणक्यादिति । सचिवायत्तसिद्धिः सचिववियोगे हस्ततलगतः सुखेन जेयो भविष्यतीति राक्षसस्य निष्कपटोऽभिप्रायो भागुरायणेनान्यथा बोध्यते । चन्द्रगुप्तस्योद्धरणादुन्मूलनान्न किंचित्कार्यमवश्यं पश्यति नास्यात्यन्तिकाभीष्टसिद्धिः । हस्ततलकरणाद्वशीकरणात्तु स्वस्य साचिव्यप्राप्त्या चन्दनदासादीनामापन्निवृत्तिरात्यन्तिकी स्वार्थसिद्धिरित्यस्याभिप्राय इत्यर्थः ।

सावेगमिति । तत्रैवावस्थाने मौर्योन्मूलनप्रतिज्ञाया अकरणे वा कदाचित्पुनः संदधीतेत्यावेगः ।

---

१ G. has कुमार before this. G. reads °गुप्तस्योद्धरणादसौ किंचित्; B. N. read °गुप्तस्योद्धरणेऽसौ कार्यमवश्यमवगच्छति; E. °गुप्तस्योद्धरणे ननु सौकर्यमवपश्यति. २ E. has अथ before this. G. has क before this. B. N. have it after सांप्रतम्; G. R. M. om. असौ. ३ जेव्व B. N.; जेव्व G.; य्येव E.; एव P. For पाडलि° A. P. G. read पाटलि and for उत्ते B.N. read पुत्ते. For अहिवसदि B. N. read पडिव°, E. परिवसति, G. अहिवसति. ४ Om. M. R; after भद्र E. reads किम्; न before तपो° B. E. N. ५ P. om. पुनः A. om. it and न (but has a mark to show something to be inserted) न before पुनः in B. E.N. ६ अज्ज G. For तपो° R. G. have तवो,° E. तओ°; B. N. read गमिस्सदि° for गच्छदि; M. गच्छई°. ७ सावेगम् before this B. N; G. om इदम् in नेदम्; A. P. have एतत् for it.

देवस्य येन पृथिवीतलवासवस्य
स्वाग्रासनापनयनान्निकृतिर्न सोढा[1] ।
सोऽयं स्वयंकृतनराधिपतेर्मनस्वी
मौर्यात्कथं नु परिभूतिमिमां सहेत ॥ ११ ॥

**मलयकेतुः**—सखे, चाणक्यस्य[2] वनगमने पुनः प्रतिज्ञारोहणे वा कास्य स्वार्थसिद्धिः ।

**भागुरायणः**—नात्यन्तदुर्बोधोऽयमर्थः[3] । यावद्यावच्चाणक्यहतकश्चन्द्रगुप्ताद्दूरीभवति[4] तावत्तावदस्य स्वार्थसिद्धिः ।

**शकटदासः**—अलमन्यथा[5] विकल्प्य । उपपद्यत एवैतत् । पश्यत्वमात्यः ।

राज्ञां चूडामणीन्दुद्युतिखचितशिखे मूर्ध्नि विन्यस्तपादः
स्वैरेवोत्पाद्यमानं किमिति विषहते मौर्य आज्ञाविघातम् ।

---

मनस्वी मानशीलः ॥ ११ ॥

स्वार्थसिद्धिरिति । स्वस्य साचिव्यपदलाभ इत्यर्थः ।

स्वैरेव स्वकीयैः सेवकैरित्यर्थः । स्वयमभिचरणेन 'चाणक्यनाम्ना तेनाथ शकटालगृहे रहः । कृत्यां विधाय सप्ताहात्सपुत्रो निहतो नृपः ॥' इति पूर्वोक्तेनाभिचारकर्मणा ज्ञातदुःखप्रतिज्ञः । ज्ञातं अनुभूतं दुःखं

---

१ साग्रा° B. E. N. G.; °पनयजानिकृ° B. N. E. G.; पनयना नि°. P. २ B. E. N. have भागुरायण before this; P. om. स्य in this and B. E. N. add तपो before वन; °रोपणे for °रोहणे R; after वा E. has simply कार्यसिद्धिः. ३ कुमार before this B. N; B. G. N. read अयम् after न instead of before अर्थः; G. E. om. one यावत्. B. N. have निरपेक्षः after यावत्. E. has it after चाणक्यः (om. हतक.) ४ °भविष्यति R; G. E. om. one तावत् and M. reads कार्य for स्वार्थ. ५ B. E. N. G. have अमात्य before this. For अन्यकल्प्य B. N. read अत्यन्तविकल्पितेन; E. has अन्यथा विकल्पितेन; P. G. अन्यथा विकल्पेन.; R. G. E. om. एव; B. N. have एतत् before उपप° and कुतः before पश्यत्वमात्य.

कौटिल्यः कोपनो[1]ऽपि स्वयमभिचरणज्ञातदुःखप्रतिज्ञो
दैवा[2]त्तीर्णप्रतिज्ञः पुनरपि न करोत्यायतिग्लानिभीतः ॥१२॥

**राक्षसः**—[3]शकटदास, एवमेतत् । गच्छ विश्रामय करभकम् ।

**शकटदासः**—तथा । ( इति पु[4]रुषेण सह निष्क्रान्तः ।)

**राक्षसः**—अहमपि कुमारं द्रष्टुमिच्छामि ।

**मलयकेतुः**—अहमेवा[5]र्यं द्रष्टुमागतः ।

**राक्षसः**—( नाट्येनावलोक्य ।) अये कु[6]मारः । ( आसनादुत्थाय ।) इदमासनम् । उपवेष्टुमर्हति कुमारः ।

**मलयकेतुः**—[7]अयमुपविशामि । उपविशत्वार्यः । ( यथार्हमुपविष्टः ।) [8]आर्य, अपि सह्या शिरोवेदना ।

**राक्षसः**—कु[9]मार, कुमारस्याधिराजशब्देनातिरस्कृते कुमारशब्दे कुतो मे[10] शिरोवेदनायाः सह्यता ।

**मलयकेतुः**—उरी[11]कृतमेतदार्येण न दुष्प्रापं भविष्यति । तत्कि-

---

क्लेशो यस्यां तादृशी प्रतिज्ञा यस्येति बहुव्रीहिगर्भो बहुव्रीहिः । आयतिग्लानिभीतः प्रतिज्ञातार्थनिर्वहणक्लेशासहिष्णुः प्रतिज्ञाक्लेशं बहुधानुभूय पुनः प्रतिज्ञां कर्तुं बिभीयादित्यर्थः ॥ १२ ॥

---

१ कोपितोपि. G; B. has स्वयमतिचरणे ज्ञातदुःखः प्रतिज्ञाम्; E. स्वयमभिचरणे दृष्टदोषः प्रतिज्ञाम्; N. G. agree with text, N. reading °चरणा° for °चरण° and G. °चरणाज्जात for चरणज्ञात. २ B. E. N. G. read पूर्ण for तीर्ण; ज्यानि for ग्लानि B. N. ३ सखे before this B. N; B. E. N. have तत् before गच्छ. ४ यदाज्ञापयत्यमात्य इति करभकेण B. E. N; G. agrees reading पुरुषेण for °करभकेण°. ५ R. M. om. एव; A. G. P. read अपि for it; G. om. द्र-तः. ६ B. N. (r) add एवागतः, E. आगतः. ७ अहमु° B. N; E. adds स्वयम् before उपवि°; B. N. read इति यथासनमुपविष्टौ for यथार्ह°; E. G. agree omitting इति. ८ Om. M. ९ Om. B. E. N. (r); स्याद्यराज for °स्याधिराज° G; E. adds अद्यापि before अतिरस्कृते. १० B. E. N. (r) read कुतः for कुतो मे; A. P. read कुतो. ११ दूरीकृत°. G. N. (s) P. E. °उररीकृत°. B. स्वयमुरीकृत M. ऊरीकृत; G. om. एतत्°.

यन्तं कालमस्माभिरेवं संभृतबलैरपि शत्रुव्यसनमुदीक्षमाणै[1]रुदासितव्यम् ।

राक्षसः—कुतो[2]ऽद्यापि कालहरणस्यावकाशः । प्रतिष्ठस्व विजयाय[3] ।

मलयकेतुः—आर्य[4], शत्रुव्यसनमुपलब्धम् ।

राक्षसः—उप[5]लब्धम् ।

मलय[6]केतुः—कीदृशं तत् ।

राक्षसः—सचिवव्यसनं किम[7]न्यत् । अपकृष्टश्चाणक्याच्चन्द्रगुप्तः ।

मलयकेतुः—[8]आर्य, सचिवव्यसनमेव ।

राक्षसः—[9]अन्येषां भूपतीनां कदाचिदमात्यव्यसनमव्यसनं स्या[10]त् । न पुनश्चन्द्रगुप्तस्य ।

[11]मलयकेतुः—आर्य, नैतदेवं चन्द्रगुप्तप्रकृतीनां चाणक्यदोषा

---

न पुनश्चन्द्रगुप्तस्येति । एवं राक्षसेन समाहितोऽप्यमात्यराक्षसः 'चाणक्ये बद्धवैरो न चन्द्रगुप्ते' इत्यादिपूर्वोक्तेन बहुविधेन भागुरायणोपजापेन कलुषिताशयो मलयकेतुः पुनः शङ्कते—चन्द्रगुप्तप्रकृतीनामिति । राक्षसमेव मनसि विषयीकृत्य चन्द्रगुप्तप्रकृतीनामित्यादि ताटस्थ्येन वचनम् ।

---

१ मवेक्षमा°. B.; मवेक्षमाणैमुदा°. E. २ कुमार before this B. E. N. P. ३ रिपुजयाय. B. ४ अमात्य B. For शत्रुव्य° B. N. read अपि किंचिच्छत्रोर्व्य°; G. E. agree omitting किंचित्; P. reads सचिवव्यसनमव्यसनमेव. ५ E. has बाढम्; B. N. गाढम् before उप°; R. P. om. speech. ६ रा° P.; B. E. N. G. om. तत्. ७ व्यसनम् after this B. N; P. om. this speech. ८ P. om. this speech; R. M. om. आर्य. B. reads अमात्य for आर्य. ९ कुमार before this B. E. N; for भूप° G. reads भूमिपतीनाम्, E. भूमिपालानाम्. १० B. N. add अपि before स्यात्, E. reads तु for पुनः. ११ Before this B. N. have मल° । आर्य ननु विशेषतश्चन्द्रगुप्तस्येति ॥ राक्ष° । किं कारणं यदस्यामात्यव्यसनमव्यसनम्; G. मल° । आर्य नैतदेवम् । राक्ष° । किं कारणमिति; E. मल° same as B. N. omitting इति; then राक्ष° । अथाव्यसने किं कारणमिति; B. N. E. om. आ-वम्; G. has इदं कारणम् instead; M. adds कुतः after आ-वम्; हि before चाणक्य B. E. N.

एवापरागहेतवस्तस्मिंश्च[1] निराकृते प्रथममपि चन्द्रगुप्तेऽनुरक्ताः संप्रति सुतरामेव तत्रानुरागं दर्शयिष्यन्ति।

राक्षसः—मा[2] मैवम्। ताः खलु द्विप्रकाराः प्रकृतयश्चन्द्रगुप्तसहोत्थायिन्यो नन्दानुरक्ताश्च[3]। तत्र चन्द्रगुप्तसहोत्थायिनीनां चाणक्यदोषा[4] एव विरागहेतवो न नन्दकुलानुगतानाम्। तास्तु खलु नन्दकुलमनेन पितृभूतं[5] घातितमित्यपरागामर्षाभ्यां विप्रकृताः सत्यः स्वाश्रयमलभमानाश्चन्द्रगुप्तमेवानुवर्त्तन्ते[6]। त्वादृशं पुनः प्रतिपक्षोद्धरणे संभाव्यशक्तिमभियोक्तारमासाद्य[7] क्षिप्रमेनं परित्यज्य त्वामेवाश्रयिष्यन्त इत्यत्र निर्दर्शनं वयमेव[8]।

मलयकेतुः—आर्य, किमेतदेकमेव[9] सचिवव्यसनमभियोगकारणं चन्द्रगुप्तस्याहोस्विदन्यदप्यस्ति[10]।

राक्षसः—किमन्यैर्बहुभिरपि[11]। एतद्धि प्रधानतमम्।

---

१ For एवापराग; P. has एवापकार; B. N. om. च; °गुप्तमनु G. E.; गुप्तानु° B. N. For संप्रति. B. N. read प्रकृतय इदानीं पुनः. २ For मा-लु B. N. read कुमार नैतदेवम्। इह·; G. कुमार नैतदेवं ताः खलु; E. do. with मा for न. ३ नन्दकुलानुर° B. E. N. G. ४ प्रकृतीनाम् before this B. E. N; E. om. एव after this; M. R. om. कुल; B. E. N. read °कुलानुरक्तानाम् for कुलानुगतानाम्. ५ पितृकुलभूतं कृत्स्नं कृतघ्नेन घा°B. N.; G. do. omitting कुल; E. do om. कृत्स्नम्; °रागानर्थाभ्याम् for रागामर्षाभ्याम् M. R. ६ आश्रय° G.; स्वाश्रय E. E. has तु before पुनः and वि° for प्रति° after it. ७ संभावितश° B. N. G. For एनम् before परि° E. has एव तम्; R. G. M. om. त्वामेव following this; B. N. G. R. M. read आश्रयन्ते; E. has आश्रयन्त्यत्र कुमारस्य; P. has अस्य कुमारस्य for अत्र; B. has अत्र कुमारस्य. ८ After वयमेव. B.N. ९ अमात्य B.; एव before एकम् B. E. N. G. १० आहोस्यदपि किंचित् P. ११ कुमार before this B. E. N. G; R. om. अपि before एतद्धि and B. E. N. add तत्र after °द्धि. For the whole speech P. reads सचिवव्यसनमेव प्रधानतमं व्यसनम्.

**मलयकेतुः**—आर्य, [1]कथमिव प्रधानतमम् । किमिदानीं चन्द्र-गुप्तः [2]स्वकार्यधुरामन्यत्र मन्त्रिण्यात्मनि वा समासज्य स्वयं प्रतिवि-धातुम[3]समर्थः ।

**राक्षसः**—बाढमसमर्थः । कुतः[4] स्वायत्तसिद्धिषु तत्संभवति । चन्द्रगुप्तस्तु दुरात्मा नित्यं सचिवायत्तसिद्धावेव[5] स्थितश्चक्षुर्विकल इवाप्रत्यक्षलोक[6]व्यवहारः कथमिव स्वयं प्रतिविधातुं समर्थः स्यात् ।

अत्युच्छ्रिते मन्त्रिणि पार्थिवे च[7] विष्टभ्य पादावुपतिष्ठते श्रीः ।
सा [8]स्त्रीस्वभावादसहा भरस्य तयोर्द्वयोरेकतरं जहाति ॥ १३ ॥

---

प्रतिविधातुमिति । प्रतिविधातुमस्मदभियोगं प्रतिकर्तुमित्यर्थः ।

तत्संभवतीति । संभवतीत्यनेन सामर्थ्यस्य कादाचित्कत्वमुक्तम् । उभ-यायत्तसिद्धेरेवोत्तरश्लोके प्राशस्त्यकथनात् ।

यत्पृष्टं स्वकार्यधुरामन्यत्र मन्त्रिणीति तत्परिहरति—अत्युच्छ्रित इति । श्रीः राज्यश्रीः अत्युच्छ्रितयोः समस्कन्धतयात्युन्नतिं प्राप्तयोः । ऐकमत्येनान्यूनाधिकभावेन वैकीभावमिवोपगतयोरिति यावत् । मन्त्रि-पार्थिवयोः पादौ मन्त्रशक्तिप्रभुशक्तिरूपौ विष्टभ्य समवस्थाप्योप-

---

१ अमात्य for आर्य before this. B. E. N; R. M. om. प्रधा°. For °इव—मं B. E. N. G. read प्रधानतमं नाम. २ स्वराज्यकार्यं B. E. N.; स्वकार्यराज्य G; G E. read धुरमन्य°; समासाद्य G. ३ स्यात् after this B. N. ४ For कुतः B. reads एव; after this B. E. have मल । किं कारणम् and then राक्ष° । स्वा-यत्त &c. G. and N. read किं कारणमिति for कुतः. P. writes रा° before कुतः. B. N. read °षु उभयायत्तसिद्धिषु वा भूमिपालेषु कदाचिदेतत्; G. °षु उभया-यत्तसिद्धिषु भूपालेषु तत्; E. °षु उभयायत्तसिद्धिषु वा भूमिपालेषु तत्. After संभवति B. N. add न तु चन्द्रगुप्ते, G न चन्द्रगुप्ते. ५ B. N. read अवस्थितः for स्थितः, G. सिद्धावस्थितः, E. has °सिद्धौ व्यवस्थितचक्षुर्विकल &c. ६ सर्वलोक for लोक B. N.; संव्यव° for व्यव° G; for कथमिव after this G. has कथमपि; °विधान for विधातुम् G; B. E. N. G. add कुतः after स्यात्. ७ For च विष्टभ्य G. has वावष्टभ्य. ८ श्री G. This whole stanza om. in M. After it B. E. N. G. have अपि च.

नृपोपकृष्टः सचिवात्तदर्पणः स्तनंधयोऽत्यन्तशिशुः स्तनादिव।
अदृष्टलोकव्यवहारमन्द[1]धीर्मुहूर्त्त[2]मप्युत्सहते न वर्त्तितुम्॥ १४॥

मलयकेतुः—(आत्मगतम्।) दिष्ट्या न सचिवायत्ततन्त्रोऽस्मि। (प्रकाशम्।) यद्य[3]प्येवं तथापि बहुष्वभियोगकारणेषु सत्सु व्यसन-

तिष्ठते सुस्थिरा सती तयोः संगता भवतीत्यर्थः। 'उपाद्देवपूजासंगतिकरणमित्रकरणपथिषु' इति तङ्। यद्यपि प्रभुमन्त्रोत्साहरूपास्तिस्रः शक्तयस्तथाप्युत्साहशक्तेरुभयानुकूलत्वेन द्वयोरन्तर्भावाभिप्रायेणात्र सा पृथग्न गृहीता। तयोर्मन्त्रिपार्थिवयोर्द्वयोः सतोर्वैमत्येन न्यूनाधिकभावमुपेत्य द्वैधीभावेन स्थितयोः सा श्रीर्द्वयोः पादयोः सम्यगवष्टम्भासंभवाद्भरस्यासहा राज्यभारं वोढुमसमर्था सती स्त्रीस्वभावाद्दौर्बल्याच्चापल्याच्चैकतरं मन्त्रिणं वा पार्थिवं वा जहाति। कंचित्कालं प्रभुमात्रमाश्रित्य वर्तमानापि मन्त्रवैकल्येन स्वयमपि नश्यत्येवं मन्त्रिणमाश्रित्य वर्तमानापि प्रभुत्ववैकल्येन नश्यतीति भावः। यथा काचन नर्तकी उच्छ्रितौ समौ वंशस्तम्भौ पादाभ्यां दृढमवष्टभ्य सुस्थिरा तिष्ठति तयोर्वैषम्ये विसंष्ठुलपदतया देहभरं वोढुमसहा एकं हित्वान्यतरमवलम्बमाना तेन सह स्वयमपि पतति तद्वत्। अत्र प्रस्तुतेनाप्रस्तुतस्य स्फोरणात्समासोक्तिरलंकारः। एवमुच्छ्रितः संश्चन्द्रगुप्तोऽनुच्छ्रितेऽन्यस्मिन्मन्त्रिणि धुरामासज्यासमर्थः स्यादिति प्रतिपादितम्॥ १३॥

अथात्मन्यासज्येत्यस्य परिहारमाह—नृप इति। तदर्पणः तस्मिन्नेव सचिवे राज्यतन्त्रं सर्वमर्पयतीति तथाभूतः सचिवायत्तसिद्धिरित्यर्थः। अदृष्टलोकव्यवहारः अत एव मन्दधीरिति विशेषणसमासः। तस्मात्सचिवादपकृष्टः सन्राज्यधुरां वोढुमसमर्थो भवतीत्यर्थः॥ १४॥

दिष्ट्येति। त्वयि विरुद्धवृत्तावपि स्वतन्त्रस्य मे नानिष्टमिति भावः।

यद्येवमिति। व्यसनमभियुज्यमानस्य अनुसंदधानस्य व्यसनमन्विष्य

1 मूढ for मन्द B. E. N. (r). 2 स्वग° M. R. 3 यद्येवम्. M. P. R. E; B. N. have अमात्य and E. आर्य before this; B. E. N. G. have खलु after तथापि; P. reads °योगकरणेषु; G. adds अपि सचिव, B. E. N. सचिव between सत्सु and व्यसन; E. reads व्यसनिनमभि°.

मभियुञ्जानस्य शत्रुमभियोक्तुरैकान्तिकी कार्यसिद्धिर्भवति ।

राक्षसः—एकान्तिकीमेव कार्यसिद्धिमवगन्तुमर्हति कु-
कुतः ।

त्वय्युत्कृष्टबलेऽभियोक्तरि नृपे नन्दानुरक्ते पुरे
चाणक्ये चलिताधिकारविमुखे मौर्ये नवे राजनि ।

स्वाधीने मयि

(इत्यर्धोक्ते लज्जां नाटयन् ।)

मार्गमात्रकथनव्यापारयोगोद्यमे
त्वद्वाञ्छान्तरितानि संप्रति विभो तिष्ठन्ति साध्यानि नः ॥ १५ ॥

मलयकेतुः—यद्येवमभियोगकालमार्यः पश्यति ततः किमास्यते ।

उत्तुङ्गास्तुङ्गकूलं स्रुतमदसलिलाः प्रस्यन्दिसलिलं
श्यामाः श्यामोपकण्ठद्रुममतिमुखराः कल्लोलमुखरम् ।

---

शत्रुमभियोक्तुः अभिषेणयत इत्यर्थः । अन्येषु बहुषु कारणेषु सत्सु सचि-
वव्यसनमपि साधकं न केवलमिति भावः ।

अन्यान्यप्युत्कृष्टबलादीनि कारणानि सन्तीत्याह—त्वयीति । स्वप्रशं-
सायां लज्जाप्रशंसामेव निह्नुते । मार्गमात्रकथनव्यापार एव योगः उपायः
तत्र उद्यमो यत्नो यस्य सः । त्वद्वाञ्छेति । त्वदाज्ञां प्रतीक्षत इत्यर्थः ॥ १५ ॥

उत्तुङ्गा इति । अत्र उत्तुङ्गास्तुङ्गकूलमित्यादिसाधारणधर्मोपादानाद्गजप-
तीनां शोणसिन्धोश्चोपमा गम्या । शोणमिति श्लेषानुप्राणिता । अत्र स्रग्धरा
वृत्तस्य एकाक्षरमात्राद्द्वयस्य न्यूनतया प्रस्तारविशेषः ॥ १६ ॥

---

१ °योक्तं नै°. G.; योक्तुनैं B. E. N.; °योक्तुरे° P; B. N. (r) E. om. कार्य.
P. adds न after सिद्धिः. २ ऐ° B. N; B. E. N. G. om. कार्य before सिद्धि.
E. om. कुतः. ३ इत्यर्धोक्तेन E.; G. has नाटयति. ४ योग्यो°. R. G. E.
५ त्वद्वाक्यान्त° E.; सिद्ध्यन्ति for तिष्ठन्ति P. ६ अमात्य before this B. N.;
अयि E.; °ममात्यः for °मार्यः B. N. R.; तत् for ततः B. E. N; R. om. all
ततः-°स्यते; B. N. add पश्य after आस्यते. ७ प्रस्यन्द. P.; °न्दिसलिलाः E.
८ °ममविमु°. E.; °मलिमु° B. N.

स्रोतः[1]खातावसीदत्तटमुरुदशनैरुत्सादिततटाः
शोणं सिन्दूरशोणा मम गजपतयः पा[2]स्यन्ति शतशः ॥ १६ ॥

अपि च।

गम्भीरगर्जितरवाः स्व[3]मदाम्बुमिश्र-
मासारवर्षमिव शीक[4]रमुद्गिरन्त्यः।
विन्ध्यं विकीर्णसलिला इव मेघमाला
रुन्धन्तु[5] वारणघटा नगरं मदीयाः ॥ १७ ॥

(इति[6] भागुरायणेन सह निष्क्रान्तो मलयकेतुः।)

राक्षसः—कः कोऽत्र भोः।

(प्रविश्य)

पुरुषः—आणवेदु अमच्चो। (क)

राक्षसः—प्रि[8]यंवदक, सांवत्सरिकाणां[7] द्वारि कस्तिष्ठति।

पुरुषः—क्खवणओ। (ख)

---

(क) आज्ञापयतु अमात्यः।
(ख) क्षपणकः।

---

गम्भीरेति। नगरं पुष्पपुरं वारणमेघमालयोः पूर्णोपमा ॥ १७ ॥

---

१ श्रोता°. G.; वदनै° for दशनै° P.; रदनै° N. R.; दनै° A. २ °यो यास्यान्ति A. P.; पास्यन्तु M. R. ३ समदा° M. R. ४ सीकर B. N.; द्गिरन्तः A. M. P. R. ५ रोत्स्यन्ति B. E. N. (r) ६ E. om. this; M. R. have सह before भागु°; G. has सभागुरायणो. ७ सांवत्सराणाम् A.; °रीणाम् R; B. E. N. have ज्ञायताम् before this and G. E. have मध्ये after it. ८ प्रियंव°. B. E. N. After this B. N. have जं अमच्चो आणवेदित्ति निष्क्रम्य क्षपणकं दृष्ट्वा पुनः प्रविश्य च। अमच्च एसो क्खु संवत्सरिओ क्खपणओ; E. and G. agree; G. reading इत्ति for त्ति; both om. क्ष-ष्ट्वा; G. om. च; both reading च्च for त्स and G. reading ष and E. क्ष for क्ख in क्खवणओ.

राक्षसः—( आत्म[1]गतम् । अनिमित्तं सूचयित्वा ।) कथं प्रथममेव क्षपणकः[2] ।

पुरुषः—जीवसिद्धी[3] । (क)

राक्षसः—(प्रकाशम्[4] ।) अबीभत्सदर्शनं कृत्वा प्रवेशय ।

पुरुषः—तहँ[5] । ( इति निष्क्रान्तः ।) (ख)

( प्रविश्य[6] )

क्षपणकः—

सासणं[7]मलिहन्ताणं पडिवज्जह मोहवाहिवेज्जाणं ।
जे मुत्तमत्ति[8]कडुअं पच्छा पत्थं उवदिसन्ति ॥ १८ ॥ (ग)

---

(क) जीवसिद्धिः ।
(ख) तथा ।
(ग) शासनमर्हतां प्रतिपद्यध्वं मोहव्याधिवैद्यानाम् ।
ये मुहूर्तमात्रकटुकं पश्चात्पथ्यमुपदिशन्ति ॥ १८ ॥

---

जीवसिद्धीति । प्रथमं क्षपणकसामान्यबुद्ध्या दुर्निमित्तविचिकित्सा। पश्चाज्जीवसिद्धिं ज्ञात्वा प्रस्थानमुहूर्तप्रस्तावार्थं प्रवेशानुमतिः । किंचादौ क्षपणक इति दुरुपश्रुत्या राक्षसस्य प्रकृतनीतितन्त्रव्याकोपः सूचितः । पश्चाज्जीवसिद्धिरिति सूपश्रुत्या मलयकेतौ हन्तुमुद्युक्तेऽपि भागुरायणनयोपायेनास्य जीवनसिद्धिश्च सूचितेति द्रष्टव्यम् ।

सासण इति । केशोल्लुञ्चनतप्तशिलाधिरोहणादितीक्ष्णतपसा मोक्ष

---

१ Om A. P.; स्वग° B. N. २ °णकदर्शनम् B. N. ३ °सिद्धिः G. E. ४ Om. M. R. G. E; A. P. G. add भद्र after this.; कारयित्वा for कृत्वा. B. N.; घृत्वा. G. which has also वेषम् for दर्शनम्. ५ G. has तथेति.; B. E. N. read जं अमच्चो आणवेदि; E. has त्ति for इति. ६ ततः प्रविशति B. E. N. G. ७ सासह° N. (s); सासन°. G.; सासंमलहन्ता° E.; षासण° (?) A.; वडि° for पडि R.; परि° P.; °वजध G.; विज्जा for वेज्जा G.; विविज्जा° E.; विज्ञानम् N. ८ G. has चा after जे; M. reads मुहुत्तमेत्तकडुअम्; G. मुहुत्तकडुअम्.; R. N. मुहमेत्तकडुअम्; B. पढममेत्तकडुअम्.; E. पढममत्तकडुयम्; पच्चा for पच्छा P. R.; पस्या E; पच्छम्. R.; पच्छम्. G.; उपदिसन्ति A.; उवदिसन्दि. B. M. R.

(उपसृत्य।) धम्मसिद्धी होदु सावगाणम्।[1] (क)

राक्षसः—भदन्त[2], निरूप्यतां तावदस्मत्प्रस्थानदिवसः।

क्षपणकः—(नाट्येन[3] चिन्तयित्वा।) सावगा, णिरूविदा मए आमज्झण्णादो[4] णिवुत्तसव्वकल्लाणा तिही संपुण्णचन्दा पुण्णमासी।

(क) धर्मसिद्धिर्भवतु श्रावकानाम्।

(ख) श्रावक, निरूपिता मयामध्याह्नान्निवृत्तसर्वकल्याणा तिथिः संपूर्णच-

इत्यार्हतानां मतम्। अनेन गाथार्थेन संप्रति स्वेन वक्ष्यमाणं वचनमापाततो रूक्षमपि परिणामे राक्षसस्य पथ्यमिति सूचितम्।

श्रावक इति। शुश्रूषुपर्यायशब्दस्तन्मतव्यवहारसिद्धः।

भदन्तेति ज्यौतिषिकनाम तैरेव व्यवहृतम्। अयमत्राभिप्रायः—आश्वयुज्यां पौर्णमास्यां कौमुदीमहोत्सवप्रतिषेधेन व्यायामकालस्योक्तत्वात्तदारभ्य मासद्वयमात्रेणोभाभ्यां चाणक्यराक्षसाभ्यामुपजापादिना भेदतन्त्रं प्रसाधितम्। अथ मार्गशीर्ष्यां कुसुमपुरोपरोधाय प्रस्थातुकामेन राक्षसेन प्रस्थानदिवसे पृष्टे जीवसिद्धिस्तस्मै मुहूर्तं कथयति। अद्य पौर्णमासी पञ्चचत्वारिंशन्नाडिकेति मध्याह्नपर्यन्तं भद्राभिधं विष्टिकरणं निवृत्तसमस्तकल्याणं प्रयाणे निषिद्धम्। किंचाद्य पूर्वदिशि वर्तमानं मृगशिरोनक्षत्रं दक्षिणादिशं प्रस्थितानामदक्षिणं वामं प्रतिकूलं च। अथापि

1 Om. R; धर्मं° G. E. For सिद्धा. G. E. read विद्धी, P. सिद्धीओ, B. N. लाहो. For होदु B. E. N. G. read भोदु; for सा-म्. M. has सावआणम्, E. साधकैकस्स., B. N. सावका and this before भोदु. 2 भद्र M; after निरू° R. For अस्मत् B. E. N. read अस्माकम्. G. has प्रतिष्ठान for प्रस्थान and B. N. add योग्य before दिवसः. 3 E. has अवलोक्य between ना° and चि°; सावग for सावगा A., सावआ M., सावका B., उवासका G. N., साधका E. For next word B. E. G. read णिरूविदे. For मए E. has लग्गे अज्ज., G. अज्ज., B. मुहुत्ते, N. om. it. 4 E. om. आ. N. reads आमभद्दो (?); B. णिव्वुत्तसत्तसकलासोहणा तिही &c.; N. णिवुत्तसंपुण्णकल्लाणपुण्णमासी &c.; G. णिवुत्तसत्तमकलणासोहणातिधी &c.; E. निवुत्तसत्तमकलनासोभनातिही &c.; M. R. णिवुत्तसमत्थकल्लाणाधिही (R. णिउत्त).

तुम्हाणं[1] उत्तलाए दिसाए दक्खिणां दिसं पत्थिदाणं अदक्खिणे णक्खत्ते । अवि अ[2] । (ख)

अत्थाहिमुहे[3] सूरे उदिए संपुण्णमण्डले चन्दे ।
गमणं[4] बुधस्स लग्गे उदिदत्थमिदे अ केदुम्मि ॥ १९ ॥ (क)

---

न्द्रा पौर्णमासी युष्माकमुत्तरस्या दिशो दक्षिणां दिशं प्रस्थितानां अदक्षिण-नक्षत्रम् । अपि च ।

(क) अस्ताभिमुखे सूर्ये उदिते संपूर्णमण्डले चन्द्रे ।
गमनं बुधस्य लग्ने उदितास्तमिते च केतौ ॥ १९ ॥

---

त्वरया गन्तव्यमिति चेत्सायं सूर्येऽस्तमिते चन्द्रोदयसमये लग्नं मिथुनं बुधस्तस्याधिपतिः राहुः केतुर्वा तदा उदितास्तमितो भविष्यति । तस्मिन्बुधस्य लग्ने गमनं कर्तव्यमिति शेषः । राहुकेत्वोः सर्पाकारमेकं शरीरं तत्र शिरो राहुः पुच्छं केतुः शिरस्युदिते पुच्छमस्तमितं भवति । पुच्छ उदिते शिरोस्तमितमिति ज्योतिःशास्त्रसिद्धम् । उभयोरेकशरीरत्वाद्राहुरिति केतुरिति व्यपदेशः । अत उक्तमुदितास्तमिते केताविति । एवं च मिथुनं द्विस्वभावं धनुषि सप्तमकेन्द्रे स्थितेन क्रूरेणास्तमितेन सूर्येण दृष्टं केतुना पापग्रहेण च युक्तं प्रयाणेऽनिष्टम् । तथा चोक्तम्— 'द्विमूर्तिराशावुदयं प्रपन्ने क्रूरग्रहैर्युक्तनिरीक्षते च । प्रयाति यद्यप्यबुधस्तदाना निवर्तते शत्रुजनाभिभूतः ॥' इति । एवं संदिग्धे मुहूर्ते उक्ते । लग्ने इति । द्विःस्वभावात्प्रयाणे निषिद्धं मिथुनं यद्यपि दुर्लग्नं तथापि बुधेन सौम्यग्रहेणाधिष्ठितं सत्सुलग्नं भवति तदा चन्द्रबलेन गच्छन् दीर्घो चिरेण भाविनीं सिद्धिं वक्ष्यसि । अतस्तत्र गन्तव्यमित्यस्य ग्रन्थ-

---

१ तुहाणम् E.; उत्तराये P. which also reads दिशाये for following word; N. A. have दिशाए; दक्षिणाम् B.; दक्किणम् N; दक्खिण P; A. G. N. read दिशम्; °णं णक्खत्तम् M. R.; N. has दक्किणदुआलिकणक्कत्तम्; G. E. दक्खिणदुवालिके णक्खत्ते (E. has ए for के); B. दक्षिण दुवालिओ णक्खत्तओ. २ Om. P.; अपि च A.; अवि य E. ३ °भिमु° E.; सूले B. E. N. G.; उइदे for उदिए N.; उदिदे B. E. G. ४ Om. N.; गयणम् P.; गयणे G.; मयणे E; B. E. N. G. read बुहस्स; लज्जे for लग्गे E; A. P. om. द in उदिद following; G. N. read अ for it; केदुह्मि for केदुम्मि P.

राक्षसः—भदन्त, तिथिरेव न शुध्यति।
क्षपणकः—सावगा,
एक्कगुणा तिथी चउग्गुणे णक्खत्ते।
चउसत्तिगुणे लग्गे एसे जोइसतन्तसिद्धन्ते।
ता। लग्गे होइ सुलग्गे सोमम्मि गहम्मि जइ वि दुल्लग्गे।
वहेसि दीहं सिद्धिं चन्दस्स वलेण गच्छन्ते॥२०॥ (क)

(क) श्रावक,
एकगुणा तिथिश्चतुर्गुणं नक्षत्रम्।
चतुःषष्टिगुणं लग्नमेष ज्योतिषतन्त्रसिद्धान्तः।
तस्मात्। लग्नं भवति सुलग्नं सौम्ये ग्रहे यद्यपि दुर्लग्नम्।
वहसि दीर्घां सिद्धिं चन्द्रस्य बलेन गच्छन्॥ २० ॥

स्यार्थः। अत्र श्लेषेणाभिप्रेतोऽर्थो जीवसिद्धिना ध्वनितः। तथाहि शूरो राक्षसः अर्थाभिमुखः अर्थो मौर्यसाचिव्यरूपोऽभिमुखो यस्येति बहुव्रीहिः। तस्याभिमुख्यत्वेनोपस्थित इति भावः। चन्द्रगुप्तः संपूर्णराष्ट्रः सन्नुदितो मलयकेतुरुदित एवेदानीमतः परमस्तं पराभवमेष्यतीति उदितास्तमितः। पत्थिदाणं अदक्खिणं णक्खत्तं। इत्थं प्रस्थितानां क्षत्रं न दक्षिणमिति योजना। एवं प्रस्थितानां च युष्माकं क्षत्रं भद्रभटप्रभृति दक्षिणं न भवति किं तु प्रतिकूलं मलयकेतुनिग्रहोन्मुखमित्यर्थः। अस्मिन्समये बुधस्य चाणक्यस्य लग्ने संबन्धे निमित्तभूते सति चाणक्ये त्वत्संबन्धार्थमुद्युक्ते सतीति भावः। चन्द्रगुप्तस्य बलेन भद्रभटादिना गच्छंस्त्वं दीर्घां चिरमनपायिनीं चन्द्रगुप्तस्य साचिव्यपदसिद्धिं वहसीति राक्षसं प्रति गूढाभिसंधिवचनम्॥ २० ॥

१ भद्र. P.; B. N. add तावत् after एव. २ सावका A. B.; सावग R. N.; सावेगम् G.; साधक E. ३ तिही A. P.; धिही M. R; P. reads after this चउणगुणे नक्खत्तेहि. ४ चउग्गणे लग्गे एसो P.; चउस्सहिगु° &c. A.; चउच्चदगु° M.; चउदस R.; चउसट्ठि G.; साठि E; before जोइस B. E. N. have दीसदि; for जोइस R. has जोसिय्य.; M. om. it; B. N. om. तन्त.; G. has तन्ते; E. after लग्गे has तिएसोयोदिशतन्तशिद्धन्तो. ५ Om. P. B. N. For होइ E. has होहि. For सो-ग्गे B. N. read कूलग्गहं पलिहलिज्जासु, E. सोममि गहं च जाहि दुल्लग्गम्, G. सोमं पि गहं अ दुलग्गे. ६ G. reads पाविसिहि दीहसिद्धी.; E. हविहासि दीहमानउ.; B. N. पाविहि हीहं लाहम्; बहुलेण for बलेण R.; बलेन P.

राक्षसः—[1]भदन्त, अपरैः सांवत्सरिकैः सह संवाद्यताम् ।

क्षपणकः—संवादेदु[2] सावगो । अहं उण गमिस्सं । (क)

राक्षसः—न खलु कुपितो भदन्तः ।

क्षपणकः—कुविदे णं[3] तुम्हाणं भदन्ते । (ख)

राक्षसः—कस्तर्हि ।

क्षपणकः—भअवं[4] कअन्तो । जेण अत्तणो पक्खं उज्झिअ परपक्खो प[5]माणीकरीअदि । (ग)

---

( क ) संवादयतु श्रावकः । अहं पुनर्गमिष्यामि ।

( ख ) कुपितो न युष्माकं भदन्तः ।

( ग ) भगवान्कृतान्तः । येनात्मनः पक्षमुज्झित्वा परपक्षः प्रमाणीक्रियते ।

---

येन त्वया आत्मनः पक्षं ज्योतिःसिद्धान्तवेदिनं मां परित्यज्य परे सांवत्सरिका अपेक्ष्यन्ते । अतस्त्वज्ज्योतिःशास्त्रस्य कृतान्तः सिद्धान्तो व्याकोपित इति मत्वा कृतान्तः कुपित इति निष्ठुरवचनं स्पष्टम् । येन त्वयात्मनः पक्षं नन्दवंशीयं चन्द्रगुपेक्ष्य परपक्षो मलयकेतुः प्रमाणीक्रियतेऽतस्तव कालः कुपित इति हृदि गूढम् । 'कृतान्तो यमसिद्धान्तौ' इत्यमरः ।

---

१ Om. M. R.; P. om. अ in the next word; सार्द्धम् for सह B. N; E. has सह before सांव. २ °देइ E. N; for next word B. has सावके, N. सावका, E. साधके, G. सावको; हगे for अहं E; B. and N. (r) read अहं णिअं गेहं ग°. ३ ण कुवि° B. E. N; P. reads कुपिते न; E. reads णकुविदो. ४ स्वगतम् before this B. E. N. G; R. reads भयवं; M. R. किअन्तो; E. B. कदन्तो; E. reads thus आत्मगतम् । भवन्ते अकाशम् योत्तणो &c. ५ M. G. read पलप°; E. पलस्स प°; M. also reads कलीअदि; B. E. read परपक्ख प्पमाणीकलेसि; N. agrees reading करसी for कलेसि.; G. do करेसि.

(इति[1] निष्क्रान्तः क्षपणकः ।)

राक्षसः—प्रियंवदक, ज्ञायतां[2] का वेला वर्त्तत इति ।

प्रियंवदकः—अत्थाहिलासी[3] भअवं सूरो । (क)

राक्षसः—( उत्थाय[4] विलोक्य । ) अये, अस्ताभिलाषी भग[5]-वान्भास्करः । संप्रति हि ।

आविर्भूता[6]नुरागाः क्षणमुदयगिरेरुज्जिहानस्य भानोः
पर्ण[7]च्छायैः पुरस्तादुपवनतरवो दूरमाश्वेव गत्वा ।

---

(क) अस्ताभिलाषी भगवान्सूर्यः ।

---

शूर इति । शूरो मलयकेतुरस्तोन्मुखः शूरो राक्षसश्चार्थाभिलाषी इति चोपश्रुतिर्ध्वनिता ।

उक्तामेव दुरुपश्रुतिमन्यथयति—भास्कर इति ।

आविर्भूतानुरागा इति । उज्जिहानस्योदयमानस्य पर्णच्छायैः पर्णच्छायारूपेण । इत्थंभावे तृतीया । 'छायाबाहुल्ये' इति नपुंसकत्वम् । पुरस्तात्पुरोभागे पुरोगामिसेवकवत् । आशु शीघ्रमेव गत्वा पूर्वाह्णे वृक्षच्छायाः प्रत्यक्प्रसरन्तीति भानोः पुरोगामिभृत्यत्वेनोत्प्रेक्षिताः पश्चादपराह्णे

---

१ G. om. this and क्षप°. २ Om. M. R; om. इति A. P. ३ M. R. have अमच्च before this; B. N. have जं अमच्चो आणवेदित्ति निष्क्रम्य पुनः प्रविश्य; G. has निष्क्रम्य पुनः प्रविश्य । अमच्च; E. agrees with B. but after प्रविश्य adds पुरुषः । अय्य; E. reads आस्थभीला°; A. अस्थाहिला°. For what follows E. reads भयवसात्ति; B. N. read सूले for सूरो. ४ B. E. N. G. have आसनात् before this and B. E. N. M. have च after विलोक्य. ५ B. reads सहस्रदीधितिः । तथाहि; E. भास्कर इति तथाहि. ६ °रागः B. E. N. ७ पत्र B. E. N.; पूर्ण. R.; °दुपनततरवो for दुपवनतरवो M. R.

एते तस्मिन्निवृत्ताः पुनरपरगिरिप्रान्तपर्यस्तबिम्बे[1]
प्रायो भृत्यास्त्यजन्ति प्रचलितविभवं स्वामिनं सेवमानाः ॥२१॥

( इति निष्क्रान्ताः सर्वे ।)

चतुर्थोऽङ्कः[2] ।

---

तस्मिन्नस्तोन्मुखे सति निवृत्तास्तं परित्यज्य परावृत्ता इव दृश्यन्ते । 'अपककुभः प्रान्तपर्यस्तबिम्बे' इति पाठे अपककुप्पश्चिमदिगेव । प्रायो भृत्या इत्यर्थान्तरन्यासः । तेन च मलयकेतुदुरवस्था ध्वन्यते । इत्थं नियताप्तिप्रकरीरूपो विमर्शसंधिस्तस्याङ्गानि चापवादादीनि निरूपितानि ॥ २१ ॥

इति श्रीत्र्यम्बकयज्वप्रभुवर्याश्रितढुण्ढिराजव्यासयज्वविरचिते मुद्राराक्षसनाटकव्याख्याने चतुर्थोऽङ्कः समाप्तः ॥

---

१ पुनरितरककुप् B. N.; पुनररथिरि E.; पुनरपि ककुभः G.; पर्यन्त for पर्यस्त A. P. २ मुद्राराक्षसे राक्षसयोगो नाम before this A.; इति मुद्राराक्षसनाटके P.

# मुद्राराक्षसम्।



## पञ्चमोऽङ्कः ।



( ततः प्रविशति लेखमलंकरणस्थगिकां मुद्रितामादाय सिद्धार्थकः[1] । )

**सिद्धार्थकः**—[2] ही हीमाणहे हीमाणहे । (क)

---

(क) आश्चर्यमाश्चर्यम् ।

---

अथ फलागमकार्ययोः संबन्धो निर्वहणसंधिस्त्रिभिरङ्कैरारभ्यते । तल्लक्षणमुक्तम्—

'बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् ।
ऐकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तत् ॥'

बीजवन्तोऽनुस्यूतबीजाः मुखसंध्यादीनामर्थाः आरम्भबीजसंबन्धादयः यथायथं तत्तत्प्रसङ्गानुसारेण विप्रकीर्णा विशकलिततया यदर्थमारब्धाः सन्तः ऐकार्थ्यमुपनीयन्ते तस्य फलागमशालिनः कार्यस्य यत्र निर्वाहः सिद्धिर्भवति स निर्वहणसंधिः । कार्यफलागमौ वक्ष्येते । अस्याङ्गानि फलागमकार्यानुगुण्येन प्रयोक्तव्यानि । यथा

'संधिर्विरोधो ग्रथनं निर्णयः परिभाषणम् ।
प्रसादानन्दसमयाः कृत्याभाषोपगूहनम् ।
पूर्वभावोपसंहारौ प्रशस्तिश्च चतुर्दश ॥'

स्थगिकामिति । राक्षसमुद्रामुद्रितां स्थगिकां पेटिकाम् ।

ही हीमाणहे इति । आश्चर्यद्योतको निपातसमुदायः ।

---

१ ° **स्थलिकाम्.** B.; **रसिकाम्** N; B. E. N. G. have **च** after this; B. E. read **समुद्राम्** for **मुद्रि°**; G. P. read **मुद्रिका.** २ Om. B. E. N; M. R. G. E. om. first **हीमाणहे**.

बुद्धिजलणिंज्झरेहिं[1] सिञ्चन्ती देसकालकलसेहिं ।
दंसिस्सदि[2] कज्जफलं गुरुअं चाणक्कणीदिलदा ॥ १ ॥ (क)

तो[3] गहीदो मए अज्ज चाणक्केण पुढमलिहिदो अमच्चरक्खसस्स मुद्दालंच्छिओ[4] अअं लेहो तस्स ज्जेव्व मुद्दालंच्छिआ इअं आहरण-पेडिआ। चलिदोह्मि किंल[5] पाडलिउत्तं । जाव गच्छामि । (परिक्रम्यावलोक्य च ।) कहं[6] खवणओ आअच्छदि । जाव से असउण-भूदं दंसणं मह संमदमेव्व । ता ण पडिहरामि । (ख)

---

(क) बुद्धिजलनिर्झरैः सिच्यमाना देशकालकलशैः ।
दर्शयिष्यति कार्यफलं गुरुकं चाणक्यनीतिलता ॥ १ ॥

(ख) तस्माद्गृहीतो मयार्यचाणक्येन प्रथमलेखितोऽमात्यराक्षसस्य मुद्रालाञ्छितोऽयं लेखस्तस्यैव मुद्रालाञ्छितेयमाभरणपेटिका । चलितोऽस्मि किल पाटलिपुत्रम् । यावद्गच्छामि । कथं क्षपणक आगच्छति । यावदस्याशकुनभूतं दर्शनं मम संमतमेव । तस्मान्न परिहरामि ।

---

किलेत्यलीके । गमनमलीकं छद्मरूपमित्यर्थः । इदं बीजोपगमनं

---

१ निज्झरेहिं A.; निज्झरही P.; निब्भरहि E.; णिब्भरेहिं. R; णभरेहिं M.; शिखरेहिं. N; for the next word B. E. N. read सिच°; P. reads सलिलेहिं for कलसेहिं. २ दंसइस्सदि अज्ज. B.; दंसेहिक° N.; दंसेइक° G. E.; दंसेदि हि क° M.; दंसइस्सदिहि क° R; गरु° B. E. N; N. reads णीइदनदा ता &c.; G. णीइलदा. ३ Om. B. N; E. has आत्मगतम् before it. In next word A. P. N. read ओ for दो; पढम B. E. N. P.; पटम G.; लेहि° B. After this B. has लेहो, om. अअंलेहो further on. ४ B. E. R. M. read दो for ओ; and G. E. and N. अयम् for अअम्; जेव्व for ज्जेव्व A.; य्येव E.; जेजेह (?) N. In next word B. E. R. M. have दा for आ; इयम् for इअं E; G. E. N. add च after this; A. E. read आभरण; and A. P. N. पडिआ. E. पिसिविका for पेडिआ. ५ B. N. om. this; G. has it before ह्मि and E. has ओ for दो; A. P. read पाडलीपुत्तअं after which B. E. N. G. have ता; गच्छह्मि. B. N.; M. R. have इति before परि°. ६ अये before this E.; कधम् G. E. For next word B. reads क्खव° and G. °णवो; आग° for आअ° E; °च्छई M. R; B. N. add ता before जाव; मे for से B. N; R. reads अवसउण; B. has इमस्स; G. एदस्स after °भूदस; N. has ईदंदंस. For मह°–रामि B. has ता आदित्तदंसणेण पडिहणामि.; G. भइदंसणेन पडिहणामि.; E. do. reading शुद्ध for भद्द.

(प्रविश्य)[1]

क्षपणकः—

अलहन्ताणं[2] पणमामि जे दे गंभीलदाए बुद्धीए ।
लोउत्तलेहिं[3] लोय सिद्धिं मग्गेहिं गच्छन्दि ॥ २ ॥ (क)

सिद्धार्थकः—भदन्त, वन्दामि[4] । (ख)

क्षपणकः—सावगा[5], धम्मसिद्धी होदु । (निर्वर्ण्य ।) सावगा, पत्थाणसमुव्वहणे कअव्ववसाअं विअ तुमं पेक्खामि । (ग)

---

(क) आर्हतानां प्रणमामि ये ते गम्भीरतया बुद्धेः ।
लोकोत्तरैर्लोके सिद्धिं मार्गैर्गच्छन्ति ॥ २ ॥

(ख) भदन्त, वन्दे ।

(ग) श्रावक, धर्मसिद्धिर्भवतु । श्रावक, प्रस्थानसमुद्वहने कृतव्यवसायमिव त्वां पश्यामि ।

---

संधिर्नामाङ्गम् । बीजस्य चाणक्यनीतेरुपगमनात्कार्यसिद्ध्यर्थमभ्युपगमान्निर्वहणात् ॥ १ ॥

परिहरामीति । अनेनाशकुनेन कुसुमपुरं प्रति गमनप्रतिबन्ध इष्ट एवेत्यर्थः ।

आर्हतानामिति कर्मणि षष्ठी । जलनिमज्जितमुक्तालाबुवच्छश्वदुत्प्लुत्योर्ध्वगमनमेव मुक्तिरित्यार्हतानां मतम् । अनेन लोकोत्तरकार्यसिद्धिप्रदं चाणक्यनीतिगाम्भीर्यं ध्वनितम् ॥ २ ॥

---

१ ततः प्रविशति B. E. N. G. २ अलि° B. M. G; B. E. G. N. (r) read °मामो for °मामि in next word. ए दे for जे दे M. R.; ते G.; for ग-ए R. has गम्भिलताए; G. गम्भीरलताए; A. P. गम्भीरदाए; M. R. read बुद्धिआए. ३ E. om. लो…हिं; M. R. read रे for ले and om. next word for which G. has लोअ and E. लोय; for सिद्धिम् R. has सिज्झिम्; G. सिद्धिं; मग्गन्ति for गच्छन्दि B. E.; गच्छन्ति A. M. N. ४ पणमामि B; E. has उपसृत्य before भदन्त. ५ सावका B. E.; सावग्ग P.; सावआ M. For सिद्धी R. has सिज्झि.; G. E. विद्धी, B. लाहो.; B. E. add दे after it; and G. E. N. read भोदु; °सिद्धार्थकम् before निर्वर्ण्य B. N. For next word A. P. read सावेगम्; R. M. om it. B. E. read सावका; G. सावग. For प-कअ B. has समुद्दसंतलणकिद., E. अद्धाणसमुद्धातलणकय, N. गभीलतया अत्थाणसमुद्दतलणे, G. अत्थाणसमुव्वहणे हअ; P. has कद for कअ; N. विअ° for व्वव°; G. सायं for साअं; and E. ववसायामं; for तुमं B. has देहिअअं and R. E. N. वे° for पे in. पेक्खा°.

सिद्धार्थकः—कहं भदन्तो जाणादि[1] । (क)

क्षपणकः—सावका[2], किं एत्थ जाणिदव्वं । एसो दे मग्गादेसकुसलो सउणो करगदो लेहो अ सूअदि । (ख)

सिद्धार्थकः—जाणिदं भदन्तेण । देसन्तरं[3] पत्थिदोह्मि । ता कहेदु भदन्तो कीदिसो अज्ज दिवसो[4] त्ति । (ग)

क्षपणकः—( विहस्य । ) सावग[5], मुण्डिअमुण्डो णक्खत्ताइं पुच्छसि । (घ)

सिद्धार्थकः—भदन्त, सम्पदं वि[6] किं जादं । कहेहि पत्थाणस्स जइ अणुकूलं[7] भविस्सदि तदो गमिस्सं । (ङ)

---

( क ) कथं भदन्तो जानाति ।

( ख ) श्रावक, किमत्र ज्ञातव्यम् । एष ते मार्गादेशकुशलः शकुनः करगतो लेखश्च सूचयति ।

( ग ) ज्ञातं भदन्तेन । देशान्तरं प्रस्थितोऽस्मि । तस्मात्कथयतु भदन्तः कीदृशोऽद्य दिवस इति ।

( घ ) श्रावक, मुण्डितमुण्डो नक्षत्राणि पृच्छसि ।

( ङ ) भदन्त, सांप्रतमपि किं जातम् । कथय प्रस्थानस्य यद्यनुकूलं भविष्यति तदा गमिष्यामि ।

---

१ भदणाजाणिदम् E. २ सावग्ग P.; सावग R.; सावक G.; सादगा A.; सावआ N; B. has णं before and ज्जेव after एसो. E. has एस for एसो. For म–दो B. has मगण्णाओकण्णधारे, E. मग्गाद्सणकण्णचाले; G. om. सउणो; P. has गद for गदो; B. reads लेहे and it and E. om. अ; for सूअदि M. R read सूएदि, B. G. E. सूचेदि, N. सूचेति. ३ °न्तलम् B.; °तलेरे°E.; °सान्दरम् M G. has ह्मि before पत्थि°, for which B. E. have चलि; कधेदु for कहेदु B. E., कहेउ N., कहेत A; G. om. भदन्तो; E. reads भवो; and G. and N. read कीरिसो. ४ दिअसो. B. P. N; B. N. om. त्ति. ५ सावग्ग P.; सावगा. N.; B. E read सावका; B has मुण्डम् after this omitting मुण्डो futher on; E. rhas मुण्डासिअ for मुण्डिअ for ण–ई B. G. E. N. read ण–णि and E. has पृच्छसि. ६ पि B. N. G. E. ( which has it afer किं ); B. E. N. G. read ता after जादं further on; for कहेहि after that B. has कधेहि, E. काहहि. ७ B. reads अणुऊलम् with जदि अत्तणो for प-इ before; E. has यदि अणुलम्.; N. जदि for जइ; ता for तदो B; B. and G. and E. add at end अण्णधाणिव ( अ E. ) त्तिस्सं.

क्षपणकः—सावग[1], ण संपदं एदस्सिं मलअकेदुकडए अणुकूलं[2] भविस्सदि। (क)

सिद्धार्थकः—भदन्त, कहेहि कुदो एदम्[3]। (ख)

क्षपणकः—सावग[4], णिसामेहि। पुढमं दाव एत्थ कडए लोअस्स[5] अणिवारिदो णिग्गमप्पवेसो आसी। दाणीं इदो पच्चासण्णे कुसुमपुले[6] ण कोवि अमुद्दालंच्छिओ णिग्गमिदुं पवेट्ठुं वा अणुमोदीअदि[7]। ता जदि भाउराअणस्स मुद्दालंच्छिओ तदो गच्छ विस्सद्धो[8] अण्णहा चिट्ठ। मा गुम्माहिआरिएहिं संजमिंअकलचलणो राअकुलं पवेसीअसि[9]। (ग)

---

(क) श्रावक, न सांप्रतमेतस्मिन्मलयकेतुकटकेऽनुकूलं भविष्यति।

(ख) भदन्त, कथय कुत एतत्।

(ग) श्रावक, निशामय। प्रथमं तावदत्र कटके लोकस्यानिवारितो निर्गमप्रवेश आसीत्। इदानीमितः प्रत्यासन्ने कुसुमपुरे न कोऽप्यमुद्रालाञ्छितो निर्गन्तुं प्रवेष्टुं वानुमोद्यते। तद्यदि भागुरायणस्य मुद्रालाञ्छितस्तदा गच्छ

१ सावआ° M.; सावकान E.; सावकाणम् B. P. N.; सां° for °सं° P.; एत for एद° A. P.; °लय° for °लअ° P. २ °ऊ for °कू M; B. and N. have अणुऊलेण अणणुऊलेण वा अगाहिदमुद्दो ण गच्छीअदि.; E. अणुकूलेण अणणुकूलणे वा दिवसे गच्छीयदि.; G. अणुकूले अणणुऊले वा गच्छदि. ३ क्खु अअं B. N.; E. has तदो कधं खु णादि and G. कुदो कट्ठखुदाणिम्. ४ °वका B. E. N.; °वआ M.; निशा° for णिसा° E.; पु for पु° B. E. N. G.; ता° for दा° E; B. and N. read मलअकेदु before कडए. ५ °य° E; °वालिअणि° for °वारिदोणि° B. E. N. G; °प° for °प्प° B. E. N. G.; ण before प्प P; °सि for °सी E; इदाणिम् for दाणीं G; इयाणिम् E; °न्ने for °ण्णे E. ६ °उरे B. N.; °पुरे G; दो for °ओ B. E. N; °क° for ग्ग B. N.; °क्ख° E; विसिदुं for पवेट्ठुं B. E. N. ७ °यदि E; यदि for जदि E; °गु° for °उ° B. E. N. G.; °ला° for °रा° E.; य for अ G. E; °दोसि for° ओ B. E. N.; दो G. ८ °द्धं E.; वीसत्थो B. M.; वीसद्धो G.; °धा for हा B. E. N. G. which add निव्वत्तिअ (°त्तिदव्व. E.) णिउक्कण्ठं (णितिक्को G. णिलुक्को E) B. reads तुमं गुमट्ठाणाधिबेहिं; E. तुमंगचिकालिकेहिं; G. has या for आ.; ९ °मिदक° B. N.; °मिमक° E.; कर. G.; चरणे for चलणो R.; राअउल for राअकुल B.; राजकुल G.; लावुल E.; प्प for प B; शि for सी R.; हसि for असि E. G.

**सिद्धार्थकः**—किं ण जाणादि[1] भदन्तो अमच्चरक्खसस्स सण्णिहिदो[2] त्ति ता अमुदालंच्छिदं वि मं णिक्कमन्तं कस्स सत्ती णिवारेदुं[3] । (क)

**क्षपणकः**—सावगा[4], रक्खसस्स पिसाचस्स वा होहि ण उण अमुद्दालंच्छिदस्स[5] इदो णिक्कमणोवाओ । (ख)

**सिद्धार्थकः**—भदन्त, ण[6] कुप्प कज्जसिद्धी होदु । (ग)

---

विश्रब्धोऽन्यथा तिष्ठ । मा गुल्माधिकारिकैः संयमितकरचरणो राजकुलं प्रवेश्यसे ।

( क ) किं न जानाति भदन्तोऽमात्यराक्षसस्य संनिहित इति तदमुद्रालाञ्छितमपि मां निष्क्रामन्तं कस्य शक्तिर्निवारयितुम् ।

( ख ) श्रावक, राक्षसस्य पिशाचस्य वा भव न पुनरमुद्रालाञ्छितस्येतो निष्क्रमणोपायः ।

( ग ) भदन्त, न कुप्य कार्यसिद्धिर्भवतु ।

---

सावेगमिति । कौटिल्यकूटकार्यनिर्वहणार्थं कृतोद्योग इति ज्ञात्वा मनस्यावेग औत्सुक्यम् ।

---

१ आणा° B. N.; यंणा° E.; जधा before अमच्च B. N.; जधा अहं G.; यथा अहं E. २ केलिअरो अन्तिओ सिद्धत्थओ अहं B.; सेवकोसिद्धत्थको E.; पि. for वि B. E. N. G.; °क्ख° for °क्क° E.; क्कान्तं G.; °क्खमन्दं R.; °ही for सत्ती E. ३ °उं° R. ४ °आ M.; °ग A.; °का B. E; ल° for र° E; °साथ° for साच° E; होदु for होहि R. M.; भोदि N.; भोहि. G. E. Before this B. has केलिकिरो, N. केयको., G. and E. केलको; णात्थि for ण B; and B. E. N. G. add दे after उण. ५ अ for द G; after this इदो om. in B. A. P; णिक्कमवाओ for णिक्कमणोवाओ M. R. G.; णिक्खमणो° E. ६ मा. A. P.; कुप्प R. G; after which B. N. add भण मे.; E. तेणहि; भोदु for होदु G.; मेभादं E.; B. and N. add त्ति.; R. has सिज्झी for सिद्धी.

क्षपणकः—सावगा[1], गच्छ । होदु दे कज्जसिद्धी । अहं वि-भाउराअणादो मुद्दं जाचेमि[2] । (क)

( इति निष्क्रान्तौ[3] । )

प्रवेशकः ।

( ततः प्रविशति पुरुषेणानुगम्यमानो भागुरायणः । )

भागुरायणः—(स्वगतम्[4] ।) अहो वैचित्र्यमार्यचाणक्यनीतेः ।

मुहुर्लक्ष्योद्भेदा[5] मुहुरधिगमाभावगहना
मुहुः संपूर्णाङ्गी मुहुरतिकृशा कार्यवशतः ।
मुहुर्नश्यद्बीजा[6] मुहुरपि बहुप्रापितफले-
त्यहो चित्राकारा नियतिरिव नीतिर्नयविदः ॥ ३ ॥

---

( क ) श्रावक, गच्छ । भवतु ते कार्यसिद्धिः । अहमपि भागुरायणा-न्मुद्रां याचे ।

---

अहं वि इति । अहमपि चिकीर्षितमहाप्रयोजनसिद्ध्यर्थं मुद्रायाचन-व्याजेन भागुरायणं प्रति गमिष्यामीति गूढम् । इदं कार्यमार्गणं वि-रोधो नामाङ्गम् ॥

प्रवेशक इति । तल्लक्षणमुक्तम्—'वृत्तवर्तिष्यमाणानां कथांशानां नि-दर्शकः । प्रवेशकस्तु नाट्येऽङ्के नीचपात्रप्रयोजितः ॥' इति ।

मुहुर्लक्ष्योद्भेदा इति । मुहुर्लक्ष्योद्भेदा मुखसंधौ स्तोकोद्दिष्टा सती बहुधा विस्तारिणीत्यर्थः । प्रतिमुखे लक्ष्यालक्ष्यायाः पुनर्व्यक्तेः गहनातिकृशा च । गर्भे मुहुर्दृष्टनष्टान्वेषणान्नश्यदिव बीजमुद्योगो यस्याः सा तथोक्ता । विमर्शे बीजस्य स्पष्टमेव दर्शनात्संपूर्णाङ्गीत्युक्तम् । निर्वहणे सर्वार्थो-

---

१ Om. R. M; B. E. read सावका, N. उवासआ, G. उवासक; भो° for हो° G. E. N.; ज्झी for द्धी R.; कज्जंसिद्धम्. N; om. वि R. M.; यि. B. E. N; °गु° for °उ° B. E. G. N.; °लायणा° E.; °रायणा°. R. G; ओ for दो G; B. E. N. add पाडलिउत्तं गन्तुम्. २ आचेमि R. M.; याचेमि E.; पडिच्छेमि B. N. ३ G. and E. add उभौ. ४ Om. G.; आत्मग° B. E. N; विचित्रता for वैचित्र्य B.; B. E. N. G. add कुतः after नीतेः. ५ लभ्योद्भे° M.; लभ्याभे°. R. ६ भ्र° B. E.; °रति for °रपि E.

(प्रकाशम्।) भद्र भासुरक, न मां दूरीभवन्त[1]मिच्छति कुमारः। अतोऽस्मिन्नेवास्थान[2]मण्डपे न्यस्यतामासनम्।

पुरुषः—एदं[3] आसणं। उपविशदु अज्जो। (क)

भागुरायणः—(उपविश्य।) भद्र,[4] यः कश्चिन्मुद्रार्थी मां द्रष्टुमिच्छति स[5] त्वया प्रवेशयितव्यः।

पुरुषः—जं अज्जो[6] आणवेदित्ति। (निष्क्रान्तः।) (ख)

भागुरायणः—(स्वगतम्[7]।) कष्टमेवमप्यस्मासु स्नेहवान्कुमारो मलयकेतु[8]रतिसंधातव्य इत्यहो दुष्करम्। अथवा।

कुले लज्जायां च स्वयशसि च माने च विमुखः
शरीरं विक्रीय क्षणिकमपि लोभा[9]द्धनवति।

---

(क) एतदासनम्। उपविशत्वार्यः।
(ख) यदार्य आज्ञापयति।

---

पसंहाराद्बहुप्रापितफलेत्युक्तम्। ईदृशी नयविदश्चाणक्यस्य नीतिर्नियतिरिव चित्राकारा नियतेश्चाणक्यनीतेश्च कार्याणां विचित्राकारता कारणे उपचर्यते ॥ ३ ॥

न्यस्यतामिति। मुद्रादानार्थं कटकद्वार्यवस्थानं दूरीभवनमित्याशयः। एवमपि क्षणमात्रं दूरावस्थानरूपं विरहमसहमान इत्यर्थः। अतिसंधातव्य इति। यत्कष्टं पापं दुष्करमित्यन्वयः। उक्तं कष्टं समाधत्ते—अथवेति।

कुले इति। विचारातिक्रान्तः। अतिक्रान्तविचारसमय इत्यर्थः। इदं

---

१ °न्तमतिगच्छ° G. २ °ण्ट M. R.; विन्य° in B. E. N. G. for following word; A. om. °मा°. ३ इदम् E.; °इमम् G.; नं for णं G.; °स° for °श° R. G. E. ४ B. E. N. G. add भासुरक after this. ५ Om. P; A. P. G. add इति at the end. ६ अमच्चो A. G.; अय्यो. E.; दीति. P; E. omits त्ति in text. ७ सकरुणमात्मगतम् E.; °वमयम° for °वमप्य° E; नामायमस्मा° B. E. N.; यदस्मा° M. R. G. ८ °रिति. B. N.; °रभि° G. E; अथवा om. in A. P. ९ धनलाभात् B.; धनलोभात् G. E. N.

तदाज्ञां कुर्वाणो हितमहितमित्येतदधुना
विचारातिक्रान्तः[1] किमिति परतन्त्रो विमृशति ॥ ४ ॥

(ततः प्रविशति प्रतीहार्यनुगम्यमानो[2] मलयकेतुः ।)

**मलयकेतुः**—(स्वगतम्[3] ।) अहो, राक्षसं प्रति विकल्पबाहुल्यादाकुला मे बुद्धिर्न निश्चयमधिगच्छति । कुतः ।

भक्त्या नन्दकुलानुरागदृढया नन्दान्वयालम्बिना
किं चाणक्यनिराकृतेन कृतिना मौर्येण संधास्यते[4] ।
स्थैर्यं भक्तिगुणस्य वाधिगणयन्[5]किं सत्यसंधो भवे-
दित्यारूढकुलालचक्रमिव मे चेतश्चिरं भ्राम्यति ॥ ५ ॥

(प्रकाशम् ।) विजये, क्व भागुरायणः ।

---

कार्योपक्षेपणं ग्रथनम् । कार्यस्य मलयकेत्वतिसंधानेन राक्षसवशीकरणस्योपक्षेपणात् ॥ ४ ॥

भक्त्या इति । नन्दान्वयालम्बिना किं मौर्येण संधास्यते किं वा भक्तिगुणस्य मयि मया वा क्रियमाणस्य स्थैर्यं दार्ढ्यं अधिगणयन् आधिक्येन पश्यन् सत्यसंधः सत्या संधा नन्दराज्यं सर्वं तवैवास्त्विति पूर्वं कृता प्रतिज्ञा यस्य स तथोक्तो भवेत् । नन्दवंश्यत्वेन नन्दकुलानुरागजनिता भक्तिर्मौर्ये दृढा भवितुमर्हति । सत्यसंधत्वानुरोधेन मयि च केवलो भक्तिगुणो दृढो भवितुमर्हतीत्युभयकोटिकः संशयः । तत्रापि मौर्यसंधानकोटिः प्रबलेति ध्वनयितुं चाणक्यनिराकृतेनेति विशेषणं राक्षसस्य मौर्यसाचिव्याभिलाषहेतुगर्भम् । कृतिनेति च विशेषणं लब्धदुर्लभराज्यत्वात्कृतकृत्यः सन्पुनश्चाणक्येन जितकाशिना दुर्विधेयेन मौर्यो न संदधीतेति ध्वनयितुम् ॥ ५ ॥

---

१ °न्तिःक्रा° E.; यदत° for परत° E.; २ °गतो B. N. ३ आत्मग° E; B. E. N. G. have मे here after प्रति; R. om. it entirely; G. E. P. read वितर्क. for विकल्प. ४ °स्यति R. E. ५ °धिगु. A.; विग B. E. N.

**प्रतीहारी**—कुमार[1], एसो खु कडआदो णिक्कमिदुकामाणं मुद्दासंपादणं[2] अणुचिट्ठदि । (क)

**मलयकेतुः**—विजय, मुहूर्त्तमसंचारा[3] भव यावदस्य पराङ्मुखस्यैव पाणिभ्यां नयने पिदधामि ।

**प्रतीहारी**—जं कुमारो आणवेदि । (ख)

(प्रविश्य)

**पुरुषः**—अज्ज, एसो खु खवणओ मुद्दाणिमित्तं[4] अज्जं पेक्खि[5]दुमिच्छदि । (ग)

**भागुरायणः**—प्रवेशय[6] ।

**पुरुषः**—तथा[7] । (इति निष्क्रान्तः ।)

(प्रविश्य ।)

**क्षपणकः**—धम्मसिद्धी[8] सावगाणं होदु । (घ)

---

(क) कुमार एष खलु कटकान्निष्क्रमितुकामानां मुद्रासंप्रदानमनुतिष्ठति ।
(ख) यत्कुमार आज्ञापयति ।
(ग) आर्य, एष खलु क्षपणको मुद्रानिमित्तमार्यं प्रेक्षितुमिच्छति ।
(घ) धर्मसिद्धिः श्रावकानां भवतु ।

---

विजये मुहूर्तमिति । अनेन मलयकेतोरतिबालिशत्वं भागुरायणस्य चैवं तद्वशीकरणप्रावीण्यं च सूचितम् । तेनेदानीं महत्प्रयोजनमनुष्ठेयं भविष्यतीति पूर्वमुपक्षिप्तस्य जीवसिद्धिना संप्रति क्रियमाणस्य मलयकेत्वतिसंधानरूपस्य महाप्रयोजनस्यावसरदानाय चेदं कविसंविधानमित्यवधेयम् ।

---

१ °ल G.; °यादो for °आदो E; °क्ख for क्क E.; °मस्य for °माणं B. N. २ संपदानाधिआरे B. N.; संपायणं G. ३ निभृतपदसंचारी. B. E. N.; नि... °चरा. G.; °चारो A. P; च added after °स्य P. ४ भासुरकः B. N.; निक्खमणमुद्दा° for मुद्दा° E. ५ प R. ६ भासुरक before this E. ७ तहेति R. M.; भासु° । जं अज्जो आणवेदित्ति. B. N. ८ °सिद्धी. B. N. G.; °सिज्झी R.; धर्मसिद्धी. E.; सावकाणं for सावगाणं. B. and सावकणं. before धम्म° E; भोदु for होदु G. E.

**भागुरायणः**—([१]अवलोक्य स्वगतम् ।) अये, राक्षसस्य मित्रं जीवसिद्धिः । (प्रकाशम् ।) [२]न खलु राक्षसस्य प्रयोजनमेव किंचिदुद्दिश्य [३]गम्यते ।

**क्षपणकः**—[४]सन्तं पावं सन्तं पावं । सावगा, तहिं गमिस्सं जहिं रक्खसस्स[५] पिसाचस्स वा णामं वि ण सुणीअदि । (क)

**भागुरायणः**—[६]बलवान्सुहृदि प्रणयकोपः । तत्किमपराद्धं राक्षसेन[७] भदन्तस्य ।

**क्षपणकः**—[८]सावगा, ण मम किंवि रक्खसेण अवरद्धं । सअं जेव्व [९]हदासो मन्दभाओ अत्तणो कम्मेसु लज्जे । (ख)

---

(क) शान्तं पापं शान्तं पापम् । श्रावक, तत्र गमिष्यामि यत्र राक्षसस्य पिशाचस्य वा नामापि न श्रूयते ।

(ख) श्रावक, न मे किमपि राक्षसेनापराद्धम् । स्वयमेव हताशो मन्दभाग्य आत्मनः कर्मसु लज्जे ।

---

राक्षसस्य मित्रमिति । अनेन द्वारेणेदानीं मलयकेतुरतिसंधातव्य इति भावः ।

---

१ नाट्येनाव° B. N. G. A; ना°विलोक्यात्मग° E; मन्त्री for मित्रं G. २ भदन्त before this in B. E. N. G; E. om. स्य. ३ E. has नगरं before this ४ B. A. N. add कर्णौ पिधाय here. One स-वं om. in R. G. E; °का for °गा B. E.; °आ M.; °ग. R. G. N; जेव्व. before गमिस्सं in B; °ष्यामि for °स्सं N.; °स्सामि G. ५ लक्ख° N. G. E; after this वा M. R; पिसाचस्स om. in E. A. P; om. वा G. E; the next word is नाम in B. N. पि for वि B. E. N. G.; °णीयदि for णीअदि G.; °णामि. E. ६ B. N. read भदन्त before this; and B. N. read ते after this; E. has गरीयान् and B. and N. and G. have बलीयान् for बलवान्; किमारा° for किमपरा° G. ७ After भ-स्य E. ८ °अ. M.; °ग. R.; °का. B. E; पि for वि B. E. N. G; A. E. have किंवि after र-ण; लक्ख° for रक्ख G. E. N; °लद्धं for °रद्ध B. E. N; ज्झं for द्धं G; सयंय्येव. E.; सअंएव्व M. R. ९ Om. B. N.; हदगे G. E; °भगो for °भाओ N.; भगे G. E.; णं after अत्तणो B. G; कम्मसु लज्जामि for कम्मेसु लज्जे B. ( also अवलद्धामि as a variant which is the reading of E. ) N. reads लज्जामि for लज्जे.

**भागुरायणः**—भदन्त, वर्द्धयसि मे[1] कुतूहलम् । श्रोतुमिच्छामि ।

**मलयकेतुः**—( [2]स्वगतम् ।) अहमपि श्रोतुमिच्छामि ।

**क्षपणकः**—[3]सावगा, किं अणेण असुणिदव्वेण सुदेण (क) ।

**भागुरायणः**—[4]यदि रहस्यं तत्तिष्ठतु ।

**क्षपणकः**—[5]णं रहस्सं किंदु अदिणिसंसं । (ख)

**भागुरायणः**—यदि न रहस्यं [6]तत्कथ्यताम् ।

**क्षपणकः**—[7]सावगा, ण रहस्सं एदं । तहवि ण कहिस्सं । (ग)

**भागुरायणः**—[8]अहमपि मुद्रां न दास्यामि ।

**क्षपणकः**—( स्वगतम् ।) युक्तमिदानीमर्थिने कथयितुम् ।

---

(क) श्रावक, किमनेनाश्रोतव्येन श्रुतेन ।

(ख) श्रावक, न रहस्यं कित्वतिनृशंसम् ।

(ग) श्रावक, न रहस्यमेतत् । तथापि न कथयिष्यामि ।

---

अर्थिने इति । अर्थिने आदरवते । आदरेण श्रुतं मत्कथितं तथात्वेनैव गृह्णीयादिति भावः ।

---

१ Om. A P; कौतू° for कुतू R. M. P. after which B. adds मल° । स्वगतम्-मम च । and then भागु° । श्रोतु°; in which B. agrees with N;and E. reading आत्मग for स्वग°. २ Om. E. B; E. N. G. om. श्रोतु° at the end of speech. ३ सवका. E; सावका B. N. G; om. R. M; एदिणा सुणिदेण for अणेण &c. N. B. (असु° as a variant); G. has इमिणा.; E. का एदिणा भोदि असु°. ४ भदन्त before this B. E. N; तदा for तत् B. N; E. om it. ५ सावग before this G.; सावका. E.; उपासका B. N; B. A. N. G. read णहि. for ण; B. N. G. om. all after रहस्सं; E. has ल for र, तु for दु and °स्संसं. ६ तर्हि क° omitting यदि न रहस्यं B. N. G. ७ का B. E. N. G.; ग R; E. has न लहस्सं omitting एदं; B. N. G. णत्थि एदं तथावि; कथइस्सं for कहिस्सं B. E. N. G. adding अदिणिसंसं. ८ भदन्त before this B. N. A.; °स्ये for °स्यामि M. R.

(प्रकाशम् ।) का गई[1] । सुणादु सावगो । अत्थि दाव अहं मन्द-भग्गो पुढमं पाडलिउत्ते[2] अहिणिवसमाणो लक्खसेण मित्तत्तणं उवगदे । तहिं अवसले[3] लक्खसेण गूढं विसकण्णआपओअं उप्पादिअ घादिदे पव्वदीसले[4] । (क)

मलयकेतुः—(सबाष्पमात्मगतम् ।) कथं राक्षसेन घातितस्तातो[5] न चाणक्येन ।

भागुरायणः—भदन्त, ततस्ततः[6] ।

क्षपणकः—तदो हगे[7] लक्खसस्स मित्तंति कदुअ चाणक्कहद-

---

(क) का गतिः । शृणोतु श्रावकः । अस्ति तावदहं मन्दभाग्यः प्रथमं पाटलिपुत्रे अधिनिवसन् राक्षसेन मित्रत्वमुपगतः । तस्मिन्नवसरे राक्षसेन गूढं-विषकन्यकाप्रयोगमुत्पाद्य घातितः पर्वतेश्वरः ।

(ख) ततोऽहं राक्षसस्य मित्रमिति कृत्वा चाणक्यहतकेन सनिकारं नगरा-

---

घातित इति । मम हस्तेनेति शेषः ।

---

१ °दी for ई B. E. N. G; B. N. add एसे णिवेदेमि; सुणोदु for सुणादु E.; सुणाउ. N.; सावका for सावगो B. E.; सावगे G.; सावगा N.; सावओ M; अत्थ for अत्थि A; ताव for दाव G; for अहं B. N. read हगे, G. हरगे, E. गेहे; °भाओ for ° भग्गो M. A.; भाए. R.; भग्गे G.; अधण्णो B; प° for पु° B E. N. G. २ पाडली M. P; वाडली A.; पा...पुत्ते E. R. M; निवसमाणो for अहि-णो B. N.; अहिणिवसमाणेण G.; अहिणिवसन्तेण M. R; रक्खसस्स for लक्खसेण B. N. E; उपग° for उवग° P.; अबग° G.; उवगहे E; B. E. N. add च after तहिं. ३ अन्तले E; °सेन for °सेण E; °ण्णाप° for °ण्ण आप° B. E. N. A.; °ण्णयाप° G; समुप्पा° for उप्पा° B. N.; प्पाइअ° G.; °प्पाइय E; °दो for °दे A. P.; वाचा before घादिदे in E; B. E. N. read देवे after it. ४ M. G. read °सरे; R. °देसरे; E. पवदी°. ५ R. om. तातः. ६ R. om. one ततः. ७ हगो M. P.; हङ्गे R.; हदगे G.; गहे E; P. R. om स्स; G. has नि instead. Om. त्ति. B. N.; इति for त्ति P.; मित्तेति A.; मित्तोत्ति E. which has कालिय for कदुअ; °दकेण for °दएण A. P.; °दगेण G. E.

एण सणि[1]कालं णअरादो णिव्वासिदो । दाणीं वि लक्खसेण अ-णेअलाअकज्जकुसलेण किंपि[2] तालिस आलहीअदि जेण हगे जी-अलो[3]आदो णिक्कासिज्जेमि । (ख)

**भागुरायणः**—भ[4]दन्त, प्रतिश्रुतराज्यार्द्धमयच्छता चाणक्यहत-केनेदमकार्यमनुष्ठितं न राक्ष[5]सेनेति श्रुतमस्माभिः ।

**क्षपणकः**—( कर्णौ पि[6]धाय ।) सन्तं पावं । चाणक्केण विसक-ण्णाए णा[7]मंपि ण सुदम् । (क)

**भागुरायणः**—मुद्रा[8] दीयते । एहि कुमारं श्रावय ।

---

न्निर्वासितः । इदानीमपि राक्षसेनानेकराजकार्यकुशलेन किमपि तादृशमारभ्यते येनाहं जीवलोकान्निष्कासिष्ये ।

(क) शान्तं पापम् । चाणक्येन विषकन्याया नामापि न श्रुतम् ।

---

तालिसमिति । तादृशं पर्वतेश्वरघातनसदृशं मलयकेतुनिग्रहमपीति गूढो भावः । इदं भागुरायणभदन्तयोर्मिथः परिभाषणं जल्पनम् ।

---

१ सनि° A. P. M.; °णिआरं R.; °णिगालं G.; °कारं M; णगलदो for णअरादो G.; णगलादो E.; णअलादो P; णिक्का for णिव्वा A. P. G; R. is doubtful. इदा° for दा° E.; पि for वि B. E. N. G; M. has अणेअक;° R. अणेअकज्ज-लकु;° E. अणेयलायकज्जं.; B. N. G. om. ला. २ वि R. G.; तादि° for तालि° B. E. N.; आलम्भी° for आलही° B. N. E.; आहिलीअ A. P.; हंगे for हगे R.; हग्गे M.; हगो P. ३ P. om. °अलो°; R. reads जीवलो°; E. जीवलोका°; निक्का° for णिक्का° A. M.; °सिआमि B. N; °सिअदि G.; णिव्वासियामि. E. ४ Om. G; त्य for त R. M; for अयच्छता. (a variant in B.) G. has अभिगच्छता; B. E. संप्रदानमनिच्छता. ५ E. om. न राक्षसेन. G. reads °ष्ठितमस्माभिरिति श्रुतं न राक्षसेन. ६ Om. in E; सं-वं occurs twice in A. P. M; E. omits it. B. N. E. G. add सावका after it. चाणक्को for चाणक्केण B. N.; चाणक्कस्स G. E. (E. has ण before चा°).; G. om. ए ७ °वि M. P.; जाणादि for सुदम् B.; विदिदम् E.; सुदे A; B. N. add तेण जेव्व दुट्ठबुद्धिणा लक्खसेण एसा अक-ज्जसिद्धी किदा. ८ B. N. read भदन्त कष्टमिदम् । इयं मुद्रा &c. A. reads भ-दन्त मुद्रा &c. E. भदन्त इयं मुद्रा &c. and P. adds प्र to दीयते; संश्रावयाव B. N.; श्रावयामः P.

**मलयकेतुः**—( उपसृत्य[1] । )

> श्रुतं सखे श्रवणविदारणं वचः
> सुहृन्मुखाद्रिपुमधिकृत्य[2] भाषितम् ।
> पितुर्वधव्यसनमिदं हि येन मे
> चिरादपि द्विगुणमिवाद्य[3] वर्द्धते ॥ ६ ॥

**क्षपणकः**—( स्वगतम् । ) अये, श्रुतं मलयकेतुहतकेन । हन्त[4] कृतार्थोऽस्मि[5] । ( इति निष्क्रान्तः । )

**मलयकेतुः**—( प्रत्यक्षवदाकाशे लक्ष्यं बद्ध्वा । ) राक्षस राक्षस[6], युक्तं युक्तम्[7] ।

> मित्रं ममेदमिति[8] निर्वृतचित्तवृत्तिं
> विश्रम्भतस्त्वयि निवेशितसर्वकार्यम्[9] ।

---

श्रुतमिति । चिरादपि चिराज्जातमपि अद्य जातमिव द्विगुणं वर्धत इत्यर्थः ।

कृतार्थोऽस्मीति । तेनेदानीं महत्प्रयोजनमनुष्ठेयं भविष्यतीति पूर्वोक्तमहाप्रयोजनानुष्ठानेन कृतार्थोऽस्मीत्यर्थः । सुहृन्मुखाद्रिपुमधिकृत्येत्यनेन स्वस्य सुहृत्त्वेन विश्वास्यवचनत्वं राक्षसस्य रिपुत्वं च मलयकेतुना मनसि दृढीकृतमिति च कृतार्थता । इदं बीजानुगुणकार्यप्रख्यापननिर्णयः ॥ ६ ॥

मित्रं ममेदमिति अनेन ज्ञायते राक्षसपर्वतकयोः पूर्वं महत्सौहृदमासीत् । अनन्तरं चाणक्येन राज्यार्धदानपरिपणनप्रलोभनेन राक्षसाद्विभेद्य स्वकार्यसिद्धये पर्वतकः सहायत्वेन प्रवणीकृत इति । तथा चानुपदमेव

---

१ Om. B. N. G; E. has सास्रम् instead. २ P. reads °द्विद° for °द्रिपु°. ३ G. has °मिहाद्यवर्तते.; ४ Om A.P.B.N; N. reads before this अये सुदं मलयकेतुहदएण; G. agrees and E. too reading °गेण for°एण. ५ कृतार्थश्चाणक्यः E; A. P. R. add सभयम् before निष्क्रान्तः; G. सभायाम्. E. adds क्षपणकः after नि.° ६ B. N. R. om. one राक्षस. ७ B. N. E. read इदम् for युक्तम्; R. G. have युक्तम् once only. ८ °ममायमि° B. N.; °त्तिः for त्तिं. B. E. ९ °र्यः B. E

तातं निपात्य सह बन्धुजनाश्रुतोयै-[1]
रन्वर्थतोऽपि ननु राक्षस राक्षसोऽसि ॥ ७ ॥

भागुरायणः—(स्वगतम्[2] ।) रक्षणीया राक्षसस्य प्राणा इत्या-र्यादेशः । भवत्वेवं तावत् । (प्रकाशम् ।) कुमार, अलमावेगेन । आ[3]-सनस्थं कुमारं किंचिद्विज्ञापयितुमिच्छामि ।

मलयकेतुः—(उपविश्य ।) सखे, किमसि वक्तुकामः ।

भागुरायणः—कुमार, इह खल्वर्थशास्त्रव्यवहारिणामर्थवशाद-रिमित्रोदासीनव्यवस्था न लौकिकानामिव[5] स्वेच्छावशात् । यतस्त-स्मिन्काले सर्वार्थसिद्धिं राजानमिच्छतो राक्षसस्य चन्द्रगुप्तादपि ब-लीयस्तया सुगृहीतनामा[6] देवः पर्वतेश्वर एवार्थपरिपन्थी महानराति-रासीत् । तस्मिंश्च[7] राक्षसेनेदमनुष्ठितमिति नास्ति दोष एवात्रेति पश्यामि । पश्यतु कुमारः[8] ।

मित्राणि शत्रुत्वमुपानयन्ती[9] मित्रत्वमर्थस्य वशाच्च शत्रून् ।
नीतिर्नयत्यस्मृतपूर्ववृत्तं जन्मान्तरं जीवत[10] एव पुंसः ॥ ८ ॥

---

कुपितो मलयकेतुर्भागुरायणेन समाधीयते—'तस्मिन्काले सर्वार्थसिद्धिं राजानम्' इत्यादिना 'महानरातिरासीत्' इत्यन्तेन ग्रन्थेन ॥ ७ ॥

मित्राणीति । जन्मान्तरे पूर्वजन्मवृत्तं यथा न स्मर्यते तथा जीवत एव पुंसः राजतन्त्रनीतिवशात्पूर्वोपकृतादि विस्मार्यत्वेन प्रसज्यत इति भावः ॥ ८ ॥

---

१ °नाक्षितो° B. E. २ आत्मग° E; M. R. G. om. °स्य. ३ °न संस्थम्. E; G. reads कुमारं after किंचित्. ४ R. has अस्त्र...हाराणाम्. ५ लोकाना° E. ६ G. om सु. ७ B. N. add काले after this; G. om. च. नातिदोषमिवात्र पश्यामि B. E. N. ८ हि before कुमारः in A. P. E. ९ °मिवान° B. N.; मप्य-र्थव° for मर्थस्य व° B. N. १० जीवित P. R.

तदत्र वस्तुनि नोपालम्भनीयो[1] राक्षसः। आ नन्दराज्यलाभा-[2]दुपग्राह्यश्च। परतश्च परिग्रहे वा परित्यागे वा कुमारः प्रमाणम्।

मलयकेतुः—एवं[3] सखे, सम्यग्दृष्टवानसि। यतोऽमात्यवधेऽप्रकृतिक्षोभः स्यादेवं च संदिग्धो विजयः[4]।

(प्रविश्य।)

पुरुषः—जेदु[5] कुमारो। अज्ज, गुम्भट्ठाणाधिकिदो दीहरक्खो[6] विण्णवेदि—'एसो खु अम्हेहिं कडआदो णिक्कमन्तो अगहीदमुद्दो सलेहो पुरिसो[7] गहीदो। ता पच्चक्खीकरेदु णं अज्जो[8]' त्ति। (क)

भागुरायणः—भद्र, प्रवेशय।

पुरुषः—तह[9]। (इतिनिष्क्रान्तः।) (ख)

---

(क) जयतु कुमारः। आर्य, गुल्मस्थानाधिकृतो दीर्घरक्षो विज्ञापयति—'एष खल्वस्माभिः कटकान्निष्क्रामन्नगृहीतमुद्रः सलेखः पुरुषो गृहीतः। तत्प्रत्यक्षीकरोत्वेनमार्यः' इति।

(ख) तथा।

---

तदत्र वस्तुनीति इदं कुपितस्य मलयकेतोः समाधानरूपं पर्युपासनम्।

---

१ वस्तुन्यनुपालम्भ्यो B. E. N.; °न्यनुपा° G. २ °दनुग्रा° B. N. A; °तस्तस्य for °तश्च B. N; om. first वा B. E. N. G; P. has निग्रहे for परित्यागे after this; B. E. N. G. add भविष्यति after प्रमाणम्. ३ Om. G; भवतु after this in B. E. N; E. om. all from सम्यक् to the end of the speech; अन्यथास्य for यतः B. E. N. which om. अमात्य. ४ B. E. N. add स्यादस्माकम्. ५ जअदु जअदु B. N.; जयदु जयदु G. E; °लो for °रो P; after this अअं. B. N.; अयं E; जस्स for °ज B. E. N.; गुम्मछ्ठणा° for गुम्भट्ठाणा° P; णाहिकि M. R. ६ °हचक्खू अज्जं. B. N.; क्खु B. E. N. G.; कडि° for कड R.; कंडवाया E; णिक्ख for णिक E.; गि for ग M; E. has य for द. ७ पुरुषो A.; पुरुसो M. R. G.; गि for ग M. P. R. E.; णं Om. E. ८ Om. त्ति A. P. ९ तथेति A. P. G.; जं अज्जो आणवेदित्ति B. N.; जं...दि E.

( ततः प्रविशति पुरुषेणानुगम्यमानः संयतः[1] सिद्धार्थकः । )

**सिद्धार्थकः**—( स्वगतम्[2] ।)

आणंतीए[3] गुणेसु दोसेसु परंमुहं कुणन्तीए ।
अह्मारिसजणणीए[4] पणमामो सामिभत्तीए ॥ ९ ॥ (क)

**पुरुषः**—अज्ज, अअं सो पुरिसो[5] । (ख)

**भागुरायणः**—(नाट्येनावलोक्य[6] ।) भद्र, किमयमागन्तुक आहोस्विदिहैव[7] कस्यचित्परिग्रहः ।

**सिद्धार्थकः**—अज्ज, अहं खु[8] अमच्चरक्खसस्स सेवओ । (ग)

---

(क) आनयन्त्यै गुणेषु दोषेषु पराङ्मुखं कुर्वत्यै ।
अस्मादृशजनन्यै प्रणमामः स्वामिभक्त्यै ॥ ९ ॥

(ख) आर्य, अयं स पुरुषः ।

(ग) आर्य, अहं खलु अमात्यराक्षसस्य सेवकः ।

---

अतःपरमङ्कसमाप्तिपर्यन्तं प्रथमेऽङ्के 'किमत्र लिखामि' इत्यादिना 'कर्णे एवमिव' इत्यन्तेन ग्रन्थेनोपक्षिप्तस्य बीजस्यानेकधा प्रकीर्णस्यैकार्थीकरणबीजोपगमनस्यैव संधेरङ्गस्य प्रपञ्चः । आणंतीए इति । दोषवति कार्ये प्रवृत्त्यापि दोषे पराङ्मुखं दोषानगणयन्तं कुर्वत्यै प्रत्युत गुणेष्वानयन्त्यै गुणपक्ष एव पातयन्त्यै सर्वतो गरीयस्यै स्वामिभक्त्यै नमः। स्वामिभक्तिवशात्स्वामिकार्यसिद्ध्यर्थमनुचितमपि क्रियमाणं गुणपक्ष एव भवति न पुनर्दोषपक्ष इति भावः । स्वामिभक्त्यै इति 'क्रियया यमभिप्रैति स संप्रदानम्' इति संप्रदानत्वम् ॥ ९ ॥

---

१ संयमितः R; om. G. २ आत्मग° E. ३ जाणं° N.; तिप्य° B. करन्तीए for कुणन्तीए B. E. N. G. ४ अह्मारिसाणं E.; जणजणणीए R. E.; अह्मारिसओ M. ५ उपसृत्य before this B. N.; अयं for अअं R. E; पुर° for पुरि° R.; पुरु° A. M. ६ M. G. om. ना-भद्र; A. has विलोक्य instead; E. adds पुरुषम् after अवलोक्य; E. om. अयम्. ७ E.om इहैव. ८ क्खु B. E. N. G.; अमात्य. A.; सेवको G.; पासपलिवत्ति B. (सेवओ as a variant) सेवेगो P.

भागुरायणः—भद्रं[1], तत्किमगृहीतमुद्रः कटकान्निष्क्रामसि।

सिद्धार्थकः—अज्ज, कज्जगोरवेण[2] तुवराविदोह्मि। (क)

भागुरायणः—कीदृशं तत्कार्यगौरवं यद्राजशासनमुल्लङ्घयति[3]।

मलयकेतुः—सखे[4] भागुरायण, लेखमपनय।

भागुरायणः—(सिद्धार्थकहस्ताद्गृहीत्वा[5] पत्रमुद्रां दृष्ट्वा।) कुमार, अयं लेखः। राक्षसनामाङ्कितेयं[6] मुद्रा।

मलयकेतुः—मुद्रां परिपालयन्नुद्घाट्य[7] दर्शय।

(भागुरायणस्तथा कृत्वा दर्शयति।)

मलयकेतुः—(वाचयति[8]।) स्वस्ति यथास्थानं कुतोऽपि कोऽपि कमपि पुरुषविशेषमवगमयति[9]। अस्मत्प्रतिपक्षं निराकृत्य दर्शिता कापि सत्यता[10] सत्यवादिना। सांप्रतमेतेषामपि प्रथममुपन्यस्तसंधी-

---

(क) आर्य, कार्यगौरवेण त्वरायितोऽस्मि।

---

मुद्रां परिपालयन्निति लेखस्य धारणपेटिकायाश्च मुद्रापरिपालनं राक्षसमुद्रया सह संवाददर्शनार्थम्।

स्वस्ति यथेति। अस्मत्प्रतिपक्षस्य चाणक्यस्य निराकरणं पूर्वमेव त्वया प्रतिज्ञातमासीत्।

---

१ Om. P; °त्किमर्थमगृ° B. E. N. G.; त्किं न गृ° P; कटान्नि° G. २ गौर° E. G; तुराविदो for तुवरा° N; °ह्मि तुवराइदो B. E. (वि for इ); G. has तुरवामो. ३ °यसि B. ४ M. om. स...ण; E. om. सखे; °मुपान° for °मपन° B. N.; मपनीय G; B. N. add after this सिद्धा°। भागुरायणाय लेखमर्पयति. ५ B. E. N. read लेखं before गृही°; B. E. N. om पत्र. ६ माङ्केयं E. ७ °न्नुद्वेश्य G.; न्नुद्वेष्टय E. ८ B. N. add गृहीत्वा before this; G. om. this; स्थाने for स्थानं B. E. N. G; कुतोऽपि om. in E. ९ P. adds यथा here; °स्मद्विपक्षं for स्मत्प्रतिपक्षं B; B. E. G. om. कापि. १० N. and P. om. सत्यता; B. reads सत्यवादितां सत्यवत्ता; E. agrees omitting सत्यवत्ता; B. N. read एषाम् for एतेषाम्.

नामस्मत्सुहृदां [1]पूर्वप्रतिज्ञातसंधिपरिपणनप्रोत्साहनेन सत्यसंधः प्रीतिमुत्पादयितुमर्हति । एतेऽप्येवमनु[2]गृहीताः सन्तः स्वाश्रयविनाशेनोपकारिणमाश्रयिष्यन्ति । अविस्मृतमे[3]तत्सत्यवतः स्मारयामः । एतेषां मध्ये केचिद्रेः [4]कोषदण्डाभ्यामर्थिनः केचिद्विषयेणेति । अलंकारत्रयं च सत्यवता [5]यदनुप्रेषितं तदुपगतम् । मयापि लेखस्याशून्यार्थं किंचिदनुप्रेषितं [6]तदुपगमनीयम् । वाचिकं चाप्ततमादस्माच्छ्रोतव्यमिति ।

**मलयकेतुः**—[7]भागुरायण, कीदृशो लेखः ।

**भागुरायणः**—[8]भद्र सिद्धार्थक, कस्यायं लेखः ।

**सिद्धार्थकः**—अज्ज, ण [9]आणामि । (क)

---

(क) आर्य, न जानामि ।

---

किलेति बलादापादनार्थम् । अस्मत्सुहृदां कौलूतादीनामित्यर्थः ।

संधिपरिपणनस्य संधिसमये पूर्वदित्सितस्य प्रोत्साहनम् । अवश्यं दास्यामीत्याश्वासनम् ।

अविस्मृतमिति । सत्यवत्त्वात्त्वं न विस्मरस्यथापि स्मारयाम इत्यर्थः ।

लेखस्येति । रिक्तहस्तेन प्रभुं प्रति लेखो न लेख्य इत्याचाराल्लेखसाद्गुण्यार्थं किंचित्प्रेषितमिति भावः ।

भागुरायण इति कं प्रति केन लिखितमिति प्रष्टव्यमिति भावः ।

---

१ पूर्वसंप्र° M. R. G.; °पूर्वं प्र E.; संबन्धि for संधि M. R. G; B. N. read °पणवस्तुप्रतिपादनप्रो° for पणनप्रो°; G. E. om. °न in °पणन. २ ह्येवमुपगृ° B.; °मुपगृ° E. N. R; °नैवोप B. E. N; °माराधयिष्यन्ति for °माश्रयि° B. N. E. G; °माश्रयन्ति A. P. ३ B. E. N. add अपि before एतत्; स्मारयामि B.; स्मारयामः E.; °त्सत्यमारचयामः R.; Om. मध्ये E.; मध्यात् N. G.; °दपरे for °दरेः R. ४ कोश E.; दन्ति° for दण्डा°. B; B. N. read अस्मान्प्रति before अलंकार. ५ B. N. read यत् before सत्य°; अस्माभिरपि for मयापि B. N. ६ G. reads तिष्ठति before तत्; B. E. N. G. read सिद्धार्थकात् for अस्मात्; E. has प्रत्येतव्यम् for श्रो°. ७ B. E. N. G. read सखे before this. लेखार्थः for लेखः B. N. ८ Om. R; R. om. क. in सिद्धा°. ९ णजा° M. P. णयाणा° E.; णयामि. N.

**भागुरायणः**—हे धूर्त, लेखो नीयते न ज्ञायते कस्यायमिति । सर्वं तावत्तिष्ठतु । वाचिकं त्वत्तः केन श्रोतव्यम् ।

**सिद्धार्थकः**—(भयं नाटयन् ।) तुझेहिं । (क)

**भागुरायणः**—किमस्माभिः ।

**सिद्धार्थकः**—मिस्सेहिं गिहीदो ण आणामि किं भणामि त्ति । (ख)

**भागुरायणः**—(सरोषम् ।) एष जानासि । भासुरक, बहिर्नीत्वा तावत्ताड्यतां यावत्कथयति ।

**पुरुषः**—जं अमच्चो आणवेदि त्ति । (तेन सह निष्क्रम्य ।) (ग)

---

(क) युष्माभिः ।

(ख) मिश्रैर्गृहीतो न जानामि किं भणामीति ।

(ग) यदमात्य आज्ञापयतीति ।

---

वाचिकमिति । वाचिकं त्वत्तः केन श्रोतव्यमिति पृष्टे प्रस्तुतत्वाच्चन्द्रगुप्तेनेत्येव वक्तव्यत्वेन प्रसक्तेऽपि युष्मच्छ्रवणगोचरीकर्तुमेवायं सर्वः समारम्भ इति गूढाभिसंधिः ।

युष्माभिरित्यर्धोक्त्या उत्तरयति । श्रोतव्यमिति वाक्यशेषो गूढः ।

उक्तमुत्तरं ताडनव्याजेनान्यथयति—मिश्रैरित्यादिना । अत्र युष्माभिरिति पूर्वोक्तमन्वेतव्यम् । मिश्रशब्दः पूज्यवचनः ।

---

१ M. P. R. om. हे धूर्त; A. om. हे; B. G. A.add च before ज्ञायते, E. च त्वया; B. E. R. G. om. अयम्. २ M. R. om. तावत्. ३ Om. E; तुहेहिं for तुझेहिं E. ४ B. G. read तुह्मोहिं; E. तुहेहिं; N. मिस्सहिं; the following word is गही° B. M. R. G; नयाणा° for ण आणा° E.; णजाणा° P; का कधेति for किं ...मित्ति B. G.; किं...मीति P. ५ सक्रोधम् B. E. N; न जा° for जा° A. P; ज्ञास्यसि. B. E. N. which add भद्र after जानासि. ६ तावत् after ताड्य° B. E. N.; यावत्सर्वमनेन कथितं भवेत् B. N.; यावत्कथयितव्यमनेनेति E. ७ अज्जो B. E. N; °दीति for दित्ति P; सिद्धार्थकेन for तेन B. E. N; G. om. it; निष्क्रान्तः for निष्क्रम्य B. N. G.

(पुनः प्रवि[1]श्य ।) अज्ज, इअं मुद्दालंच्छिदा पेडिआ तस्स [2]कक्खादो णिवडिदा । (क)

**भागुरायणः**—(विलोक्य ।) [3]कुमार, इयमपि राक्षसमुद्राङ्कितैव ।

**मलयकेतुः**—[4]सखे, अयं लेखस्याशून्यार्थो भविष्यति । इमामपि मुद्रां परिपालयन्नुद्घाट्य दर्शय ।

(भागुरायणस्तथा कृत्वा दर्शयति ।)

**मलयकेतुः**—(विलोक्य ।) [5]अये, तदिदमाभरणं मया स्वशरीराद्वतार्य [6]राक्षसाय प्रेषितम् । व्यक्तं चन्द्रगुप्तस्य लेखः ।

**भागुरायणः**—[7]कुमार, एष निर्णीयत एव संशयः । भद्र, पुनरपि ताड्यताम् ।

**पुरुषः**—[8]तथा ।(इति निष्क्रम्य सिद्धार्थकेन सह पुनः प्रविश्य ।)

---

(क) आर्य, इयं मुद्रालाञ्छिता पेटिका तस्य कक्षातो निपतिता ।

---

व्यक्तं चन्द्रगुप्तस्येति । राजार्हाभरणप्रेषणाच्चन्द्रगुप्तं प्रति राक्षसेन प्रेषित इत्यर्थः ।

---

१ E. adds च here; इयं for इअं B. E. N. G. after which B. E. add तस्स ताडीअ (डिय E.) माणस्स णाम (om.E.); पेडआ for पेडिया A., पेदिआ M; °लंछियपिसाविया E; B. G. read लक्खिदा for लंच्छिदा adding आहरण before पे°. २ त...दो Om. in B. E. N. G; निब° for णिव° E.; णिबद्दिदा A. P.; ताडिअं तस्स after णिव° in N. ३ Om. R. ४ Om. B. E. N. R; स लेखो अशू° for लेखस्याशू° E. ५ B. E. N. add यत् before this.; M. om. this. ६ A. P. G. add यत् after राक्षसाय. E. adds आसीत् after प्रेषितं; B. N. add अयम् before लेखः. ७ Om. R. G. E; B. E. N. G. om. एव. G. adds न before संश°; M. has मया before निर्णी°. ८ तहेति M. R.; जं अज्जो आणवेदित्ति B. E. N.; °ष्क्रान्तः for °ष्क्रम्य E; सि-ह om. in B. E. N.; G. has °शति for °श्य; B. adds च after that.

एसो खु ताडिअमाणो कुमारस्स एव्व णिवेदेमित्ति भणादि। (क)

**मलयकेतुः**—तथा भवतु।

**सिद्धार्थकः**—(पादयोर्निपत्य।) अभएण मे पसादं करेदु अज्जो। (ख)

**मलयकेतुः**—भद्र, अभयमेव परवतो जनस्य। निवेद्यतां यथावस्थितम्।

**सिद्धार्थकः**—णिसामेदु कुमारो। अहं खु अमच्चरक्खसेण इमं लेहं देइअ चन्दउत्तसआसं पेसिदो। (ग)

**मलयकेतुः**—वाचिकमिदानीं श्रोतुमिच्छामि।

**सिद्धार्थकः**—कुमाल, आदिट्ठोह्मि अमच्चेण जहा एदे मह

---

(क) एष खलु ताड्यमानः कुमारस्यैव निवेदयामीति भणति।

(ख) अभयेन मे प्रसादं करोत्वार्यः।

(ग) निशामयतु कुमारः। अहं खल्वमात्यराक्षसेनेमं लेखं दत्त्वा चन्द्रगुप्तसकाशं प्रेषितः।

(घ) कुमार, आदिष्टोऽस्म्यमात्येन यथैते मम वयस्याः पञ्च राजानस्त्वया

---

१ B. E. N. have अज्ज before एसो; ताडि° for °ताडि B. E. N. which add विण्णवेदि after this word; °लस्स for °रस्स A. P; B. N. add स्सयं after कुमारस्स; E. अहं; जेव for एव्व B. E. N; एव P; विण्णवेमि for णिवेदेमि E. २ om. भणादि B. E. N. G. ३ B. E. N. read प्रवेशय for तथा...तु. ४ Before this B. N. and E. read पुरु। जं कुमारो आणवेदित्ति (E. om. त्ति). निष्क्रम्य सिद्धार्थकेन सह प्रविशति (E. has पुनः प्रविष्टः.); अभयेन E.; अभयेण P; E. om. the following मे.; B. E. have कुमारो before पसादं and omit अज्जो at end of the sentence; E. reads °रेदु for °रेदु. ५ Twice in B. N; परतो for परवतो A. G.; परायत्त B. N; B. N. have तत् before °निवे°. ६ P. reads यथास्थितम्; A. य—तः; M. R. यथावत्स्थितम्. ७ °लो. P.; इदं for इमं R. ७ देइय G. E.; A. P. read °उत्तस्स स for °उत्तस°; B. has सकासं; E. सयासं; B. N. add ह्मि at the end. ८ B. N. have भद्द before this; E. अत्र. ९ कुमार B. E; for next word B. G. read संदि°; °ष्टो for ट्ठो A; °चरक्खसेण for °च्चेण B. G.; B. G. read जधा एते for जहा एदे; मम for मह B. E. G. which and N. read पिअ (य E.) after it; the next word is वयस्सा P., वस्सआ N., अवस्सका G., वयसका E.

वअस्सा पञ्च राआणो[1] तुए सह समुप्पण्णसिणेहा । ते जहा कुलूदाहिवो[2] चित्तवम्मो मलअणअराहिवो सिंहणादो कह्मीरदेसणाहो पुक्खरक्खो[3] सिन्धुराओ सिन्धुसेणो पारसीओ मेहणादोत्ति । एदेसु[4] पुढमगिहीदा तिण्णि राआणो मलअकेदुणो विसअं इच्छन्तिं[5] अवरे हत्थिबलं कोसं अ । ता जह चाणक्कं णिराकरिअ महाभाएण[6] मह पीदी समुप्पादिदा तहा एदाणं पि पुढमभणिदो अत्थो

---

सह समुत्पन्नस्नेहाः । ते यथा कुलूताधिपश्चित्रवर्मा मलयनगराधिपः सिंहनादः काश्मीरदेशनाथः पुष्कराक्षः सिन्धुराजः सिन्धुसेनः पारसीको मेघनाद इति । एतेषु प्रथमगृहीतास्त्रयो राजानो मलयकेतोर्विषयमिच्छन्त्यपरौ हस्तिबलं कोषं

---

१ राया° E.; राआ N.; राअ G; B. G. have पढम before समु°; and G. has सहज for सह; संधाणा for °सिणेहाते B; संधारणात्तं N.; संधाणातं E. G. For जहा. R. has जह. २ कुल्वता° N.; कौलु° E; °वम्मा for वम्मो B. E. G.; व्वम्मो N; °अजणबदाधिबो for °अणअराहिवो B.; आहिबो G.; मलयजणाहिबो E.; म...धिबो P. M; सींह for सिंह B. E. G; °नादो. E. N.; °णाहो R; कस्मी° for कह्मी° B.; कीसर° G.; कीर N.; कमीर° P. ३ पुष्क° A. P.; पुक्करको N; °रायो for °राओ E; °सिणो for °सेणो P; °रेणो E; For पा—ओ. G. has पा—आओ; B. and E. पारसीआ (या E.) धिबदी; B. reads मेहक्खो for मेहणादो; G. M. and R. मेअणादो. ४ एत्थ जेव्व B.; एत्थ एदे G. N.; एत्थजे E. For the next word पढ°. B. E. N. G; गहि° for गिही° N. R. M.; गणि° G.; भणि° B; राया° for राआ° E. which also reads तिन्नि for तिण्णि; G. and N. read next word मलयकेउ (वु N.) णो. ५ °च्छन्दि R. M.; this is only variant for अहिलसन्ति in B; the next word is इदरे B.; इयरे G. E; after it N. has त्वि; G. द्वावेवि; E. दुवेपि; B. विदुवे; B. has कोस before हत्थि. and त्ति for कोसं अ; E. has त्ति for कोसं अ; G. om. it; R. M. om. ता; G. N. have तजहा; B has ता जधा and E. ता यधा; णिक्कारि° for णिराकरि° G;... °रिय E. ६ °भागे° E.; °राय° B.; मम प्पीदी B.; मम पीई. G. E.; मह पीई N; उप्पादिआ B.; उ...दा. N; तधा for तहा B. E. G.; तदा N.; त्ति for पि R. M.; om. E; the next word is पढ° B. P. G. E.; यम (?) N.

संपादइदव्वोत्ति[1] एत्तिओ वाआसंदेसो। (घ)

**मलयकेतुः**—(स्वगतम्।) कथं चित्रवर्मादयोऽपि मह्यमभिद्रुह्यन्ति[2]। अथवात एव राक्षसे निरतिशया प्रीतिः। (प्रकाशम्।) विजये, राक्षसं[4] द्रष्टुमिच्छामि।

**प्रतीहारी**—जं कुमारो[5] आण्णवेदि त्ति। (निष्क्रान्ता।)

(ततः प्रविशत्यासनस्थः स्वभवनगतः पुरुषेण सह[6] सचिन्तो राक्षसः।)

**राक्षसः**—(आत्मगतम्।) पूर्णमसद्बलं[7] चन्द्रगुप्तबलैरिति यत्सत्यं न मे मनसः परिशुद्धिरस्ति[8]। कुतः।

साध्ये निश्चितमन्वयेन घटितं बिभ्रत्सपक्षे[9] स्थितिं
व्यावृत्तं च विपक्षतो भवति यत्तत्साधनं सिद्धये।

---

च। तद्यथा चाणक्यं निराकृत्य महाभागेन मम प्रीतिः समुत्पादिता तथैतेषामपि प्रथमभणितोऽर्थः संपादयितव्य इत्येतावान्वाक्संदेशः।

---

पूर्णमस्मद्बलमिति। चन्द्रगुप्तबलैर्भद्रभटप्रभृतिभिरस्मद्बलं व्याप्तमिति कृत्वा मनो मे संदिग्धमिति भावः।

साध्ये निश्चितमिति। साध्ये सिद्धिविषये पक्षे निश्चितमसंदिग्धमन्वयेनान्वयव्याप्त्या घटितं विशिष्टं सपक्षे महानसादौ विद्यमानं विपक्षाद्ध्रदाद्व्यावृत्तं धूमरूपं साधनं हेतुः सिद्धये वह्न्यनुमितये समर्थं भवति। एवं चाणक्यनीतिरूपं साधनं साध्ये चन्द्रगुप्तलक्ष्मीस्थिरीकरणरूपे निश्चितमवश्यसाधकत्वेनाध्यवसितमन्वयेन व्यतिरेकव्याप्त्या च घटितं मौर्यप्रतिष्ठापननन्दोन्मूलनादिना दृष्टसारमिति यावत्सपक्षे भद्र-

---

१ पसादइदव्वो B.; संपादयव्वो E.; संपदइत्ति P; °त्तिको for °त्तिओ B.; °दिओ G. N; for the next word E. has वाया.; B. N. G. राअ; B. adds त्ति after °सो; N. reads संदेशो. २ Om. in A. P; माम° for मह्य° B. G. N. ममा° E. ३ °ह्यन्ते R; the next word अथवा om. in B. N; after it सत्यम् in A. P; एतेषाम् after अथ एव in B. N.; तेषाम् G. E. ४ अमात्य before this B. N. ५ °लो. P. which has दीति for दित्ति at end. ६ B. N. read अनुगम्यमानः for सह. ७ स्व° B. N.; आपू° for पू° E.; संपू° B. N. ८ B. E. N. om. परि; P. has °रिति for °रस्ति. ९ स्व B. E. N. M.

यत्साध्यं स्वयमेव तुल्यमुभयोः पक्षे विरुद्धं च य-
त्तस्याङ्गीकरणेन वादिन इव स्यात्स्वामिनो निग्रहः ॥ १० ॥

अथवा। विज्ञातापरागहेतुभिः प्राक्परिगृहीतोपजापैरापूर्णमिति न विकल्पयितुमर्हामि। (प्रकाशम्।) भद्र प्रियंवदक, उच्यन्तामस्मद्वचनात्कुमारानुयायिनो राजानः। संप्रति दिने दिने प्रत्यासीदति कुसुमपुरम्। तत्परिकल्पितविभागैर्भवद्भिः प्रयाणे प्रयातव्यम्। कथमिति।

---

भटभागुरायणादौ स्थितिं बिभ्रद्विपक्षान्मलयकेतोर्व्यावृत्तं सत्सिद्धये मौर्यलक्ष्मीस्थैर्याय समर्थं भवति इति दार्ष्टान्तिके योजनीयम्। यत्साधनं स्वयमेव साध्यं साध्याभिन्नं यथा ज्ञानं प्रमाणं तद्वति तत्प्रकारकत्वात्। अत्र साधनं साध्येन प्रामाण्येनाभिन्नं समम्। यच्च साधनमुभयोः सपक्षविपक्षयोः वृत्तिमत्त्वेन व्यावृत्तत्वेन वा तुल्यम्। आद्ये उदाहरणं शब्दपक्षकानित्यत्वसाधकप्रमेयत्वं तत्र प्रमेयत्वं सपक्षे घटादौ विपक्षे आकाशादौ च वृत्तिमत्त्वेन तुल्यम्। द्वितीये शब्दपक्षकानित्यत्वसाधकशब्दत्वं सपक्षे घटादौ विपक्षे गगनादौ च व्यावृत्तत्वेन तुल्यम्। यच्च साधनं पक्षे विरुद्धं साध्यासमानाधिकरणम्। यथा शब्दपक्षकनित्यत्वसाधककृतकत्वम्। अत्र कृतकत्वं हेतुः पक्षे शब्दे विरुद्धः साध्येन नित्यत्वेनासमानाधिकरणः। नित्यत्वविरुद्धस्यानित्यत्वस्य साधक इति यावत्। एवमुक्तप्रकारं त्रिविधं यत्साधनं हेत्वाभासस्तस्याङ्गीकरणेन वादिनो निग्रहः पराभवः स्यात्। एवं प्रकृतेऽपि मलयकेतुबलं भद्रभटादिभिराक्रान्तत्वादुभयत्र तुल्यवदाभासमानं वस्तुतः पक्षे मलयकेतौ भद्रभटाद्यंशेन विरुद्धमत एव स्वयमेव साध्यकोटिप्रविष्टमस्मदिष्टं साधयेद्वा न वेति संदिग्धमिति यावत्। एतादृशबलाभासाङ्गीकरणेन स्वामिनो राक्षसमलयकेत्वोर्निग्रहोऽवश्यं भावीति दार्ष्टान्तिकेऽवश्यं योजनीयम् ॥१०॥

एवं संदिह्य पुनः समाधत्ते—अथवेति। अस्माभिर्विज्ञाताश्चन्द्रगुप्ताप-

---

१ तैस्तैः before this B. N. २ B. G. N. om. भद्र. ३ अतः प° B. N.; यतस्तत् G. E. (which omits the following परि); प्रवि for वि° E; विभवै M. R. ४ प्रस्था° B. N.

प्रस्थातव्यं पुरस्तात्खश[1]मगधगणैर्मामनु व्यूह्य सैन्यै-
गान्धारैर्मध्ययाने सयवनपतिभिः संविधेयः प्रयत्नः।
पश्चात्तिष्ठन्तु[2] वीराः शकनरपतयः संभृताश्चीणहूणैः
कौलूता[3]द्यश्च शिष्टः पथि पथि वृणुयाद्राजलोकः कुमारम् ॥११॥

**प्रियंवदकः**—[4]तह इति। (निष्क्रान्तः।) (क)

(प्रविश्य।)

**प्रतीहारी**—जेदु अमच्चो। अमच्च, इच्छदि तुमं कुमारो पेक्खिदुं। (ख)

**राक्षसः**—भद्रे, मुहूर्तं[6] तिष्ठ। कः कोऽत्र भोः।

(प्रविश्य।)

**पुरुषः**—आणवेदु अमच्चो। (ग)

**राक्षसः**—[7]उच्यतां शकटदासः। यथा परिधापिता कुमारेणाभरणानि [8]वयम्। तन्न युक्तमनलंकृतैः कुमारदर्शनमनुभवितुम्। [9]अतो यत्तदलंकरणत्रयं क्रीतं तन्मध्यादेकं दीयतामिति।

(क) तथेति।
(ख) जयत्वमात्यः। अमात्य इच्छति त्वां कुमारः प्रेक्षितुम्।
(ग) आज्ञापयत्वमात्यः।

रागहेतवो येषां तैः प्राक्परिगृहीतोऽस्माकमुपजापो यैस्तथाभूतैस्तैर्भद्रभटादिभिरापूर्णमिति न संशयितव्यमिति भावः।

१ खस B. E. N.; सह M. R. G.; व्यूढ for व्यूह्य B. N.; व्यूत P. २ °द्रुच्छन्तु. B. N.; संवृताः for संभृताः B. E. N. The next word is चेदि in B. N.; क्षीन. R. G.; सर्व E. ३ °द्यो विशि° E.; परिवृ° for पथिवृ° B. N. E. ४ B. G. and E. read जं अमच्चो (अय्यो E.) आणवेदित्ति.; M. has पुरु° तहेत्ति; G. E. have पुरु for प्रियं. ५ Om. P; जअदुजअदु for जेदु B. N. (य for अ G. E); °च्चं for °च्च B. N. omiting तुमम् afterwards for which E. has दे. ६ Om. A. ७ G. adds अस्मद्वचनात् after this; B. E. N. read भद्र शकटदासं प्रति (Om. E.) ब्रूहि; R. M. om. यथा. ८ वयमाभरणं कुमारेण B. N.; वय...णानि कु° E; तदयुक्त° for तन्नयुक्त° N. E.; इदानीमस्माभिः is added before अनलं by A. B. N; इदानीम् is in E. after अन°. ९ Om. R. M.; यतो E. and P. which also has अलंकारत्रयं further on.

पुरुषः—[1]तथा। (इति निष्क्रम्य पुनः प्रविश्य।) अमच्च, इदं आहरणं[2]। (क)

राक्षसः—([3]नाट्येनात्मानमलंकृत्योत्थाय च।) भद्रे, राजो-[4]पगामिनं मार्गमादेशय।

प्रतीहारी—[5]एदु अमच्चो। (ख)

राक्षसः—([6]आत्मगतम्।) अधिकारपदं नाम निर्दोषस्यापि पुरुषस्य महदाशङ्कास्थानम्। कुतः।

भयं तावत्सेव्यादभिनिविशते सेवकजनं
ततः प्रत्यासन्नाद्भवति हृदये चै[7]वं निहितम्।
[8]ततोऽध्यारूढानां पदमसुजनद्वेषजननं
[9]गतिः सोच्छ्रायाणां पतनमनुकूलं कलयति॥ १२॥

---

(क) अमात्य, इदमाभरणम्।
(ख) एत्वमात्यः।

---

भयं तावदिति। भयं कर्तृ सेव्याद्राज्ञः सकाशात्सेवकजनमभिनिविशते अभितः सर्वतः प्राप्नोति। 'नेर्विशः' इति तङ्। ततः राजप्रत्यासन्नाद्भयं भवति। तस्मात्कारणादध्यारूढानामधिकारिणां पदमसुजनानां दुर्जनानाम्। यद्वा असुमज्जनानां प्राणिमात्रस्येति यावत्। द्वेषजननं भव-

---

१ जं अमच्चो (अज्जो E.) आणवेदि त्ति (om E.) B. E. N.; तहेत्ति M.; निष्क्रान्तः for निष्क्रम्य G.; °विशति for प्रविश्य A. P.; °श्य च B. N.; श्य °पुरुषः E. omitting अमच्च. २ इममलंकरणं E.; इदं तं अलंक°. B. N.; एदं आ° P ३ B. E. N. G. have अवलोक्य; A. P. आभरणम् after नाट्येन; R. M. P. om. च; for भद्रे B. N. read भद्र. ४ °जकुलगा° B. E. N. ५ एदु एदु B. E. N. G.; अज्जो for अमच्चो P. ६ B. N. read स्वगतम्; P. om. it; G. E. read हि before नाम; R. P. om. कुतः in next line. ७ °येष्वेव B. E. N. A. ८ अतो° B. N.; °तोप्यारू° E.; °मनुजन° for मसुजन° G. ९ मतिः B. E. N. G.; °नुरूपं for °नुकूलं E.

(परिक्रम्य।)

**प्रतीहारी**—अमच्च, अअं कुमारो। उपसप्पदु णं अमच्चो। (क)

**राक्षसः**—(विलोक्य।) अयं, कुमारस्तिष्ठति। य एष

पादाग्रे दृशमवधाय निश्चलाङ्गीं
शून्यत्वादपरिगृहीततद्विशेषाम्।
वक्त्रेन्दुं वहति करेण दुर्वहाणां
कार्याणां कृतमिव गौरवेण नम्रम्॥ १३॥

(उपसृत्य।) विजयतां कुमारः।

**मलयकेतुः**—आर्य, अभिवादये। इदमासनमास्यताम्।

(राक्षसस्तथा करोति।)

**मलयकेतुः**—आर्य, चिरदर्शनेनार्यस्य वयमुद्विग्नाः।

---

(क) अमात्य, अयं कुमारः। उपसर्पत्वेनममात्यः।

---

ति। उक्तमर्थमर्थान्तरन्यासेन द्रढयति—गतिरिति। सोच्छ्रायाणामुन्नतानां गतिरवस्था अनुकूलमवश्यभावित्वेनोचितं पतनं कलयति। 'पतनान्ताः समुच्छ्रयाः' इति भावः। 'मतिः' इति पाठेऽप्ययमेवार्थः। सर्वदा समुच्छ्रयाद्भीताः पतनमेव चिन्तयेरन्मतिमन्त इत्यर्थः॥ १२॥

पादाग्रे इति। शून्यत्वान्मनोवृत्तिराहित्यादज्ञाततद्विषयविशेषामित्यर्थः॥ १३॥

इदं मलयकेतोः स्वविषयकदौर्मनस्यमजानन्राजकार्यगौरववैयग्र्येण गृह्णाति—आर्य, चिरदर्शनेति। चिरदर्शनेन दर्शनविलम्बकरणेनोद्विग्नाः कार्यत्वरया व्यग्रा इति वाक्यार्थः। त्वद्दर्शनमिदानीमस्माकमरुंतुदमिति गूढम्।

---

१ प्रति° परिक्र° B. N. R; अयं for अअं E.; कुमारो for कुमालो R.; B. N. add चिट्ठदि तां; G. E. चिट्ठदि; उवस° for उपस° R; G. om. णं. २ नाक्ये नावलो° B. E. N. G; अये after this in B. E. N. ३ °लन्तीं B. N.; निखल° E. ४ परे° A P. ५ Twice in B. N. ६ उपविशति B. N.; उपविष्टः E. ७ अमात्य B. N. which read चिरमद° for चिरद°; E. has चिराद.°

**राक्षसः**—कुमार, प्रयाणे[1] प्रतिविधानमनुतिष्ठता मया कुमारादयमुपालम्भोऽधिगतः ।

**मलयकेतुः**—आर्य[2], प्रयाणे कथं प्रतिविहितमिति श्रोतुमिच्छामि ।

**राक्षसः**—कुमार[3] एवमादिष्टा अनुयायिनो राजानः । ('प्रस्थातव्यम्–' (५।११) इति पूर्वोक्तं पठति ।)

**मलयकेतुः**—(स्वगतम्[5] ।) कथं य एव मद्विनाशेन चन्द्रगुप्तमाराधयितुमुद्यतास्त एव मां परिवृण्वन्ति[6] । ( प्रकाशम् । ) आर्य, अस्ति कश्चिद्यः कुसुमपुरं प्रति[7] गच्छति तत आगच्छति वा ।

**राक्षसः**—अवसित[8]मिदानीं गतागतप्रयोजनम् । अल्पैरहोभिर्वयमेव तत्र[9] गन्तारः ।

**मलयकेतुः**—(स्वगतम्[10] ।) विज्ञायते । (प्रकाशम् । ) यद्येवं ततः किमार्येणायं सलेखः पुरुषः प्रेषितः[11] ।

---

कुमारप्रयाणे प्रतिविधानमनुतिष्ठतेतीदमजानानस्योत्तरम् ।

परिवृण्वन्तीति । कौलूताद्याः पञ्च राजान इत्यर्थः ।

विज्ञायत इति । वयमेवात्र चन्द्रगुप्तं निग्रहीतुं गन्तार इति राक्षसस्य ऋजुराशयो मलयकेतुनान्यथा गृहीतः । चन्द्रगुप्तसाचिव्यार्थं गन्तार इति विज्ञायत इति ।

---

१ °णं M. R. २ अमात्य B. N. ३ Om. A. P; B. N. G. read कुमारस्यानु° for अनु°; E. कुमारानु°. ४ मित्यादिश्लोकं पुनः B. N.; प्रस्थातव्यं…सहमगधगणैरिति पठति G.; प्रस्थातव्यं पुरस्तादिति पूर्वोक्तं श्लोकं E. ५ आत्मग° E. after which B. N. add विज्ञायते. ६ °वृणन्ति P. which like R. om. प्रकाशम्. ७ Om. G. E; E. om ततः. ८ B. E. N. read कुमार here; ननु पञ्चषैर° for अल्पैर° B. N.; कतिपयैर° E. ९ Om. P; E. read यास्यामः for गन्तारः. १० आत्मग° E; E. has अयि before यद्येवं; B. N. read तत्किमयमार्येण; E. ततः किमयमार्येण°; M. R. किमार्येणायं; A. and P. om. स and visarga in सलेखः. ११ कुसुमपुरं प्रस्थापितः B. E.

राक्षसः—(विलोक्य[1]।) अये, सिद्धार्थकः। भद्र, किमिदम्।

सिद्धार्थकः—(सबाष्पं[2] लज्जां नाटयन्।) पसीददु अमच्चो। ताडीअन्तेण[3] मए ण पारिदं रहस्सं धारिदुं। (क)

राक्षसः—भद्र, कीदृशं रहस्यमिति[4] न खल्ववगच्छामि।

सिद्धार्थकः—णं[5] विण्णवेमि ताडीअन्तेण मए—(इत्यर्द्धोक्ते सभयमधोमुखस्तिष्ठति।) (ख)

मलयकेतुः—भागुरायण, स्वामिनः पुरस्ताद्भीतो लज्जितो वा[6] नैष कथयिष्यति। स्वयमेवार्यस्य[7] कथय।

भागुरायणः—यदाज्ञापयति कुमारः। अमात्य, एष कथयति यथाहममात्येन[8] लेखं दत्वा वाचिकं संदिश्य चन्द्रगुप्तसकाशं प्रेषित इति।

---

(क) प्रसीदत्वमात्यः। ताड्यमानेन मया न पारितं रहस्यं धारयितुम्।

(ख) ननु विज्ञापयामि ताड्यमानेन मया।

---

'ननु विज्ञापयामि ताडिअन्तेण' इति अस्यार्धोक्तस्य पूरणवाक्यम् 'एवमतिताड्यमानेन' इति वक्ष्यमाणं द्रष्टव्यम्।

---

१ Om. P. and E. which also om. अ…कः; R. reads सि…क and G. om. भ…म्. २ Om. E.; पसीददु twice in B. N. G. which also read प्प° for प.° ३ अमच्च before this B. E. N.; अमच्चस्स before रहस्स B; A. reads धारइदुं and G. धारयिदुं. ४ तत् before this B. N. ५ ननु B. N; E. omits all this from मए down to Siddhárthaka's next speech. N. G. add here ण पारिदं रहस्सं धारिदं अमच्चस्स. ६ °जितश्च B. E. N. For नैष A. reads नैव. ७ B. E. N. read अतः and G. यतः before this.; B. E. N. G. read आर्याय for आर्यस्य. ८ °त्यराक्षसेन B. E. N; अहम्. om. P; च before संदिश्य. B. E. N.

राक्षसः—भद्र सिद्धार्थक, अपि सत्यम् ।

सिद्धार्थकः—(लज्जां नाटयन् ।) एवं अतिताडिअन्तेन मए[1] णिवेदिदं । (क)

राक्षसः—[2]अनृतमेतत् । ताड्यमानः पुरुषः किमिव न ब्रूयात् ।

मलयकेतुः—[3]सखे भागुरायण, दर्शय लेखम् । वाचिकमेष भृत्यः कथयिष्यति ।

भागुरायणः—अमात्य, अयं लेखः[4] ।

राक्षसः—(वाचयित्वा[5] ।) कुमार, शत्रोः प्रयोग एषः ।

मलयकेतुः—लेखस्याशून्यार्थमार्येणेदमप्याभरणमनुप्रेषितम्[6] । तत्कथं शत्रोः प्रयोग एषः[7] ।

राक्षसः—(आभरणं निर्वर्ण्य[8] ।) कुमारेणैतन्मह्यमनुप्रेषितम् । मयाप्येतत्कस्मिंश्चित्परितोषस्थाने सिद्धार्थकाय दत्तम् ।

---

(क) एवमतिताड्यमानेन मया निवेदितम् ।

---

१ °यति G. after which B. A. read एदं; E. इमं; G. N. एअं and B. E. M. om. अति; B. E. read ताडी°. २ B. E. N. G. read कुमार before this. B. E. N. om. पुरुष and B. N. also om. इव further on and E. has इति for इव. ३ B. E. N. om. सखे; G. om. भागु°; B. N. read चायमस्मै स्वभृ° for एष भृ°; E. has अप्ययमेवास्य भृ°.; P. has कथयति. ४ B. N. read श्रुत्वा लेखमवलोकयन् । स्वस्ति यथास्थाने कुतोपि कोपि कमपि पुरुषमवगमयति इति वाचयति. ५ B. N. G. A. P. om. this.; B. N. read कुमार twice. ६ °र्येणेदमाभरणजातं प्रेषितम्. N; अपि om. in B. G; before अनुप्रे° in M. R; B. N. add इति after this. ७ B. N. read एषः स्यात् । इत्याभरणं दर्शयति. ८ R. notes निर्दिश्य as a variant here. G. has मम for मह्यम्; A. reads कुमार नैतन्मया प्रेषितम् । कुमारेणैतन्मह्यमनुप्रेषितम्; B. N. read कुमार नैतन्मयानुप्रेषितम् । एतद्धि कुमारेण मह्यं दत्तं मया &c.; E. reads कुमार नैतन्मयानुप्रेषितम् ॥ मया &c.; for अप्येतत्कस्मिंश्चित्. B. N. read च; E. reads पारितोषिक for परितोष.; G. reads प्रदत्तम् for दत्तम्.

भागुरायणः—ईदृशस्य[1] विशेषतः कुमारेणात्मगात्रादवतार्य प्रसादीकृतस्येयं परित्यागभूमिः।

मलयकेतुः—वाचिकमप्यार्येणास्माच्छ्रोतव्यमिति[2] लिखितम्।

राक्षसः—कुतो[3] वाचिकं कस्य वाचिकम्। लेख एवास्मदीयो न भवति।

मलयकेतुः—इयं तर्हि कस्य[4] मुद्रा।

राक्षसः—कपटमुद्रामुत्पादयितुं[5] शक्नुवन्ति धूर्त्ताः।

भागुरायणः—कुमार, सम्यगमात्यो विज्ञापयति। भद्र[6] सिद्धार्थक, केनायं लिखितो लेखः।

(सिद्धार्थको राक्षसमुखमवलोक्य[7] तूष्णीमधोमुखस्तिष्ठति।)

भागुरायणः—भद्र[8], अलं पुनरात्मानं ताडयितुम्। कथय।

---

कुमारेत्यादिना एवं वदता राक्षसेन समाहितेऽपि सोल्लुण्ठनं तदन्यथयति भागुरायणः—ईदृशस्येत्यादिना।

अस्मादिति। वाचिकमप्यस्माच्छ्रोतव्यमित्यार्येण लिखितमिति व्यवहितेनान्वयः।

---

१ B. N. read भो अमात्य; E. अमात्य before this; and B. E. G. add आभरणविशेषस्य after this; स्व for आत्म B. E. N; दत्तस्यायं for प्र...स्येयं B. N. २ °प्यात्पतमात्. B. N.; सिद्धार्थकात् for अस्मात् M. R. G. E.; आर्येण at the end of the speech B. N.; तत्कथं शत्रोः प्रयोगः E. ३ कुमार before this E; M. has वा after this; M. G. have वा वाचि further on; E. agrees and adds इति after वाचि° and अयम् after एव; B. N. read कुतो वाचिकं कस्य वा लेखः। अयमेवास्मदीयो &c. ४ R. M. add वा after कस्य and R. read इह for इयं at the beginning of the speech. ५ B. N. read कुमार before this; B. E. N. add अपि after मुद्राम्; R. M. add न before शक्नुवन्ति. ६ E. has the following as Malayaketu's. ७ °सस्य मु° G. E.°; खमास्ते for °खस्तिष्ठति G. E. ८ B. N. om. this; A. P. E. read पुनरलम् for अलं पुनः and B. N. read ताडयित्वा for ताडयितुम्.

सिद्धार्थकः—अज्ज, सँअडदासेण। (क)

राक्षसः—कुमार, यदि शकटदासेन लिखितस्ततो मयैव।²

मलयकेतुः—विजये, शकटदासं द्रष्टुमिच्छामि।

प्रतीहारी—जं कुमारो आणवेदि। (ख)

भागुरायणः—(स्वगतम्।) न खल्वनिश्चितार्थमार्यचाणक्य-प्रणिधयोऽभिधास्यन्ति। (प्रकाशम्।) कुमार, न कदाचिदपि शकट-दासोऽमात्यस्याग्रतो मया लिखितमिति प्रतिपत्स्यते। अतः प्रति-लिखितमस्यानीयतां वर्णसंवाद एवैतं विभावयिष्यति।

(क) आर्य, शकटदासेन।

(ख) यत्कुमार आज्ञापयति।

कुमार, यदि शकटदासेनेति। शकटदासः सर्वथा न लिखिष्यतीति तस्मिन्विस्रम्भप्रत्ययादियमुक्तिः। भवत्वेवमिति। पूर्वं शकटदासहस्तेन छलाच्चाणक्येन लेखितमित्यजानत इयमुक्तिः। आर्यचाणक्येनैव केनचि-द्व्याजेन सिद्धार्थकप्रेरणेन शकटदासं वञ्चयित्वा तद्धस्तेनेदं लिखितं स्यात्। अतः परं शकटदास इहानीतश्चेत्कुसुमपुर एवानेन सिद्धार्थकेन मद्धस्ता-ल्लिखितोऽयं लेख इति स्पष्टं वदेत्। ततः सर्वोऽप्ययं चाणक्यकूटनीतिप्र-योगो व्याकोपितः स्यादित्याशयेन प्रत्युत्पन्नमतिर्भागुरायण आह भव-त्वेवम्। शकटदासागमनं परिहरामीत्यर्थः।

कुमार, न कदाचिदिति। अमात्येन लेखितमपि स्वेन लिखितमपि स्वामिद्रोहभयान्न कथयिष्यतीत्यर्थः। अतः प्रतिलिखितमिति। एतमर्थं

१ सयड° R. G. E. २ B. N. read °स्ताहं and B. E. N. add लिखितः after मयैव. ३ °मात्यो. P; and B. N. R. A. G. add त्ति at the end of this speech. ४ आत्मग° E.; °माचार्य for °मार्य G. and M. R. E. read चाणक्यस्य प्र°. ५ A. P. read before this भवत्वेवम्; B. N. read आगत्य शकटदासो वा सोयं लेख इति प्रत्यभिज्ञाय पूर्ववृत्तं प्रकाशयेत्। एवं सति संदिहानो मलयकेतुर-स्मिन्प्रयोगे श्लथादरो भवेत्॥ ६ °त्यराक्षसस्य B. N.; °त्यपुराज्ञतो (?) राक्षसापेक्षया मया &c., E; लिखित इति B. G. N. ७ अतोन्यलि° B. N.; अतोलि° G.; यतोलि.° E.; ततः प्र° M; B. N. read यतो before वर्ण°; B. N. read एत-त्सर्वम् for एतम्; P. G. E. have एनम्; R. om. वि in विभावयिष्यति.

**मलयकेतुः**—विजये, एवं क्रियताम् ।

**प्रतीहारी**—कुमार, मुद्दावि[1] । (क)

**मलयकेतुः**—उभयमप्यानीयताम्[2] ।

**प्रतीहारी**—जं कुमारो[3] आणवेदि त्ति । ( निष्क्रम्य पुनः प्रविश्य ।) कुमार[4], इदं तं सअडदासेण सहत्थलिहिदं[5] पत्तअं मुद्दावि । (ख)

**मलयकेतुः**—( उभयमपि नाट्येन विलोक्य[6] ।) आर्य, संवदन्त्यक्षराणि ।

**राक्षसः**—( स्वगतम्[7] ।) संवदन्त्यक्षराणि । शकटदासस्तु मित्रमिति च[8] विसंवदन्त्यक्षराणि । किं नु शकटदासेन

> स्मृतं स्यात्[9]पुत्रदारस्य विस्मृतस्वामिभक्तिना ।
> चलेष्वर्थेषु लुब्धेन न यशःस्वनपायिषु ॥ १४ ॥

---

(क) कुमार, मुद्रापि ।

(ख) यत्कुमार आज्ञापयति । कुमार, इदं तच्छकटदासेन स्वहस्तलिखितं पत्रं मुद्रापि ।

---

परिच्छेत्स्यतीत्यर्थः ।

कुमार, मुद्रापीति । आनीयतामिति पूर्वेण प्रश्लिष्य प्रश्नः ।

संवदन्तीति । शकटदासस्तु मित्रमित्ययमर्थो विसंवदति विरुध्यते । तस्याप्ततमत्वे संशयो जायत इत्यर्थः ।

स्मृतमिति । पुत्रदारस्येति 'अधीगर्थ—' इति कर्मणि षष्ठी । स्वामिभक्ति

---

१ G. has मुद्दामपि.; E. मुद्दंपि जाणवे (?); B. N. have instead of the whole speech भागु°. कुमार । मुद्रामप्यानयत्वियम्. २ B. E. N. read °मपि क्रियताम्. ३ मालो. P. which also has वेदीति.; M. om. त्ति. ४ °माल A. P. एदं खु after this in E.; इमं G.; इदं क्खु B. N; E. also has सयड°. ५ सु-; अत्थ...हितं G.; पत्तयं E.; for the वि at the end B. N. read अ, G. पि and E. च ६ °नावलो°. B. E. N. G. ७ आत्मग.° E. which om. संव...णि; B. N. read मम before मित्र°. ८ P. G. E. om. च; G. om. वि in विसंवदन्ति and R. M. read न for that वि; A. P. read तत्किमिदानीम् for किंनु; E. तत्किं नु खलु; B. N. तत्किम् and B. E. N. add लिखितम् after शक...सेन. ९ °दाराणाम् B. E. N. G; and B. N. read विस्मृताः स्वामिभक्तयः.

अथवा कः संदेहः ।

मुद्रा तस्य कराङ्गुलिप्रणयिनी सिद्धार्थकस्तत्सुहृ-
त्तस्यैवापरलेख्यसूचितमिदं लेख्यं[1] प्रयोगाश्रयम् ।
सुव्यक्तं शकटेन भेदपटुभिः[2] संधाय सार्द्धं परै-
र्भर्तृस्नेहपराङ्मुखेन[3] कृपणं प्राणार्थिना चेष्टितम् ॥ १५ ॥

मलयकेतुः—(विलोक्य ।) आर्य,[4] अलंकारत्रयं श्रीमता यद्-नुप्रेषितं तदुपगतमिति[5] यल्लिखितं तन्मध्यात्किमिदमेकम् । (निर्वर्ण्यात्मगतम् ।) कथं[6] तातेन धृतपूर्वमिदमाभरणम् । (प्रकाशम् ।) आर्य, कुतोऽयमलंकारः ।

राक्षसः—वणिग्भ्यः क्रयादधिगतः[7] ।

मलयकेतुः—विजये, अपि प्रत्यभिजानासि भूषणमिदम्[8] ।

प्रतीहारी—(निर्वर्ण्य[9] सबाष्पम् ।) कुमार, कहं ण पच्चभिजाणामि । इदं[10] सुगिहीदणामधेएण पव्वदीसरेण धारिदपुव्वं । (क)

---

(क) कथं न प्रत्यभिजानामि । इदं सुगृहीतनामधेयेन पर्वतेश्वरेण धारितपूर्वम् ।

---

यशश्च परिमृज्य चलेषु नश्वरेष्वर्थेषु पुत्रदारादिषु च लुब्धः स्यादित्यर्थः ॥ १४ ॥

मुद्रेति । प्रयोगाश्रयं कूटप्रयोगरचितमित्यर्थः । कृपणं दीनं कृत्यं चेष्टितं व्यवसितम् ॥ १५ ॥

---

१ पत्रम्. B. N. २ °टुना. B. N. ३ भर्त्तुः A. R M. B.; °पणप्रा° for °पणं प्रा° P. ४ B. E. N. G. om. this; P. om. आर्य.; R. G. E. read अलंकरण for अलंकार; °मतो for °मता B. N. ५ B. N. add आर्येण here; °देकं किमिदम् for °त्किमिदमेकम् B. N. ६ कष्टम् E; A. P. om इदम्. ७ N. om. द; R. M. read °गतम्. ८ °नाति भवती भू°. B. E. N. ९ E. has सबाष्पं निर्वर्ण्य; कधं for कहं E. and G. which also reads प्रच्चभिजाणिस्सं; E. has पच्चभियाणामि.; P. °भिज्जाणा°; B. N. °भिआणिस्सं°. १० इमं क्खु B. N.; इदं ता (?) खलु E.; इमं G.; एदं P. which also reads सुग्गिही°; E. reads °नामधेयेण; R. णामहेयेण; G. णामधेयेण; °व्वदेस° for व्वदीस R; for पुव्वं. B. N. read पूर्वं.

**मलयकेतुः**—(सबाष्पम् ।) हा तात ।

> एतानि तानि तव [1]भूषणवल्लभस्य
> गात्रोचितानि कुलभूषण [2]भूषणानि ।
> यैः [3]शोभितोऽसि मुखचन्द्रकृतावभासो
> नक्षत्रवानिव [4]शरत्समयप्रदोषः ॥ १६ ॥

**राक्षसः**—([5]स्वगतम् ।) कथं पर्वतेश्वरेण धृतपूर्वाणीत्याह । व्यक्तमेवास्य भूषणानि । ([6]प्रकाशम् ।) एतान्यपि चाणक्यप्रयुक्तेन वणिग्जनेनास्मासु विक्रीतानि ।

**मलयकेतुः**—आर्य, तातेन [7]धृतपूर्वाणां विशेषतश्चन्द्रगुप्तहस्तगतानां वणिग्[8]र्विक्रय इति न युज्यते । अथ वा युज्यत एवैतत् । कुतः ।

> चन्द्रगुप्तस्य विक्रेतुरधिकं [9]लाभमिच्छतः ।
> कल्पि[10]ता मूल्यमेतेषां क्रूरेण भवता वयम् ॥ १७ ॥

**राक्षसः**—([11]स्वगतम् ।) अहो सुश्लिष्टोऽभूच्छत्रुप्रयोगः । कुतः ।

---

एतानीति । वल्लभानि प्रियाणि भूषणानि यस्येति बहुव्रीहिः । शेषं स्पष्टम् ॥ १६ ॥

---

१ वल्लभभूषणस्य A. P. E. २ भूषितानि. R. ३ °तोभिमुख° G.; कृताभ्रभासो N. ४ समये A. P. E. ५ आत्मग° E.; तत्कथम्. G; B. N. R. M. read °श्वरघृ°; B. E. N. om. व्य...णानि. ६ M. R. G. om. °प्र...एतान्यपि; E. om. प्रकाशम् and reads सुव्यक्तमेतानि शा°; B. N. om. व्य...नि and read प्र...व्यक्तमेतान्यपि तेन चा°; M. adds एव after प्रयुक्तेन and E. reads वणिग्व्यञ्जनेन. ७ G. E. adds आभरणानाम्; B. N. आभरणविशेषाणाम्; P. has चाणक्य for चन्द्रगुप्त further on. ८ °णिग्भ्यः क्रयाधिगम इति. B. E. N.; °क्रयाधिगत इति (?) M.; °क्रेयाधिगतमिति R; B. E N. add एतत् after the first युज्यते and B. N. om. एतत्कुतः at the end of the sentence; R. G. E. om. कुतः. ९ °च्छता E. १० °ल्पितम् G. N. ११ A. E. B. N. read आत्मग°; R. M. om. अहो. For शत्रु B. N. read एष.; G. om. it.; E. reads °ष्टोयं भूषणप्रयोगः; R. °भूच्छत्रुयोगः.

लेखोऽयं न[1] ममेति नोत्तरमिदं मुद्रा मदीया यतः
सौहार्दं शकटेन खण्डितमिति श्रद्धेयमेतत्कथम् ।
मौर्ये भूषणविक्रयं नरपतौ को नाम संभावये-
त्तस्मात्संप्रतिपत्तिरेव हि वरं न ग्राम्यमत्रोत्तरम्[2] ॥ १८ ॥

**मलयकेतुः**—एतदार्यं[3] पृच्छामि ।

**राक्षसः**—( सबाष्पम् । ) कुमार[4], य आर्यस्तं पृच्छ । वयमिदानीमनार्याः संवृत्ताः ।

**मलयकेतुः**—

मौर्योऽसौ स्वामिपुत्रः परिचरणपरो मित्रपुत्रस्तवाहं
दाता सोऽर्थस्य तुभ्यं स्वमतमनुगतस्त्वं तु[5] मह्यं ददासि ।
दास्यं[6] सत्कारपूर्वं ननु सचिवपदं तत्र ते स्वाम्यमत्र
स्वार्थे कस्मिन्समीहा पुनरधिकतरे त्वामनार्यं करोति ॥ १९ ॥

**राक्षसः**—कुमार, एवमयुक्तव्याहारिणा[7] निर्णयो दत्तः । भवतु तव[8] को दोषः । ('मौर्योऽसौ स्वामिपुत्रः' (५।१९) इति युष्मदस्मदोर्व्यत्ययेन पठति ।)

---

लेखोऽयमिति । शकटदासेन सौहार्दं परित्यज्येदं लिखितमिति ग्राम्ये परिहारे उक्ते कः श्रद्दध्यादित्यर्थः ॥ १८ ॥

एवं मौर्यसेनातोऽप्यतिशयिते मयि तव स्वातंत्र्ये स्थिते इतोऽप्यधिकतरं कं स्वार्थमवलम्ब्यैवमनार्यो जातोऽसीति निष्ठुर उपालम्भः ॥ १९ ॥

---

१ मम नेति. R. M. २ ग्राह्यम° R. M. ३ एतदार्यं A. P. ४ B. N. om. सबाष्पम् । कुमार. ५ °मतभृततनुत्वं च P; A. has च for तु. ६ दार्ढ्यं appears to be given as a variant in R; नि: for ते P. ७ B. reads °मभियुक्तव्यवहा°; E agrees reading नि for भि; N. has एवं प्रष्ट (?) व्यवहा°; B. adds भवतैव मे before निर्णयो; N. मे भवतैव; E. एव. ८ R. om. तव.; B. N. instead of भव...षः read कुतः । मौर्योसौ स्वामिपुत्र इति युष्मदस्मदोर्व्यत्ययेन पठति; G. agrees but om. युष्म...येन.; E· substitutes तदेव; for it.

**मलयकेतुः**—(लेखमलंकरणस्थगिकां[1] च निर्दिश्य ।) इदमिदानीं किम् ।

**राक्षसः**—(सबाष्पम् ।) विधिविलसितम्[2] । कुतः ।

भृत्यत्वे परिभावधामनि सति स्नेहात्प्रभूणां सतां
पुत्रेभ्यः कृतवेदिनां[3] कृतधियां येषां न भिन्ना वयम् ।
ते लोकस्य परीक्षकाः क्षितिभृतः पापेन येन क्षता-
स्तस्येदं विपुलं[4] विधेर्विलसितं पुंसां प्रयत्नच्छिदः ॥ २० ॥

**मलयकेतुः**—(सरोषम्[5] ।) किमद्यापि निह्नूयते एव । विधेः किलैतद्व्यवसितम्, न लोभस्य । अनार्य,

कन्यां तीव्रविषप्रयोगविषमां कृत्वा कृतघ्न[6] त्वया
विश्रम्भप्रवणः पुरा[7] मम पिता नीतः कथाशेषताम् ।

---

इदमिदानीं किमिति । अयं कस्य दोष इत्यधिक्षेपः ।

भृत्यत्वे इति । परिभवो न्यक्कारः तद्विषयो भृत्योऽप्यहं प्रभुभिर्न्यक्कारं कर्तुं समर्थैरपि यैः कृतज्ञैः सर्वज्ञैः स्वामिभिरपत्यनिर्विशेषतया दृष्टोऽस्मि ते दैवेन हता इत्यर्थः ॥ २० ॥

कन्यामिति । मन्त्राधिकारे मौर्यस्य मन्त्रित्वे आहितगौरवेण । धृताभिलाषेणेत्यर्थः । रिपौ चन्द्रगुप्ते प्रलयाय नाशाय मांसवद्विक्रेतुमारब्धा नियोजिता इत्यन्वयः । इदानीमपि राक्षसेनानेकराजकार्यकुशलेन्न किमपि

---

१ G. has °रणं° च स्थ°; E. °रणस्थमिकां च°; B. N. °रणस्थलिकां च; B. N. G. read विनिर्दिश्य and G. reads किम् before इदमिदानीम्. २ B. N. G. read विधेर्वि°and B. E. N. G. add इदं न चाणक्यस्य. ३ कृतिवे°. G; and B. N. read कृतधियो for next word, and अभिन्ना for न भिन्ना. ४ विफलम् R. and विधेर्व्यवसितम् R.; प्रयत्नो वृथा for प्रयत्नच्छिदः P. ५ om. M. R.; सक्रोधम् B. E. N; B. reads कथम् for किम् and om. एव and विधेर्विलसितमिदं न ममेति; E. agrees with our text except in reading निह्नुत एव, and विलसितम् for व्यवसितम्; G. also agrees with our text but adds किम् before किल and reads विल° for व्यव°. ६ कृतघ्नात्मना N. E. ७ B. E. have तदा for पुरा; M. R. read पिता मम पुरा.

संप्रत्याहितगौरवेण भवता मन्त्राधिकारे रिपौ[1]
प्रारब्धाः प्रलयाय मांसवदहो विक्रेतुमेते वयम् ॥ २१ ॥

**राक्षसः**—(स्वगतम्[2]।) अयमपरो गण्डस्योपरि स्फोटः। (प्रकाशम्। कर्णौ पिधाय[3]।) शान्तं पापं शान्तं पापम्। नाहं पर्वतेश्वरे[4] विषकन्यां प्रयुक्तवान्।

**मलयकेतुः**—केन तर्हि व्यापादितस्तातः।

**राक्षसः**—दैवमत्र प्रष्टव्यम्[5]।

**मलयकेतुः**—(सक्रोधम्[6]।) दैवमत्र प्रष्टव्यम्। न क्षपणको जीवसिद्धिः।

**राक्षसः**—(स्वगतम्[7]।) कथं जीवसिद्धिरपि चाणक्यप्रणिधिः। हन्त, रिपुभिर्मे हृदयमपि स्वीकृतम्।

---

तादृशमारभ्यते इति पूर्वं जीवसिद्धिना उपक्षिप्तस्य उपजापदुर्विकल्पस्या-यमुद्धार इत्यवधेयम् ॥ २१ ॥

अयमपर इति। मर्मस्थानव्रणस्योपरि व्रणान्तरमित्यर्थः।

दैवमत्रेति। चाणक्यनामागृहीत्वा दैवमिति वदन्स्वस्य परदोषानावि-ष्करणरूपं महामनस्त्वं सूचितवान्।

---

१ रिपोः B. E. N. P.; रिपो· G; in the next line. B. E. read प्रणयाय for प्रलयाय. २ Om. A. P.; आत्मग° E; P. reads अपि for अपरो. For स्फोटः B. has विस्फोटः and N. विस्फोटक. ३ R. om. क...य and R. E. read शांतं पापम् only once. ४ B. N. read नाहं विषकन्यामारोपितवानपापोहं पर्वतेश्वरे. E. has simply अपापोहं पर्वतेश्वरे. P. adds अपापोहम् after प्रयुक्तवान्. ५ द्रष्ट° A. P. ६ Om. B. N.; दैवमत्रैव प्र°. R.; दैवमत्र द्र° A.; कथमत्र दैवं प्र°. E; P. om. दै...व्यम्. ७ आत्मग°. E.; °क्यस्य प्र° for °क्यप्र°. G; B. E. N read हृदयमपि मे रिपुभिः स्वीकृतम्°.

**मलयकेतुः**—(सक्रोधम्।) [1]भासुरक, आज्ञाप्यतां शेखरसेनः—'य एते राक्षसेन सह [2]सुहृत्तामुत्पाद्यास्मच्छरीरद्रोहेण चन्द्रगुप्तमाराधयितु[3]कामाः पञ्च राजानः कौलूतश्चित्रवर्मा मलयनृपतिः सिंहनादः काश्मीरः पुष्कराक्षः सिन्धुराजः सुषेणः पारसीकाधि[4]पो मेघनाद इति, एतेषु त्रयः प्रथमे मदीयां भूमिं कामयन्ते ते[5] गम्भीरश्वभ्रमभिनीय पांशुभिः पूर्यन्ताम् । इतरौ हस्ति[6]बलकामुकौ हस्तिनैव घात्यताम्' इति ।

**पुरुषः**—[7]तथा । (इति निष्क्रान्तः ।)

**मलयकेतुः**—(सक्रोधम् ।) राक्षस, राक्षस, नाहं विश्रम्भघाती राक्षसः । मलयकेतुः खल्वहम् । तद्गच्छ । समाश्रीयतां सर्वात्मना चन्द्रगुप्तः । [9]पश्य ।

विष्णुगुप्तं च मौर्यं च [10]संममप्यागतौ त्वया ।
उन्मूलयितुमीशोऽहं त्रिवर्गमिव [11]दुर्नयः ॥ २२ ॥

---

विष्णुगुप्तमिति । दुर्नयदृष्टान्ते स्वस्य दौरात्म्यं रोषावेशेनावशादुद्घाटितम् ॥ २२ ॥

---

१ Om. B; twice in E; B. N. G. read शिखरसेनः, E. सिखसेनः and all four add सेनापतिः after this; G reads यतः for ये and B. N. read एतेन for एते. २ M. R. om. सह; सौहार्दम् for सुहृत्ताम् B. N; B. E. N. read °रीराभिद्रोहेण. ३ °यितुमुद्यताः E. which and B. N. G. add तद्यथा after राजानः; °नरपतिः for °नृपतिः B. E. N.; जनाधिपः G. ४ °धिराजो. B. N; for मेघनाद E. has मेघार्क, N. G. मेघाक्ष, B. मेघाख्य (or मेघाक्ष as a variant); for एतेषु B. N. read तत्र तेषां मध्ये ये; G. अत्र य एते; E. अत्र य एतेषाम्; प्रथमम् for प्रथमे R. M. G.; प्रधानतमाः प्रथमा B. N.; प्रथमतरा E. which reads प्रार्थयन्ते for कामयन्ते. ५ E. has before this तेभ्यो भूमिरेव दीयताम्; M. R. G. E. read गम्भीरम्; for अभिनीय M. R. read आनीय; B. N. उपनीय. ६. before this B. N. have तु द्वौ; P. A. E. तु; B. N. read °बलकामौ; E. °बलकामिनौ; M. बलकोशकामुकौ. For घात्यताम् A. P.; read खाद्येताम्. ७. तहेत्ति M. R; जं कुमारो आणवेदित्ति B. N.; °वेदि E. ८ R. G. E. M. om. सक्रो°; G. E. read राक्षस only once.; M.om. entirely. ९ समाश्रय चन्द्रगुप्तम्. M. R.; समा......गुप्त इति. B. N; G. agrees with our text adding त्वया before चन्द्र°; B. E. N. om. पश्य. १० सार्धम°. E. ११ दुर्णयः G. E.

**भागुरायणः**—कुमार[1], कृतं कालहरणेन । सांप्रतं कुसुमपुरोप-रोधा[2]याज्ञाप्यन्तामसद्बलानि ।

गौडीनां लोध्रधूलीपरिमलबहु[3]लान्धूमयन्तः कपोला-
न्क्लिश्नन्तः[4] कृष्णिमानं भ्रमरकुलरुचः कुञ्चितस्यालकस्य ।
पांशु[5]स्तम्बा बलानां तुरगखुरपुटक्षोभलब्धात्मलाभाः
शत्रूणामुत्तमाङ्गे गजमदसलिलच्छिन्न[6]मूलाः पतन्तु ॥ २३ ॥

( सपरिजनो[7] निष्क्रान्तो मलयकेतुः ।)

**राक्षसः**—(सावेगम्[8] ।) हा धिक्कष्टम् । तेऽपि घातिताश्चित्रव-र्मादयस्तपस्विनः । तत्कथं सुहृद्भिर्नाशाय[9] राक्षसश्चेष्टते न रिपुविना-शाय । तत्किमिदानीं मन्दभाग्यः करवाणि[10] ।

---

स्वपक्षबलहीनमेनं भद्रभटादिभिर्निग्राहयितुं त्वरयति—गौडीनामिति । लोध्रपुष्पाणां धूली परागस्तस्य परिमलो लेपजनितो गन्धविशेषस्तेन बहु-लान्व्याप्तान् गौडीनां गौडस्त्रीणां कपोलान्धूमयन्तः धूमवतः कुर्वतः । मलि-नयन्त इति यावत् । णाविष्टवद्भावेन मतुपो लोपः । गौडस्त्रियः कपो-लान्लोध्ररजोभिरलंकुर्वन्तीत्यतस्तेषां तत्परिमलबहुलत्वम् । तथा तासामेव भ्रमरकुलरुचः नीलस्य कुञ्चितस्य संयमितस्यालकस्य कृष्णिमाणं नैल्यं क्लिश्नन्तोऽभिभवन्त इत्यर्थः । बलानां सैन्यानां तुरगखुरपुटक्षोभेण लब्धा-त्मलाभाः जनिताः पांशुस्तम्बाः गजमदसलिलैश्छिन्नमूलाः सन्तः शत्रूणा-मुत्तमाङ्गे पतन्तु ॥ २३ ॥

---

१ Om. M. R. G. E; G. E. add एव after सांप्रतम्; B. N. read शी-घ्रमेव. २ °पुररोधाय M. R.; पुरमेव रो° G; प्रतिष्ठन्ताम् for आज्ञाप्यन्ताम् B E. N. G. ३ बह° G.; धवलान् B. E. N.; धूम्रयन्तः B. E. N. G. ४ क्लिशन्तः G. ५ व्यूहा for स्त° B. N; for पुट R. has पट; M. पुटी and for क्षोभ. B. E. N. G. क्षोद. ६ क्लिन्नमूलाः M. G. E.; क्लिन्नमालाः R. ७ B. N. read इति स... नो निर्गतो मल°; E. reads निष्क्रान्तः स...नो मल°. ८ Om. M. P. R.; कष्टं तेपि om. in E. M. R. G; B. N. after तेपि read हतास्तपस्विनश्चित्रवर्मादयस्त-त्कथम् &c. ९ B. N. read °हन्नाशा°; E. reads रिपोर्विना° further on. १० करवाणि मन्दभाग्यः B. E. N. G.

किं गच्छामि तपोवनं न तपसा शाम्येत्सवैरं मनः
किं भर्तॄननुयामि जीवति रिपौ स्त्रीणामियं योग्यता ।
किं वा खड्गसखः पताम्यरिबले नैतच्च[2] युक्तं भवे-
च्चेतश्चन्दनदासमोक्षरभसं रुन्ध्यात्कृतघ्नं[3] न चेत् ॥ २४ ॥

(इति निष्क्रान्ताः सर्वे ।)

पञ्चमोऽङ्कः ।

---

किं गच्छामीति । जीवति रिपाविति शत्रुवैरनिर्यातनमकृत्वा स्त्रीवदनुमरणमयुक्तमिति भावः । खड्गसख इति । खड्गमात्रसहायेनारिबलं कृत्स्नं क्षपयितुं समर्थोऽस्मि अथापि चन्दनदासस्योपकारिणो मोक्षो न भवेदिति रभसं रभसवदुत्सुकं चेतः रुन्ध्यात् । अरिबलक्षपणान्मां रोद्धुं प्रवर्तत इत्यर्थः । प्रवर्तनायां लिङ् । न चेत् न रुन्ध्याच्चेत्कृतघ्नं भवेदित्यन्वयः । पराक्रमपक्षे चन्दनदासविषये कृतघ्नतादोषः स्वस्यापरिहार्यः स्यादिति भावः । अप्यकार्यशतं कृत्वा येनकेनाप्युपायेन चन्दनदासमोचनमेव संप्रत्यावश्यकत्वेनापतितम् । अतस्तत्रैव प्रयतिष्य इत्यत्र तात्पर्यम् ॥ २४ ॥

इति श्रीत्र्यम्बकयज्वप्रभुवर्याश्रितढुण्ढिराजव्यासयज्वविरचिते मुद्राराक्षसनाटकव्याख्याने पञ्चमोऽङ्कः समाप्तः ॥

---

१ पुनः M. R. २ नेदं न युक्तम् B. N.; नैतन्न युक्तम् E. ३ कृतज्ञम्. R.

# मुद्राराक्षसम् ।



## षष्ठोऽङ्कः ।



( ततः प्रविशत्यलंकृतः सहर्षः[1] सिद्धार्थकः । )

**सिद्धार्थकः—**

[2]जंअदि जलदणीलो केसवो केसिघादी
[3]जंअदि अ जणदिट्ठीचन्दमा चन्दउत्तो ।
[4]जंअदि जअणकज्जं जाव काऊण सव्वं
पडिहदपरपक्खा[5] अज्जचाणक्कणीदी ॥ १ ॥ (क)

---

(क) जयति जलदनीलः केशवः केशिघाती
जयति च जनदृष्टिचन्द्रमाश्चन्द्रगुप्तः ।
जयति जयनकार्यं यावत्कृत्वा च सर्वं
प्रतिहतपरपक्षा आर्यचाणक्यनीतिः ॥ १ ॥

---

इत्थं मलयकेतुनिग्रहरूपमवान्तरकार्यनिर्वहणं कृतम् । अतः परं राक्षससंग्रहणरूपप्रधानकार्यनिर्वाहार्थं चन्द्रगुप्तलक्ष्मीस्थैर्यरूपस्य महाफलस्य च सिद्ध्यर्थं षष्ठसप्तमावङ्कावारभ्येते—जअदीति । जयतीति । कृतकार्यतया चन्द्रगुप्तेन भूषणादिनालंकृतेन सिद्धार्थकेनेष्टदैवतराजचाणक्यनीतीनां जय आघोष्यते । जयत्यनेनेति जयनं सैन्ययुद्धादि । करणे ल्युट् । जयनेन जयकारणेन सेनादिनैव यत्कार्यं तद्यावत्सर्वं स्वयमेव कृत्वा चाणक्यनीतिर्जयतीत्यन्वयः । सेनासन्नाहयुद्धादिकमनपेक्ष्य नीत्यैव सर्वं राज-

---

१ Om. M. R. G. २ जयदि G.; जयदु E; N. reads जलदवण्णो; E. reads केशवो केशि° for केसवोकेसि° and G.केसिघाई. ३ जयादि E.; जअइ. G.; for अ B. N. read सु; E. reads सुयन for अजण. ४ जयदि P. E.; for कज्जं B. E. N. G. read सज्जं; G. also has अजण for जअण; for जाव B. N. G. read जाअ; E. जाय; R. एव्व; M. R. read कादूण and B. E. N. G. read सेण्णं for सव्वं. ५ पारिप° A.; पडिप° P.; पडिव° B. E. N.; for णीदी. G. reads णीई.

[1]दाव चिरस्स कालस्स पिअवअस्सं समिद्धत्थअं पेक्खामि । (परिक्रम्यावलोक्य [2]च ।) एसो मे पिअवअस्सओ समिद्धत्थओ इदो [3]एव्व उपसप्पदि । जाव णं उपसप्पामि । (क)

(प्रवि[4]श्य समिद्धार्थकः ।)

**समिद्धार्थकः—**

संदावे तारे[5]साणं गेहूसवे सुहाअत्ताणं ।
हि[6]अअट्ठिदाणं विहवा विरहे मित्ताणं दूणन्दि ॥ २ ॥ (ख)

---

(क) तावच्चिरस्य कालस्य प्रियवयस्यं समिद्धार्थकं पश्यामि । एष मे प्रियवयस्यः समिद्धार्थक इत एवोपसर्पति । यावदेनमुपसर्पामि ।

(ख) संतापे तारेशानां गेहोत्सवे सुखायमानानाम् ।
हृदयस्थितानां विभवा विरहे मित्राणां दूनयन्ति ॥ २ ॥

---

कार्यं चाणक्यः साधितवानित्यर्थः । बहोः कालात्तस्य दर्शनमावश्यकमित्यर्थः । संदावे इति । संतापे तारेशानां चन्द्राणां संतापहारिणामित्यर्थः । गेहोत्सवे इति । मित्रैर्विना गेहोत्सवा व्यर्था इत्यर्थः । हृदयस्थितानां सर्वदा चिन्त्यमानानां मित्राणां विरहे विभवा ऐश्वर्याणि दुःखायैव भवन्ति इति सिद्धार्थकविरहेण क्लिश्यते ॥ २ ॥

---

१ B. N. read जाव; G. ता जाव; E. यावत् and पियवयस्सं further on and ससिद्धत्थयं; G.reads पेसामि for पेक्खामि. २ Om. G. which reads सो for मे; M. R. om. मे; B. E. read अअंउण for एसो मे; E. has again पियवय° ससिद्ध°; R. G. E. read °वअस्सो°; for एसो...त्थओ N. reads अए पिअवअस्सो समिद्धत्थ. ३ P. reads एदो एव; G. इदो जेव्व; B. N. इदो जेव; G. R. M. read उपसप्प°; B. N. आअच्छदि; E. reads इदो आगदोप्येव; B. E. N. G. have ता before जाव and B. N. om. णं; P. reads उदसप्पेमि; E. उवसेजामि; B. G. R. read उवसप्पामि. ४ B. E. N. G. read ततः प्रविशति; E. reads ससिद्ध°. ५ B. N. read संताबेन्ता आबाणेसुं; G. संभावेता अविणएसुं; E. सभारन्तः आवाणाएसुं; B. N. continue महूसवेसुं रुआवेन्ता; G. गेहंसवेसुं आवन्ता; E. सहूसवे रुवायता. ६ A. reads हअंअ°; E. हियअच्छिया वि विहवा; G. हिअअट्ठिआ वि विह°; B. N. हि...च्छिया विअ विह°. For the last word R. reads दूणिन्ति; A. M. दूमन्ति; E. दूमेति; B. N. दुम्मणाअन्ते.

सुदं [१]च मए मलअकेदुकडआदो पिअवअस्सओ सिद्धत्थओ आअदोत्ति [२]। णं अण्णेसामि । (इति परिक्रामति । विलोक्य ।) एसो [३]सिद्धत्थओ । (क)

सिद्धार्थकः—([४]उपसृत्य ।) कहं समिद्धत्थओ । अवि सुहं पिअवअस्सस्स । (ख)

([५]इत्यन्योन्यमालिङ्गतः ।)

सिद्धार्थकः—[६]कुदो सुहं जेण तुमं चिरप्पवासपच्चागदो विअज्ज ण मे गेहं आअच्छसि (ग)

---

(क) श्रुतं च मया मलयकेतुकटकात्प्रियवयस्यः सिद्धार्थक आगत इति । एनमन्वेषयामि । एष सिद्धार्थकः ।

(ख) कथं समिद्धार्थकः । अपि सुखं प्रियवयस्यस्य ।

(ग) कुतः सुखं येन त्वं चिरप्रवासप्रत्यागतोऽप्यद्य न मे गेहमागच्छसि ।

---

१ Om. M. R. G; जधा after मए B. E. N. G; B. also reads °केतु; and E. मलयकेतु and कडयादो and पियवयस्सो; M. R. read वअस्सो for वअस्सओ; G. adds मे after it. २ आगदो° E. after which B. E. N. have ता जा (या E.) व णं &c. In B. the stage direction is परिक्रम्योपसृत्य च simply; N. agrees with our text but adds सहर्षम् after विलोक्य, E. adds आत्मगतम् and om. इति. ३ G. has एसो सो;N. अए सिद्धत्थअ; B.G.E. add अवि सुहं पिअवअस्सस्स. G. E. adding उपसृत्य before this. ४ विलोक्य B. E. G; B. E. N. G. read कधं; R.M. om. क...ओ; B. reads कधं इदो जेव्व पिअवअस्सओ सुसिद्धत्थओ । उपगम्य । अवि &c.; M. R. G. om. पिअ. ५ B. N. read उभावन्यो°; E. इत्युभावन्यो°; P. अन्यो°; N. and P. have this direction before अविसुहं &c. ६ अह वअस्स before and मे after this B. N. which also read जस्स for जेण; B. N. read आल before प्पवास; G. om. प्प and E. reads प्पव्वास and adds वि after अज्ज and reads आअत्थसि; G. reads पि after अज्ज; B. N. after दोवि read अआणिअ वुत्तन्तं अण्णदो गदोसि त्ति.

**सिद्धार्थकः**—पसीददु वँअस्सो[1]। दिट्ठमेत्तो एव्व अज्जचाण-क्केण आणत्तोह्मि जह—'सिद्धत्थअ, गच्छ। एदं पिओदन्तं[2] देवस्स चन्दसिरिणो णिवेदेहि' त्ति। तदो एँदस्स[3] णिवेदिअ एव्वं अणुभू-दपत्थिवप्पसादो अहं पिअवअस्सं पेक्खिदुं[4] तुह एव्व गेहं चलि-दोह्मि। (क)

**समिद्धार्थकः**—वँअस्स[5], जदि मे सुणिदव्वं तदो कहेहि किं तं पिअं जं पिअदंसणस्स चन्दसिरिणो णिवेदिदं[6]। (ख)

**सिद्धार्थकः**—वँअस्स[7], किं तुहवि अकहिदव्वं अत्थि ता

---

(क) प्रसीदतु वयस्यः। दृष्टमात्र एव आर्यचाणक्येनाज्ञप्तोऽस्मि यथा—'सिद्धार्थक, गच्छ। इमं प्रियोदन्तं देवस्य चन्द्रश्रियः निवेदय' इति। तत एतस्य निवेद्यैवमनुभूतपार्थिवप्रसादोऽहं प्रियवयस्यं प्रेक्षितुं तवैव गेहं चलितोऽस्मि।

(ख) वयस्य, यदि मे श्रोतव्यं ततः कथय किं तत्प्रियं प्रियदर्शनस्य चन्द्रश्रियो निवेदितम्।

(ग) वयस्य, किं तवाप्यकथितव्यमस्ति तन्निशामय। अस्ति तावच्चाणक्य-

---

१ पसीददु twice in B. E. N.; पिअ before this in B. E.N. and अहं क्खु after this in B N; जेव्व for एव्व B. N.; जेव्व G.; य्येव E; B. om. ह्मि further on. For जह B. G. have जधा, N. जहा, E. om. २ वुत्तन्तं पिअं पिअ-दंसणस्स B. N. E. (om. वुत्तन्तं); G. adds पिअदंसणस्स एदस्स before देवस्स in our text; for देवस्स B. N. read देअस्स; for the last word R. reads णिवेदिहित्ति, P. °दहीत्ति. ३ तस्स तं B. N.; एदस्स एदं E; for एव्वं B. E. N. G. read एवं; R. M. read अणुहूद; पात्थिव B. N.; प्पंत्थि° A.; पसादो B. E. N. G. ४ पेषिदुं E.; for तुह G. E. read तव. For एव्व E. जेव, G. B. N. om. For चलिदो° N. has पत्थिदो and for ह्मि E. has स्मित्ति; A.om. चलिदोह्मि. ५ वय° E. For मे B. N. read मए एदं; E. मएवि; B. reads °दव्वं भोदि ता मं पि सुणावेहि. N. agrees reading कहेहि for सुणावेहि; B. E. N. om. जं; P. is confused here thus कितंपिअणं दंस्सचन्द &c. G. reads चन्दसिरिणस्स. ६ E. has °दिदव्वं; B. E. N. add त्ति here. ७ पिअ before this B. N; after it B. N. have तवापि किं असुणिदव्वं अत्थि; G. तवापि and E. तववि for तु-हवि; °कधि° for काहि in text G.

णिसामेहिं[1] । अत्थि दाव चाणक्कणीदिमोहिदमदिणा मलअकेदुहद-[2]एण णिक्कासिअ रक्खसं हदा चित्तवम्मप्पमुहा प्पहाणा पञ्च पत्थिवा । तदो असमिक्खकारी एसो दुराआरोत्ति उज्झिअ[3] मल-अकेदुहदअभूमिं कुसलदाए[4] भअविलोलसेससैणिकपरिवारेसुं संभअं[5] प्पत्थिदेसु पात्थिवेसु सकं विसअं णिव्विण्णहिअएसु सअलसाम-न्तेसु भद्दभटपुण्णिदत्तडिङ्गुरादबलउत्तराअसेणभागुरा[6]अणरोहि-दक्खविजअवम्मप्पमुहेहिं संजमिअ गिहीदो[7] मलअकेदु । (ग)

---

नीतिमोहितमतिना मलयकेतुहतकेन निष्कास्य राक्षसं हताश्चित्रवर्मप्रमुखा प्रधानाः पञ्च पार्थिवाः । ततोऽसमीक्ष्यकार्येष दुराचार इत्युज्झित्वा मलयकेतुह-तकभूमिं कुशलतया भयविलोलशेषसैनिकपरिवारेषु सभयं प्रस्थितेषु पार्थिवेषु स्वकं विषयं निर्विण्णहृदयेषु सकलसामन्तेषु भद्रभटपुरुदत्तडिङ्गरातबलगु-सराजसेनभागुरायणरोहिताक्षविजयवर्मप्रमुखैः संयम्य गृहीतो मलयकेतुः ।

---

१ णिशा° E.; णिस° R; before this E. has तं for ता; B.E.N. prefix अज्ज to चाणक्क; E. reads णीदिणा and N. मइणा for मदिणा. २ हअगेण G.E; for णिक्का B. E. N. read णिराकरिअ; for रक्ख° G. reads लक्ख°; B. E. N. राक्ख° after which R. reads हदासं; पमुं° for प्पमु° G. E. A; M. reads मुहा for प्पमुहा; असमिक्खिदका° M. G. E.; °समेक्खिद° R. ३ कदुअ before this B. N. For हदअ B. N. read कडअ; G. हदक; E. हदग. ४ B. N. read णिअभूमि before this; G. reads खु; for भअ&c. P. has भयेन अविलो-लसेस &c. B. N. read भअविलोलसेणतणूकदपरि°; G. om. तणूकद and places this after पत्थिदेसु; E. has सोसीक for सेणतणूकंदपरि°. ५ सभयं P. G.; सकं सकं विसअं अभिप्पत्थि°. B. N. reading पत्थिवेसु and omitting सकं...न्तेसु which follows; E. agrees, only omitting अभि; G. agrees reading विसयं for विसअं and substituting सअलसामन्तेसु for पत्थिवेसु in B. N.'s reading. For पुरिसदत्त B. reads पुरुद°, M. R. पुरुसद°. For the next name B. E. read हिङ्गरात, R. डिङ्गिरात, N. G. डिङ्गिराद. ६ भाउरा°. R. M.;...°रायण. G; for रोहि°. B. reads रीहि, G. रोहितश्व, A. P. रोहितक्ख; E. om. विजअवम्म, G. reads विजयव°, E. reads पमुहेहिं. ७ B. N. om. अ-गिहि. For संजमिदो N. reads निगादिदो, G. णिगिहीदो, E. गिहीतो.

**समिद्धार्थकः**—वअस्स, भद्दभटप्पमुहा किल देवस्स चन्दउत्तस्स[1] अवरत्ता मलअकेदुं समस्सिदेत्ति[2] लोए मन्तीअदि। ता किंणिमित्तं[3] कुकविकिदणाडअस्स विअ अण्णं मुहे अण्णं णिव्वहणे। (क)

**सिद्धार्थकः**—वअस्स, देवगदीएँ[4] विअ असुणिदगदीए णमो चाणक्कणीदीए। (ख)

**समिद्धार्थकः**—तदो तदो[5]। (ग)

**सिद्धार्थकः**—तदोप्पहुदि[6] सारसाहणसमेदेण इदो णिक्कमिअ अज्जचाणक्केण पडिवण्णं[7] सअलराअलोअसहिअं असेसं मेच्छबलं। (घ)

---

(क) वयस्य, भद्रभटप्रमुखाः किल देवस्य चन्द्रगुप्तस्य अपरक्ता मलयकेतुं समाश्रिता इति लोके मन्त्र्यते। तत्किं निमित्तं कुकविकृतनाटकस्येवान्यन्मुखेऽन्यन्निर्वहणे।

(ख) वयस्य, देवगत्या इव अश्रुतगत्यै नमश्चाणक्यनीत्यै।

(ग) ततस्ततः।

(घ) ततःप्रभृति सारसाधनसमेतेनेतो निष्क्रम्यार्यचाणक्येन प्रतिपन्नं सकलराजलोकसहितमशेषं म्लेच्छबलम्।

---

चन्दउत्तस्सेति। चन्द्रगुप्ते अपरक्ता इत्यर्थः। शेषे षष्ठी।

---

१ चन्दसिरिणो. B. E. N; this and six following speeches are wanting in R. २ B. N. read समास्सिदात्ति; G. समा...दत्ति; E. सम...दत्ति; for लोए P. reads लोओ. ३ Om. P; एदं after this B. E. N; किद omitted by B. and for it N. reads किअ and E. कय...,B. N. add त्ति at the end of the sentence. ४ B. N. add सुण दाव before this; G. reads for this दिव्वणदी, E. देव्वग,° omitting. विअ...गदीए; B. N. E. add अज्ज before चाणक्क. ५ ततो ततो G.; वअस्स before this B. N. E. G. ६ वअस्स before this B. N. which also read पहुदि. E. has वअस्स तदोपभूद; for साहण, B. N. read साधन,° and समेदेण for समुदाएण. ७ °पन्नं G.; वन्नं° E.; for what follows. B. N. read अराअलोअं असेसराअबलं; E. सरायलोयं असेसरायबलं.

समिद्धार्थकः—[1]वअस्स, कहिं तं। (क)

सिद्धार्थकः—[2]जहिं एदे

अदिसअगुरुएण दाणदप्पेण द[3]न्ती

[4]सजलजलदणीला उब्भमन्तो णदन्दि।

[5]कसपहरभएण जाअकम्पोत्तरंगा

गि[6]हिदजअणसद्दा संपअन्ते तुरङ्गाः॥ ३॥ (ख)

समिद्धार्थकः—वअस्स, ए[7]दं दाव चिट्ठदु। तहा सव्वलोअ-

---

(क) वयस्य, कुत्र तत्।

(ख) यत्रैते

अतिशयगुरुकेण दानदर्पेण दन्तिनः

सजलजलदनीला उद्भ्रमन्तो नदन्ति।

कशाप्रहारभयेन जातकम्पोत्तरंगाः

गृहीतजयनशब्दाः संपतन्ति तुरङ्गाः॥ ३॥

(ग) वयस्य, एतत्तावत्तिष्ठतु। तथा सर्वलोकप्रत्यक्षमुज्झिताधिकारः स्थि-

---

अतिशयेति। जातकम्पा अत एवोत्तरङ्गाः। कशाताडनभयेन अत्यन्तं कम्पमानाश्चपलाश्वाः। गृहीतजयनशब्दाः जयनं जयस्तस्य शब्दः गृहीतो ज्ञातो जयनशब्दो यैस्ते तथाभूताः जयघोषणां श्रुत्वा सर्वतः संपतन्तीत्यर्थः॥ ३॥

---

१ वयस्स P.; तं om. in B. G. N. २ वअस्स before this in B. G. N. ३ दन्तिणो P. ४ सुज°. E.; for णीला B. reads लीला; E. णीलो. For उब्भमन्तो. B. has उव्वह°, G. ओव्वम°, N. E. उव्वमन्तो, P. उब्भमन्दो; for णदन्दि B. E. N. G. read णदन्ति; A. °न्ती. ५ पहरण. A. P.; भयेण G.; जायकम्पणुराआ G.; M. has जायकम्पाणराअ (?); B. N. जाअकम्पातुरन्ता. ६ गहिद B. N. G.; गहिअ E.; जयणशद्दा. G.; for संपअन्ते. B. N. E. read संपदन्ते; M. संपअन्ति तुलंगा; ७ एव्व A., सव्वं B. N. G. E. of which last two read ताव for दाव. For तहा M. has तह, P. जह, B. G. N. तधा; B. N. have सव्वलोअस्स.

पच्चक्खं उज्झिआहिआरो[1] चिट्ठिअ अज्ज चाणक्को किं उणो वि तं एव्व[2] मन्तिपदं आरूढो। (ग)

**सिद्धार्थकः**—अइ[3] मुद्धोसि दाणीं तुमं जो अमच्चरक्खसेण विअणवगाहिअपुव्वं अज्जचाणक्कचरिदं अवगाहिदुमिच्छसि। (क)

**समिद्धार्थकः**—वअस्स, अमच्चरक्खसो[4] संपदं कहिं। (ख)

**सिद्धार्थकः**—तस्सिं[5] भअविलोले वट्टमाणे मलअकेदुकडआदो णिक्कमिअ[6] उदुम्बरणामहेएण चरेण अनुसंधिज्जमाणो इदं पाडलीउत्तं आअदोत्ति अज्जचाणक्कस्स णिवेदिदं। (ग)

---

त्वार्यचाणक्यः किं पुनरपि तदेव मन्त्रिपदमारूढः।

(क) अतिमुग्धोऽसीदानीं त्वं यतोऽमात्यराक्षसेनाप्यनवगाहितपूर्वमार्यचाणक्यस्य चरितमवगाहितुमिच्छसि।

(ख) वयस्य, अमात्यराक्षसः सांप्रतं कुत्र।

(ग) तस्मिन्भयविलोले वर्धमाने मलयकेतुकटकान्निष्क्रम्योदुम्बरनामधेयेन चरेणानुसंधीयमान इदं पाटलिपुत्रमागत इत्यार्यचाणक्यस्य निवेदितम्।

---

१ °धिआ°. E; after this G. E. M. add चिरं; B. N. read भविअ कधं for चि°. For किंउणो. B. N. read पुणो, G. E. किंपुणो. २ एव. P.; जेव्व G.; जेव B. N. For तं एव्व E. has दं and मन्तिपयं after that. ३ वअस्स before this B. N. G. E.; अवि° A.; अपि (?) G.; अदि. B. N. E; सि om. in M. E; after दाणीं in B. N; तुमं between सि and दाणीं G; B. N. om. वि. For अणवगाहिअ. G. has अणअवगाहिअ, B. N. अणवगहिद, E. अणवगाहिद; B. N. E. read बुद्धिं; G. चरितं for चरिदं. For इच्छसि A. P. read इच्छेसि. ४ अध before this and दाणीं for संपदं after this in B. E. N. ५ वअस्स सोक्खु before this in B. E. N.; वअस्स only in G; for भ...ले B. N. read पलअकोलाहले; G. भयवि°; E. भवलकोलाले. And for व...णे B. N. वड्ढमाणे, M. प्रवट्टमाणे. ६ णिक्ख°. E. For उ...र P. reads उडम्बर, B. N. उन्दुर, E. उन्दुदर. For °हेएण B. E. N. धेएण, G. धेयेण; अनुसरन्तो for अनुसंधिजमाणो B.; अनुसरीयमाणो N. E.; अनुसंधिय° G.; अनुसंधज° P.; for इ...त्तं B. N. इमं जेव्व कुसुमपुरं; E. इमं जेव कुसुमवुरं; G. इमं पाडलिउत्तं, P. इदं पाडलिउत्तं. For आअदो. P. has आयदो, B. N. आगदो.

समिद्धार्थकः—[1]वअस्स, तहा णाम अमच्चरक्खसो णन्दरज्ज-[2]पच्चाणअणे किद्व्ववसाओ णिक्कमिअ संपदं अकिदत्थो पुणोवि [3]इमं पाडलीउत्तं आअदो एव्व । (क)

सिद्धार्थकः—वअस्स, तक्केमि [4]चन्दणदाससिणेहेणेत्ति । (ख)

समिद्धार्थकः—[5]वअस्स चन्दणदासस्स मोक्खं विअ पेक्खामि । (ग)

सिद्धार्थकः—[6]कुदो से अधण्णस्स मोक्खो । सो क्खु संपदं अज्जचा[7]णक्कस्स आणत्तीए दुवेहिं अह्मेहिं बज्झट्ठाणं पवेसिअ वावा-[8]दइदव्वो । (घ)

समिद्धार्थकः—(सक्रोधम् ।) किं [9]अज्जचाणक्कस्स घादअजणो

---

(क) वयस्य, तथा नामामात्यराक्षसो नन्दराज्यप्रत्यानयने कृतव्यवसायो निष्क्रम्य सांप्रतमकृतार्थः पुनरपीदं पाटलिपुत्रमागत एव ।

(ख) वयस्य, तर्कयामि चन्दनदासस्नेहेनेति ।

(ग) वयस्य, चन्दनदासस्य मोक्षमिव प्रेक्षे ।

(घ) कुतोऽस्याधन्यस्य मोक्षः । स खलु सांप्रतमार्यचाणक्यस्याज्ञप्त्या द्वाभ्यामावाभ्यां वध्यस्थानं प्रवेश्य व्यापादयितव्यः ।

(ङ) किमार्यचाणक्यस्य घातकजनोऽन्यो नास्ति येन वयमीदृशेषु नियोजिता

---

१ वयस्स. R. For तदा B. E. N. G. read तथा. २ णयणे. R. G; कदव्व° for किदव्व° E.; अकद° for अकिद.° B. E. N. ३ इदं. R.; पाडलि°. G. P.; om. इमं कधं before इमं B. N; and ज्जेव्व कुसुमपुरं (E. पुरे) B. E. N. For एव्व G. reads जेव्व, P. एव. ४ °दासस्स B. E. N.; सिणेहेणत्ति B. E. N. P.; सुणेहेणेत्ति. R. ५ सच्चं चन्दणदासस्स सिणेहेणात्ति । अथ after this B. E. N. (om. सच्चं and reading अध for अथ); Om. विअ B. E. N. G.; पेक्खसि for पेक्खामि B. N.; पेक्खिष्ट (?) E; R. reads दोक्खिविअ for मोक्खंविअ. ६ वअस्स before this B. E. N. G.; कुतो P. ७ °क्कस्य. R; after दुवेहिं M. has वि; B. N. G. पि; E. घातगज्जणेहिं; G. has अह्मेहि at the end of the sentence; R. reads वजट्ठाणं. ८ वापाद° G.; वावाइदव्वो E. P. ९ P. om. स्स. E. has अण्णो after this instead of after घा...णो. For घादअजणो. E. has घादको, G. घादयअणो, R. घादअअणो, B. N. घातअअणो.

अण्णो णत्थि जेण[1] अह्मे ईरिसेसु णिओजिआ अदिणिसंसेसु णिओएसु । (ङ)

**सिद्धार्थकः**—वअस्स, को[2] जीवलोए जीविदुकामो अज्जचाणक्कस्स आणत्तिं पडिऊलेदि[3] । ता एहि । चंडालवेसधारिणा भविअ चन्दणदासं वज्झट्ठाणं[4] णएम । (क)

(इत्युभौ[5] निष्क्रान्तौ ।)

प्रवेशकः ।

( ततः प्रविशति रज्जुहस्तः पुरुषः । )

**पुरुषः**—

छग्गुणसंजोअदिढा[6] उवाअपरिवाडिघडिअपासमुही ।
चाणक्कणीतिरज्जू[7] रिपुसंजमणुज्जआ जअदि ॥ ४ ॥ (ख)

---

अतिनृशंसेषु नियोगेषु ।

(क) वयस्य, को जीवलोके जीवितुकाम आर्यचाणक्यस्याज्ञप्तिं प्रतिकूलयति । तदेहि । चण्डालवेशधारिणौ भूत्वा चन्दनदासं वध्यस्थानं नयावः ।

(ख) षड्गुणसंयोगदृढा उपायपरिपाटीघटितपाशमुखी ।
चाणक्यनीतिरज्जू रिपुसंयमनोद्यता जयति ॥ ४ ॥

---

आअदो एव्वेति । तस्यागमनमश्लाघ्यमित्यर्थः ।

अथ कथंचिदगतिकतया चन्दनदासमोचनरभसेन समायातो राक्षसः साहसी महावीरः शस्त्रपाणिर्वशयितुमशक्य इति तद्धस्ताच्छस्त्रं त्याजयितुं

---

१ जदो. B; for ईरिसेसु E. N. G. read ईदिसेसु, M. इंतिसे; after which N. G. E. read णिओएसु om. further on; R. P. om. णिओ°; B. reads इदिसे निसंसे कम्मे णिजुञ्जीअदि; for णिओजिआ N. G. read णिओजदि; E. णिओएदि (after आदिणि°.); M. णिओइआ; R. णिओजइ. २ णं B. E. N.; के G.; जीवलोए om. A. P.; जीअलो° G. For जीविदुका° B. N. have णिवसिदुका°; G. जीवितुकामा°; E. adds जो after this. ३ P. पडिकूले°; M. पडिऊलअदि; R. पडिऊलयदि; E. पडिऊलयस्सदि; G. पडिऊलादित्ति; रिणो for °रिणा B. N. E. (which reads रूप for वेस°); °रिणौ G. ४ वज्ज° R.; वज्झ E; for णएम G. has णयामह; N. णयह्म; M. णअह; E. निमो. ५ G. E. om. इति. ६ षग्गु° G.; गु° P. For संजोअ. E. has संयोजोअ; G. संजोय; P. संज्जोअ; For उवाअ R. N. read उवाय. For परिवाडिघाडिअ B. परिपाडीघडिद, N. परिवाडिघडिद, G. वरिपाडिअदिढ; E. om. all from संयोजोअ to अज्जचाणक्क further on; मुखी for मुही R. ७ णीइ R. G. For रिपु B. E. N. G. read रिउ; °मणऋजुआ for मणुज्जआ B. E.; °णवज्जु N.; जअइ A. N.; जयदि P.

(परिक्रम्यावलोक्य च[1]।) एसो सो पदेसो अज्जचाणक्कस्स पुरदो उदुम्बरएण कहिदो जेहिं[2] मए अज्जचाणक्काणत्तीए अमच्चरक्खसो पेक्खिदव्वो। (विलोक्य।) कहं[3] एसो क्खु अमच्चरक्खसो किदसीसावगुण्ठणो इदो एव्व आअच्छइ[4]। ता जाव इमेहिं उज्जाणपादवेहिं अन्तरिदसरीरो[5] पेक्खामि कहिं आसनपरिग्गहं करेदि त्ति। (परिक्रम्य[6] स्थितः।) (क)

---

(क) एष स प्रदेश आर्यचाणक्यस्य पुरत उदुम्बरकेन कथितो यत्र मया आर्यचाणक्याज्ञप्त्या अमात्यराक्षसः प्रेक्षितव्यः। कथमेष खल्वमात्यराक्षसः कृतशीर्षावगुण्ठन इत एवागच्छति। तद्यावदेभिरुद्यानपादपैरन्तरितशरीरः प्रेक्षे कुत्रासनपरिग्रहं करोतीति।

---

पुनरपि चाणक्य उपायमारचयति। छग्गुण इति। समागतं राक्षसमतिसंधातुं चाणक्यादिष्टोपायचिकीर्षया करे गृहीतामुद्बन्धनरज्जुं चाणक्यनीतित्वेन निरूपितवान्।

---

१ प...च om. in B. E. N. G; च om. P; पदेसो comes after कहिदो in B. E. N; for पुरदो R. has पुरतो; B. E. N. om. it. For उ° B. N. G. read उन्दुरएण; E. ओदुम्बरएण मम; B.N. read चरेण before कहिदो for which B. E. N. read कथिदो. २ जिहं A.; जहं M. For पेक्खि° E. reads पिक्खि° and for °क्काणत्तीए before that °क्काणीत्तिदीए. ३ कधं B. G.; कहिं A. M. P.; अए. N; om. in E. For रक्ख° G. N. read लक्ख°. N. reads कदावरणो; E. किदावगुण्ठणा; B. किदावगुण्ठणो; G. किधसी°; R. कदसीसावकुण्ठनो°. M. has किदसीसावउण्ठणो. ४ R. M. om. इदो; P. has एदो; for एव्व E. has एव; G. जेव्व; B. N. जेव. For आअच्छइ B. E. N. G. read आअच्छादि. For ता जाव R. has जाजयिव्व, P. ताआव. For what follows G. reads इह्मेहिं जुज्जाणपादपेहिं; B. E. N. read इमेहि जिण्णुजा°; R. M. read पाअवेहिं. ५ अबवारिद B.; अन्तरिय. N.; अन्दरिद M; for आसन M. R. B. N. read आसण and G. E. P. read परिग्रहं. ६ B. N. add तथा, G. E. अव before स्थितः.

(ततः प्रविशति यथानिर्दिष्टः सशस्त्रो[1] राक्षसः ।)

**राक्षसः**—(सास्रम्[2] ।) कष्टं भोः, कष्टम् ।

उच्छिन्ना[3]श्रयकातरेव कुलटा गोत्रान्तरे श्रीर्गता
तामेवानुगता गतानुगतिकास्त्यक्तानुरागाः प्रजाः ।
आप्तैरप्यनवाप्तपौरुषफलैः[4] कार्यस्य धूरुज्झिता
किं कुर्वन्[5]त्वथवोत्तमाङ्गरहितैरङ्गैरिव स्थीयते ॥ ५ ॥

अपि च ।

पतिं त्यक्त्वा देवं[6] भुवनपतिमुच्चैरभिजनं
गता छिद्रेण[7] श्रीर्वृषलमविनीतेव वृषली ।
स्थिरीभूता चास्मिन्किमि[8]ह करवाम स्थिरमपि
प्रयत्नं[9] नो येषां विफलयति दैवं द्विषदिव ॥ ६ ॥

मया हि

देवे गते दिवमतद्विधमृत्युयोग्ये[10]
शैलेश्वरं तमधिकृत्य कृतः प्रयत्नः ।

---

उच्छिन्नाश्रय इति । आप्तैरप्यस्माभिर्दैवोपहतपौरुषफलैरुद्योगः परित्यक्तः अथ अतः परं कर्तव्यप्रयत्नाभावात्किं वा कुर्मः । वाशब्दो भिन्नक्रमः उत्तमाङ्गरहितैरङ्गैः शवैरिवेति यावत्स्थीयते स्थातव्यं प्रसक्तमित्यर्थः ॥ ५ ॥

पतिमिति । उच्चैरभिजनः वंशो यस्य । छिद्रेण कपटेन स्थिरं दृढमपि येषां नः प्रयत्नं द्विषदिव शत्रुवद्दैवमेव द्विषद्भूत्वा विफलयति चेत्किं कुर्मः ॥ ६ ॥

देवे गत इति । अतद्विधः तत्स्वरूपानर्हः मृत्युयोगो यस्य तस्मिन्देवे नन्दे दिवं गते सति शैलेश्वरं पर्वतकमधिकृत्यावलम्ब्य सर्वा-

---

१ सशङ्को. B. २ सबाष्पम्°. B. ३ उच्छन्ना°. B. E.; गोत्रान्तरम्. B. E. N. G. ४ बलैः E. which also reads उत्थिता for उज्झिता; G. reads भूरु° for धूरु°. ५ किं कुर्मस्त्वथवो P. G.; कुर्मस्य R.; for अङ्गैरिव B. N. read नागैश्चिरम्; G. E. नाङ्गैश्चिरम्. ६ दैवम्. N. ७ शीघ्रेण श्रीर्वृषलमिव नीचेव वृषली G. ८ किमह. B. ९ प्रयातुम् B. E. १० योगे A. P.; योगम् R.

तस्मिन्हते तनयमस्य तथाप्यसिद्धि-
दैवं[1] हि नन्दकुलशत्रुरसौ न विप्रः ॥ ७ ॥

अहो विवेकशून्यता म्लेच्छस्य[2] । कुतः ।

यो नष्टानपि बीजनाश[3]मधुना शुश्रूषते स्वामिन-
स्तेषां[4] वैरिभिरक्षतः कथमसौ संधास्यते राक्षसः ।
एतावद्धि[5] विवेकशून्यमनसा म्लेच्छेन नालोचितं
दैवेनोपहतस्य बुद्धिरथ वा सर्वा[6] विपर्यस्यति ॥ ८ ॥

तदिदानीमपि तावदरातिहस्तगतो[7] विनश्येन्नतु राक्षसश्चन्द्रगुप्तेन सह संदधीत । अथवा मम काममसत्यसंध इति वरमयशो न तु

---

र्थसिद्धिप्रतिष्ठापनार्थं कृतः प्रयत्नः । अनन्तरं चाणक्येन राज्यार्धपरिपणनप्रलोभनेन मत्तो विभेद्य स्वायत्तीकृते छद्मना विषकन्यया तस्मिन्पर्वतके हतेऽस्य तनयं मलयकेतुमधिकृत्य कृतः प्रयत्न इत्यनुषङ्गः । दैवमेव प्रबलं किमनेन ब्राह्मणमात्रेण कर्तुं शक्यमित्यनादरेण विप्र इत्युक्तम् ॥ ७ ॥

यो नष्टानिति । बीजनाशमिति णमुलन्तं समूलं नष्टानित्यर्थः । अक्षतः दृढगात्रः । स्पष्टमन्यत् ॥ ८ ॥

संदधीतेति । पूर्वोक्तार्थपरित्यागेनासत्यसंधो जात इति अयशः मम कामं वरं प्रशस्तं इत्यर्धाङ्गीकारे । अथवाशब्दः कदाचिद्दैवगत्या चन्द्र-

---

१ दैवो R. २ B. N. add मलयकेतोः after this. ३ जीवनाशम°. B. E. N. ४ °सोयम् N; for °रक्षतः E. has °रक्षितः. ५ For एतावद्धि M. R. read तावद्बुद्धिः; B. E. इत्थं वस्तु; N. इत्थं बद्ध. For शून्यमनसा B. has मूढमतिना. ६ पूर्वम् B.; सर्वम् G.; पूर्वसत्यम्. E.; and N. reads सर्वात्मना क्षीयते. ७ हस्तं गतो नाशं गच्छेन्न राक्षसः &c. E.; हस्तगतो वनं गच्छेद्राक्षसो न &c. B.; M. N. agree with our text omitting तु. ८ संधिं कुर्यात्. G.; संधिं कुर्यादिति B. E. N.; P. reads अथवा कामं ममासत्यसंध इति वरमयशो नतु शत्रोर्वञ्चनापरिभूत इति; N. वरमसमर्थं इति मे यशो न त्वनायासेन शत्रुणा पराभूत इति; R. G. अथवा सकाममसत्यसंध इति वरमयशो न शत्रुणा पराभूत इति. M. agrees with R. G. reading न for स after. अथवा and परम् for वरम्; B. reads अथवा काममसत्यसंध इति वरमयशो न पुनः शत्रुवचनपरिभूतिः; E. agrees reading न शत्रुणा पराभूत इति instead of न पुनः &c.

शत्रुवञ्चनपराभूत इति। (समन्तादवलोक्य सास्रम्।) एतास्ता देव-पादक्रमणपरिचयपवित्रीकृततलाः कुसुमपुरोपकण्ठभूमयः। इह हि

शार्ङ्गाकर्षावमुक्तप्रशिथिलकविकाप्रग्रहेणात्र देशे
देवेनाकारि चित्रं प्रजविततुरगं बाणमोक्षश्चलेषु।
अस्यामुद्यानराजौ स्थितमिह कथितं राजभिस्तैर्विनेत्थं
संप्रत्यालोक्यमानाः कुसुमपुरभुवो भूयसा दुःखयन्ति॥९॥

तत्क नु गच्छामि मन्दभाग्यः। (विलोक्य।) भवतु। दृष्टमेतज्जीर्णोद्यानम्। अत्र प्रविश्य कुतश्चिच्चन्दनदासप्रवृत्तिमुपलप्स्ये।

---

गुप्तसंधानप्रसक्तिर्वरम्, न तु शत्रुणा चाणक्येन वञ्चनपराभूत इत्ययशो वरम्। वञ्चनेनैवंभूतेन पराभूततया सुहृत्तमचन्दनदासविपद्दुःखानुभवो न वरमिति भावः।

शार्ङ्गाकर्षावमुक्त इति। शार्ङ्गाकर्षावमुक्तः अत एव प्रशिथिलः कविकाप्रग्रहः खलीनवल्गा यस्य अत एव प्रजविततुरगं यथातथा चलेषु लक्ष्येषु स्वयमपि तुरंगवेगवशादतिचलेन देवेन पूर्वं नन्देन बाणमोक्षः कृतश्चित्रमाश्चर्यमिति चललक्ष्यवेधनकौशलमुक्तम्। स्थितं कथितमिति भावे क्तः। तैस्तदादिभिः राजभिर्नन्दैर्विना संप्रतीत्थं शून्या जीर्णाश्च विलोक्यमाना भूयसा बाहुल्येन दुःखयन्ति दुःखवन्तं कुर्वन्ति। णाविष्ठवद्भावेन मतुपो लोपः॥ ९॥

---

१ एतास्तावद्देवस्य पादचङ्क्रमण B. N.; पराक्र° in text G; परिचय om. in M. For तलाः B. reads रथ्याः. २ R. M. om. इह हि. ३ शार्ङ्गाकर्षवि°. A.; शार्ङ्गाकर्षावि°. P.; शार्ङ्गकृष्याव G.; शार्ङ्गज्याकृष्टिमु°. B.; शार्ङ्गज्याघातमुक्ताः E.; चापाकृष्टेर्वि°. N. For कविका R. M. read कलिका. ४ पूर्वम्. R. G. N. M. For तुरगम् N. reads तुरगे, E. तुरगान्. ५ R. reads पङ्क्तौ. noting राजौ as a variant. ६ om. B. N. ७ °मनु. E.; °दासस्य वृत्तान्त° for °दासप्रवृत्ति° B. N. E. (omitting स्य); दासस्य प्रवृ°. R. M. and G. (which also omits चित् out of कुतश्चित्).

[1]अलक्षितनिपाताः पुरुषाणां समविषमदशापरिणतयो भवन्ति। कुतः।

पौरैरङ्गुलिभिर्नवेन्दुवदहं निर्दिश्यमानः शनै-
र्यो राजेव पुरा पुरान्निरगमं राज्ञां सहस्रैर्वृतः।
भूयः संप्रति सो[2]ऽहमेव नगरे तत्रैव वन्ध्यश्रमो
जीर्णो[3]द्यानकमेष तस्कर इव त्रासाद्विशामि द्रुतम् ॥ १० ॥

अथवा येषां प्रसादादिदमासीत्त एव न सन्ति[4]। (नाट्येन प्रविश्याव[5]लोक्य च।) अहो जीर्णोद्यानस्यारमणीयता। [6]अत्र हि

विपर्यस्तं सौधं कुलमिव महारम्भरच[7]नं
सरः शु[8]ष्कं साधोर्हृदयमिव नाशेन सुहृदाम्।
फलैर्हीना वृक्षा विगुणनृप[9]योगादिव नया-
स्तृणैश्छन्नां[10] भूमिर्मतिरिव कुनीतैरविदुषः ॥ ११ ॥

---

अलक्षितनिपाता इति। अतर्कितागमाः।

विपर्यस्तमिति। महारम्भा रचना शिल्पं यस्य सौधस्य महारम्भारचना धर्मादिपुरुषार्थक्रिया यस्य कुलस्य। अविदुषो मूर्खस्य मतिः कुनीतैः कूटनयैः कपटोपदेशैरिव। अत्र जीर्णोद्यानवर्णनव्याजेन सौधकुलादीनामुपमया नन्दकुलविनाशस्तेन स्वहृदयपरिशोषः मलयकेतुयोगात्स्वनयवैफल्यं मलयकेतुमतिविमोहकभागुरायणकुनीतिश्चेत्येते अर्थाश्च ध्वनिताः ॥ ११ ॥

---

१ (परिक्रम्य स्वगतम्) अहो before this B. N; with this agrees. G. omitting स्वगतम्; and E. keeps only अहो out of this. For अलक्षितनि° B. E. N. read अलक्षितोपनि°; B. N. read विभाग between दशा and परिणतयो; G. only वि. २ सोयमेव. P. ३ शीर्णोंद्यानकमेकतस्कर इव. E. ४ For न सन्ति. R. M. read संप्रति°; P. G. read न संप्रति. ५ °श्य विलो° B. N.; स्यानभिर° for स्यारमणीय° B. N.; °स्य रं° G. P.; °स्य निरभिर° E. ६ तथाहि A. P. ७ वचनम्. G. ८ शुष्कम्. P.; सुहृदः for सुहृदाम् A.; B. N. ९ विधि. B. E. १० तृणैश्छन्नः कुर्यां मति° G.; for कुनीतैर°. कूनीतेर N. G. R.

अपि च[1] ।

> क्षताङ्गानां[2] तीक्ष्णैः परशुभिरुदग्रैः क्षितिरुहां
> रुजा कूजन्तीनामविरतकपोतोपरुदितैः ।
> स्वनिर्मोकच्छेदैः परिचितपरिक्लेशकृपया
> श्वसन्तः शाखानां व्रणमिव निबध्नन्ति फणिनः ॥१२॥

एते च तपस्विनः[3]

> अन्तःशरीरपरिशोषमुदग्रं[4]यन्तः
> कीटक्षतिस्रुतिभिरस्रमिवोद्वमन्तः[5] ।
> छायावियोगमलिना[6] व्यसने निमग्ना
> वृक्षाः श्मशानमुपगन्तुमिव प्रवृत्ताः ॥ १३ ॥

---

क्षताङ्गानामिति । उदग्रक्रमभृतां अत्यन्तशुष्कानां रुजा कूजन्तीनामिवेति गम्योत्प्रेक्षा । परिचितपरिक्लेशनिमित्तकृपयेवेति फणिनां स्वाभाविकं श्वसनं कृपाहेतुत्वेनोत्प्रेक्ष्यते। यथा केचित्कृपालवः परिचितजनानां रुजा क्लिश्यमानानां तीक्ष्णशस्त्रव्रणान्कृपया दुःखेन निश्वसन्तः पटच्छेदैर्निबध्नन्ति तद्वदित्युत्प्रेक्षा ॥ १२ ॥

अन्तःशरीरेति । तपस्विनो दीना जलसेकाभावात् अन्तःशोषमुपदर्शयन्तः कीटक्षतिस्रुतिभिः कीटक्षतिरन्ध्रनिर्यासैरस्रमश्रु उद्वमन्त इव छायावियोगेन निष्पर्णतया छायाभावेन मलिनाः शुष्का इत्यर्थः। वृक्षाश्छायावियोगमलिना आतपक्लिष्टा व्यसने निमग्नाः नन्दबन्धवः इव नन्दानां श्मशानं तत्रैव विद्यमानमुपगन्तुं प्रवृत्ता इवेत्युत्प्रेक्षा ॥ १३ ॥

---

१ B. N. add अत्र after this. २ क्षताङ्गीनाम् R. N.; अव्यङ्गीनाम्. E.; °रुदग्रक्रमभृताम् for °रुदग्रैः क्षितिरुहां A. P. G. E. N. ३ °स्विनो वृक्षाः B. N.; °स्विनो. E. ४ °मुदीर° P. N.; °मुदार° A.; °मुपाश्र B. ५ कीटक्षतिं शुचमिवातिगुरुं वहन्तः B. E. N. G.; for क्षति in our text P. has क्षत. ६ मलिनैर्व्यसनैर्निमग्नाः G.

यावदस्मिन्विषमदशापरिणामसुलभे भिन्नशिलातले मुहूर्त्तमुपविशामि । (उपविश्याकर्ण्य च ।) अये, किमिदमस्मिन्काले पटुपटहशङ्खमिश्रो नान्दीनादः । य एष

प्रमृद्नञ्श्रोतॄणां श्रुतिपथमसारं गुरुतया
बहुत्वात्प्रासादैः सपदि परिपीतोज्झित इव ।
असौ नान्दीनादः पटुपटहशङ्खध्वनियुतो
दिशां द्रष्टुं दैर्घ्यं प्रसरति सकौतूहल इव ॥ १४ ॥

(विचिन्त्य ।) आः, ज्ञातम् । एष हि मलयकेतुसंयमनसंजातो राजकुलस्य—(इत्यर्धोक्ते सासूयम् ।) मौर्यकुलस्याधिकपरितोषं पिशुनयति । (सबाष्पम् ।) कष्टं भोः, कष्टम् ।

---

यावदिति । विषमदशापरिणामवत्सुलभे विषमदशा संप्रति सुलभा अतर्कितोपनता तथेदं शिलातलं दैवाल्लब्धमित्यर्थः ।

प्रमृद्नन्निति । नान्दीनादो मङ्गलतूर्यध्वनिः । अविद्यमानः सारः प्रसारो विस्तारो यस्य तमसारं संकुचितमित्यर्थः । श्रुतिपथं गुरुतया प्रभूततया प्रमृद्नन्पीडयन् । यथा संकुचिते रन्ध्रे गुरुर्मुद्गरादिः प्रविशंस्तदुपमृद्नाति तद्वदित्यर्थः । बहुपीतं जलादि यथा उद्गिरन्ति तथा अन्तरमान्तं नान्दीनादं प्रतिध्वनिव्याजेन सौधा उद्गिरन्तीवेत्युत्प्रेक्षा । दिशो दैर्घ्यं द्रष्टुमिति सकलदिग्व्यापित्वमुक्तम् ॥ १४ ॥

सासूयमिति । एष नान्दीनादः । मौर्ये राजशब्दं वक्तुमसूया ।

---

१ तद्याव° B. N; भग्नाग्र for भिन्न° B. N.; भग्न E. २ B. N. E. read अये तत्किमयमाकस्मिकः शङ्खपटहवि ( Om. E. ) मिश्रो नान्दीनादः श्रूयते; A. P. G. in our text read निनादः for नादः; R. G. read तत्किमिदम् &c. ३ प्रमृध्नन् M.; प्रमथ्नन् R.; प्रकुर्वन् B.; प्रगृह्णन् N. ४ अहो B; महान्. B.; °रहो E. for युतो. ५ दैर्घ्यं द्रष्टुम् B. N; °हलमिव for हल इव R. M. ६ आं B. N. after which A. P. have भवतु and G. भवत्वेवम् instead of ज्ञातम्; R. for एष हि reads य एष and B. N. read कृत for संजातो. ७ सासूयम् om. B. N.; °क्तौ सा° A. P.; क्तौनाधिकम् G.; क्तोनाधिकं खलु E.; मौर्यस्य कुलस्य परि° G. E.; मौर्यकुलस्य परि° A. P. ८ R. M. om. कष्टं...ष्टम्.

श्रावितोऽस्मि[1] श्रियं शत्रोरभिनीय च दर्शितः[2]।
अनुभावयितुं मन्ये यत्नः संप्रति मां विधेः ॥ १५ ॥

**पुरुषः**—आसीणो अअं[3]। जाव अज्जचाणक्कादेसं संपादेमि। (क)
(राक्षसमपश्यन्निव[4] तस्याग्रतो रज्जुपाशेन कण्ठमुद्बध्नाति।)

**राक्षसः**—(विलोक्य[5]।) अये, कथमात्मानमुद्बध्नात्ययमहमिव दुःखितस्तपस्वी। भवतु। पृच्छाम्येनम्। भद्र[6], किमिदमनुष्ठीयते।

**पुरुषः**—(सबाष्पम्।) अज्ज[7], जं पिअवअस्सविणासदुःखिदो अह्मारिसो मन्दभग्गो अणुचिट्ठदि। (ख)

**राक्षसः**—(आत्मगतम्[8]।) प्रथममेव मया ज्ञातं नूनमहमिवा-

---

(क) आसीनोऽयम्। यावदार्यचाणक्यादेशं संपादयामि।
(ख) आर्य, यत्प्रियवयस्यविनाशदुःखितोऽस्मादृशो मन्दभाग्योऽनुतिष्ठति।

---

अनुभावयितुमिति। चन्दनदासविपद्विमोक्षानुरोधेनेदमिव विधिबलादागत्य गले पतितमिति भावः।

---

१ °तोपि R. M.; °तोस्ति A; श्रिया for श्रियम् M. R. २ विना B. ३ इमो M.; अयम् G. E; after this B. N. have ता before जाव; °क्कस्स आणत्तिं for °क्कादेसं B. N.; °क्कसदेसं अनुचिट्ठामि E. ४ इति before this N; for कण्ठ B. E. N. G. read आत्मन°. For उद्बध्नाति R. G. read अनुब°. ५ Om. G.; दृष्ट्वा E.; स्वगतम् after this in B. N. After कथम् B. N. read अयम्; G. has अनुबध्नाति, P. उपब°; for अयम् here B. E. N. read नूनम्. ६ B. N. read before this उपसृत्य प्रकाशम्। भद्र; E. simply उपसृत्य. ७ Om. E. M. R; अज्ज om. G. M. R. P; वयस्स for वअस्स R. For दुःखिदो E. has दुक्खिदो and for अह्मारिसो A. P. अम्मारिसो. For भग्गो B. N. read भाओ अनुचि°. ८ स्वग° B. N; पूर्व° for प्रथम° A.P; तावत् before मया B.N; नूनम् om. A.P.

र्त्तस्तपस्वीति[१] । (प्रकाशम् ।) हे व्यसनसब्रह्मचारिन्, यदि न गुह्यं नातिभारिकं वा ततः श्रोतुमिच्छामि[२] ।

पुरुषः—अज्ज[३], ण रहस्सं णादिगुरुअं । किंदु ण सक्कोमि पिअव-अस्सविणासदुक्खिदहिअओ[४] एत्तिअमेत्तं वि मरणस्स कालहरणं कादुं । (क)

राक्षसः—(निःश्वस्यात्मगतम्[५] ।) कष्टमेते सुहृद्व्यसनेषु परमुदासीनाः प्रत्यादिश्यामहे वयमनेन । (प्रकाशम्[६] ।) भद्र, यदि न रहस्यं नातिगुरु[७] तच्छ्रोतुमिच्छामि ।

---

(क) आर्य, न रहस्यं नातिगुरुकम् । किं तु न शक्नोमि प्रियवयस्यविनाशदुःखितहृदय, एतावन्मात्रमपि मरणस्य कालहरणं कर्तुम् ।

---

हे व्यसन इति । व्यसनसब्रह्मचारिन् समानव्यसन । भारिकं भारवत् । मत्वर्थीयष्ठन् । यदि नातिभारिकं नातिमहत्तर्हि कथयेत्यर्थः ।

प्रत्यादिश्यामह इति । प्रत्यादेशः प्रतिषेधः । उपालभ्यामह इति यावत् ।

---

१ B. N. add अयम् before आर्तः and om. इति after तपस्वी and read instead भवतु पृच्छाम्येनम्; E. has both इति and भ...नम्, G. also—reading भवतु नामैनं पृच्छामि; For हे further on B. N. read भद्र; स om. in R. and न om. in B. N; for गुह्यम् E. has रहस्यम्; R.E. M. om. वा. २ B. has after this किं ते प्राणपरित्यागकारणम्. ३ निरूप्य before this B. N. A. After रहस्सं B. N. read ण वा अतिगु°, G. णच अइगु°, E. णयाअइग.° For किंदु B. E. N. G. read किंतु; सक्कणेमि for सक्कोमि A. P.; शक्कणोमि G.; सक्कणोमि B.N. ४ P. reads वअस्सस्स; B. वस्स(?); E. om. the word and reads further on दुक्खियसरीरो; अत्ति° for एत्ति° R; for वि B. E. N. read पि, G. पिअ; P. reads एत्तिअमेतं वि and E. कातुं for कादुं. ५ A. M. P. R. om. आत्मग°; E. om. नि...म्; B.N. read कष्टमेतेषु; E. reads व्यसने for व्यसनेषु. and B. E. N. G. read परवदुदा° for परमुदा°. ६ M. R. G. om. प्रकाशम्; P. om. that and the rest of the speech also. ७ For गुरु R. reads गुरुकं, G. गुरुकं वा; B. E. N. read गुरु वा. For तत् G. E. read ततः; B. N. तत्पुनः; A. om. तत्. After इच्छामि. B. N. add कथ्यतां का गतिर्दुःखस्येति.

**पुरुषः**—अहो णिब्बंधो[1] अज्जस्स। का गई। णिवेदेमि। अत्थि दाव[2] एत्थ णअरे मणिआरसेट्ठी विह्णुदासो णाम। (क)

**राक्षसः**—(आत्मगतम्[3]।) अस्ति विष्णुदासश्चन्दनदासस्य सुहृत्। (प्रकाशम्।) किं तस्य।

**पुरुषः**—सो[4] मम पिअवअस्सो। (ख)

**राक्षसः**—(सहर्षमात्मगतम्।) अये[5] प्रियवयस्य इत्याह। अत्यन्तसंनिकृष्टः[6] संबन्धः। हन्त, ज्ञास्यति चन्दनदासस्य वृत्तान्तम्। (प्रकाशम्[7]।) भद्र, किं तस्य।

**पुरुषः**—सो[8] संपदं दिण्णाभरणादिविहवो जलणं पवेसिदुकामो

---

(क) अहो निर्बन्ध आर्यस्य। का गतिः। निवेदयामि। अस्ति तावदत्र नगरे मणिकारश्रेष्ठी विष्णुदासो नाम।

(ख) स मम प्रियवयस्यः।

(ग) स संप्रति दत्ताभरणादिविभवो ज्वलनं प्रवेष्टुकामो नगरान्निष्क्रान्तः।

---

१ निबन्धो. E.; for गई B. E. N. G. read गदी; B. E. N. add एसो before णिवेदेमि. २ B. E. N. om. दाव; M. has अदाव. For मणिआर E. has सोवयार. For विह्णु E. has जिन्हु, B. N. जिण्णु. For णाम P. has नामा. ३ स्वग° B. E. N.; for विष्णु B. E. N. read जिष्णु°; for सु...तस्य B. E. read परं मित्रम्; N. परमसुहृत्। प्रकाशम्॥ बाढमस्ति तस्य किम्; G. has सुहृत्। भवतु॥ प्रकाशम्॥ ततः किं तस्य; R. agrees omitting भवतु; M. has सुहृत्॥ प्रकाशम्॥ ततस्तस्य किम्. ४ Om. A; for मम R. reads मह. For सो मम E. has स मे. ५ Om. E. ६ हन्त before this B. E. N.; अत्यन्त om. E.; अत्यन्तम्. P.; संनिकृष्टसंबद्धः B. N.; हन्त here om. B. E. N. M.; स्य in °सस्य om. G. ७ प्र-स्य om. B. N. G.; प्रकाशम्। ततस्ततः M. R. ८ सबाष्पम् before this and this after संपदं B. N; E. has सोवि; for दिण्णा° B. E. N. G. read दीणजणदिण्णविहवो (°भवो. G.); पविसी° for पवेसि° B. E. N. G.

णअरादो णिक्कन्तो[1]। अहं वि जाव तस्स असुणिदव्वं ण सुणेमि ताव अत्ताणं उब्बन्धिअ वावादइदुं इमं[2] जिण्णुज्जाणं आअदो। (ग)

**राक्षसः**—भद्र, अग्निप्रवेशे[3] सुहृदस्ते को हेतुः।

किमौषध[4]पथातिगैरुपहतो महाव्याधिभिः

**पुरुषः**—णहि[5] णहि। (क)

**राक्षसः**—

किमग्निविषकल्पया[6] नरपतेर्निरस्तः क्रुधा।

**पुरुषः**—अज्ज, सन्तं पावं[7] सन्तं पावं। चन्दउत्तस्स जणवदे ण णिसंसापडिवत्ति। (ख)

---

अहमपि यावत्तस्याश्रोतव्यं न शृणोमि तावदात्मानमुद्बध्य व्यापादयितुमिमं जीर्णोद्यानमागतः।

(क) नहि नहि।

(ख) आर्य, शान्तं पापं शान्तं पापम्। चन्द्रगुप्तस्य जनपदे न नृशंसाप्रतिपत्तिः।

---

किमौषधपथातिगैरिति। अचिकित्स्यमहाव्याधीराजक्रोधोऽगम्यगुरुदारादिप्रधर्षणमप्रतीकार्यसुहृद्विनाशश्चैतान्यात्मघातनिमित्तानीति भावः। रोगाक्रान्ततया तस्य न मरणव्यवसाय इत्यर्थः।

---

१ For णिक्कन्तो R. E. read णिक्कन्दो after which B. N. read ता before अहंवि, B. E. N. G. read अहंपि and G. reads ता after this. For जाव P. reads ज्जाव; B. N. read पिअवअस्सस्स before असुणिदव्वं. For सुणेमि M. R. read सुणोमि°; G. E. सुणामि. For ताव R. has दाव; E. वाव. E. continues with अताणयंवावादेदुं; G. अप्पाणं उव्वन्धिअ वोवाददुं; B.N. read वावादेमित्ति; A. P. वावादयिदुं. २ इदं M.; जिण्णोज्जा° P. For आअदो P. G. E. read आ गदो. ३ B. E. N. G. read अथाग्निप्र° and B. N. read तव before सुहृदः and om ते. ४ °षधि B. N. ५ R. G. E. om. one णहि and B. E. N. read अज्ज before this. ६ कन्यया P. ७ सान्तं वावं G. which and M. and R. om. one स...वं; E. has only अज्ज स (?) चन्द°; B. N. read एदं णत्थि; before चन्द° G.; सव्वं °वदेसु अणि° for °वदेण णि° B. N.; वदे अणि G. E. For पडि° E. has पडिवत्ती, A. पडिउत्ति, P. पडिवुत्ति.

**राक्षसः**—

अलभ्यमनुरक्तवान्कथय किंनु नारीजनं

**पुरुषः**—(कर्णौ पिधाय ।) सन्तं पावं[2] । अभूमि क्खु एसो अविणअस्स ।

**राक्षसः**—

किमस्य भवतो यथा सुहृद एव नाशोऽवशः[3] ॥१६॥

**पुरुषः**—अज्ज, अह इं[4] ।

**राक्षसः**— (सावेगमात्मगतम् ।) चन्दनदासस्य[5] प्रियसुहृदिति तद्विनाशो हुतभुजि प्रवेशहेतुरिति यत्सत्यं चलितमेवास्ते युक्तस्नेहपक्षपाताद्धृदयम्[6] । (प्रकाशम् ।) तद्विनाशं च प्रियसुहृद्वत्सलतया मर्तव्ये[7] व्यवसितस्य सुचरितं च विस्तरेण श्रोतुमिच्छामि ।

---

(क) शान्तं पापम् । अभूमिः खल्वेषोऽविनयस्य ।

(ख) आर्य, अथ किम् ।

---

अवशोऽप्रतीकार्यः ॥ १६ ॥

चलितमेवास्त इति । चलितमास्त इति यत्तद्युक्तमेवेति व्यवहितेनान्वयः ।

तद्विनाशमिति । मृत्युं च सुचरितं च विस्तरेण श्रोतुमिच्छामि ।

---

१ किमयमन्यनारी° B. N.; कथय किं कुमारी° P. २ अज्ज शान्तं वावं for this in G. and स...वं twice B. N. For अभूमि M. R. G. E. अभूमी; P. °मिः; एस विणअ णिधाणस्स सेट्ठिजणस्स विसेसदो जिण्णुदासस्स for एसो अविणअस्स B. N; with this G. agrees reading एसो for एस and adding वसीकदस्स before सेट्ठि and E. agrees omitting all between एसो and सेट्ठि°. ३ विषम् R. E. N. G. ४ B. N. read अधइं; G.E अधकिम्. ५ °सोस्य सुहृदः प्रि° B.N.; °सोस्यप्रि° G. E.; प्रियसुहृत्तमस्तस्य प्रियसुहृद्विनाश एवाग्निप्रवेशहेतुरिति यत्समाकुलित एवास्मि B. N.; प्रियसुहृत्तस्य विनासो (*sic*) स्य हुतभुक्प्रवेशहेतुरिति यत्सत्यमाकुलित इवास्मि E. Our text is what occurs in G. exceptप्रवेश for प्रवेश and मे before चलित° (with this M. agrees) and °वास्ति for °वास्ते; A. agrees with our text, reading सुहृद्विनाशोस्य for तद्विनाशो and P.reads सुहृद्विनाशो ह्यस्य द्रुतमग्निप्रवेश &c. ६ For यु...यम् B. N. E. read सुहृत्स्नेहपक्षपातिना हृदयेन. A. P. add after this तद्यावन्निपुणतरं पृच्छामि. ७ For all between this and प्रकाशम् B. N. read भद्र तस्यापि तव सुहृदः; E. agrees reading प्रियसुहृदः सुहृद्वत्सलतया श्रोतव्यचरितस्य; R. G. read as in the text, G. reading however श्रोतव्य for मर्तव्ये and R. reading तस्य before सुचरितम् and मन्तव्ये (?) for मर्तव्ये.

पुरुषः—अदो[1] अवरं ण सक्कोमि मन्दभग्गो मरणस्स विग्घमुप्पादेदुं। (क)

राक्षसः—भद्र[2], श्रवणीयां कथां कथय।

पुरुषः—का[3] गई। किं कादव्वम्। एसो क्खु णिवेदेमि। सुणोदु अज्जो। (ख)

राक्षसः—भद्र[4], अवहितोऽस्मि।

पुरुषः—अत्थि एत्थ[5] णअरे मणिआरसेट्ठी चन्दनदासो णाम। (ग)

राक्षसः—(सविषादमात्मगतम्[6]।) एतत्तदपावृतमस्मच्छोकदीक्षाद्वारं दैवेन[7]। हृदय, स्थिरीभव। किमपि ते कष्टतरमाकर्णनीयमस्ति[8]। (प्रकाशम्।) भद्र, श्रूयते मित्रवत्सलः साधुः। किं तस्य।

---

(क) अतोऽपरं न शक्नोमि मन्दभाग्यो मरणस्य विघ्नमुत्पादयितुम्।

(ख) का गतिः। किं कर्तव्यम्। एष खलु निवेदयामि। शृणोत्वार्यः।

(ग) अस्ति इह नगरे मणिकारश्रेष्ठी चन्दनदासो नाम।

---

शोकदीक्षाद्वारमिति। शोकदीक्षा शोकानुभवनियमस्तद्द्वारमागमनमार्गः।

---

1 Before this B. N. E. read अज्ज, P. अहो; for अदो P. has इदो and for अवरं E. अपरे; R. om. it. For सक्कोमि A. has सकुणो°, G. सक्कोणो°, E. सकणो. For म...ग्गो R. reads मन्दभाग्यो, B. G. N. मन्दभाओ.; E. om. स्स in मरणस्स; R. seems to read विह्नं for विग्घं and G. E. विघ्नं; E. also has उपादेदुं for उप्पा°. 2 Om. B. E. N. G. R; for कथय B. E. N. G. read कथयतु भद्रमुखः. E. reads before this श्रवणीयाः कथाः. 3 A.P. read before this अहो णिव्बन्धो. For का गई B. E. N. read कागदी and om. किं...व्वं; G. reads कदव्वं. For सुणोदु M. P. G. read सुणादु; B. E. N. णिसामेदु. 4 R. M. om. भद्र; B. E. N. G. read दत्तावधानोस्मि. 5 B. N. add before this जाणादि अज्जो; E. has एत्थ जाणादि जेव अज्जो; for एत्थ M. has इत्थ and E. इह. After णअरे G. E. have पुप्फउराणि (पुरनि E.) वासी. 6 °दं स्वगतम् G; in एतत्त°; P. om. तत्; G. reads अपाकृतं and E. अपावृत्त. For शोक B. N. read विनाश; A. P. om. दीक्षा and B. N. add प्रकाश and E. प्रवेश before द्वारं. 7 देवेन A.; दैवेनाकृतम् E. which adds भद्र before हृदय and reads अनिष्ट for कष्ट. 8 B. E. N. om. अस्ति; E. om. भद्र after this and reads श्रूयते after मित्र°; B. E. N. G. add स before साधुः.

पुरुषः—सो एदस्स विह्णु[१]दासस्स पिअवअस्सो होदि। (क)

राक्षसः—(स्व[२]गतम्।) सोऽयमभ्यर्णः शोकवज्रपातो हृदयस्य।

पुरुषः—त[३]दो विह्णुदासेण वअस्ससिणेहसरिसं अज्ज विण्णविदो[४] चन्दउत्तो। (ख)

राक्षसः—कथयं[५] किमिति।

पुरुषः—देव, महं[६] गेहे कुडुम्बभरणपज्जत्ता अत्थवत्ता अत्थि। ता एदिणा विणिमं[७]एण मुञ्चिज्जदु पिअवअस्सो चन्दणदासो त्ति। (ग)

राक्षसः—(स्वगतम्।) साधु[८] भो विष्णुदास, साधु। अहो, दर्शितो मित्रस्नेहः। कुतः।

---

(क) स एतस्य विष्णुदासस्य प्रियवयस्यो भवति।

(ख) ततो विष्णुदासेन वयस्यस्नेहसदृशमद्य विज्ञप्तश्चन्द्रगुप्तः।

(ग) देव, मम गेहे कुटुम्बभरणपर्याप्तार्थवत्तास्ति। तदेतेन विनिमयेन मुच्यतां प्रियवयस्यश्चन्दनदास इति।

---

१ For ए...ह्णु° B. N. read अ तस्स जिण्णु°, E. क (?) तस्स जिण्णु; G. has जिण्णु for विह्णु°; P. om. विह्णु°; R. reads वियवयस्सो and G. E. read भोदि; A. om. this whole speech. २ आत्मग.° E.; for सो...र्णः... B.N. read अयमत्यन्तः, E. अये अयमभ्यर्णः; B. N. add प्रकाशम्॥ ततस्ततः ३ वदा (?) for तदो E. B.; E. N. have पिअ before वअस्स and B. N. स्स after it. ४ विण्णत्तो B. N. ५ Om. E.; स्वगतम् before this in G. ६ For म...हे R. has मग्गेहे, B. E. N. G. अत्थि मे गेहे. For कुडुम्ब B. E. N. G. P. read कुटुम्ब; B. N. read पज्जत्तोअत्थो तस्स; E. has अत्थमत्ता and G. E. om. अत्थि; R. has दा एदिणा. ७ विणिमयेण B. N. G.; विणिमएदेन (?) E. For मु...दु A. P. E. read मुञ्चेदु; B. N. G. मुञ्चदु; B. E. N. have मे after मु°. ८ G. has भद्र before this; B. N. om. भो.

पितॄन्पुत्रा[1]ः पुत्रान्परवदभिहिंसन्ति पितरो
यदर्थं सौहार्दं सुहृदि च विमुञ्चन्ति[2] सुहृदः।
प्रि[3]यं मोक्तुं तद्यो व्यसनमिव सद्यो व्यवसितः
कृतार्थोऽयं सोऽर्थस्तव सति वणिक्त्वेऽपि वणिजः ॥ १७ ॥

(प्रकाशम्।) भद्र[4], ततस्तथाभिहितेन किं प्रतिपन्नं मौर्येण।

पुरुषः—अज्ज[5], तदो एवं भणिदेण चन्दउत्तेण पडिभणिदो सेट्ठी विह्णुदासो—'ण मए अत्थस्स कार[6]णेण चन्दणदासो संजमितो, किंदु पच्छादिदो अ[7]णेण अमच्चरक्खसस्स घरअणोत्ति

---

(क) आर्य, तत एवं भणितेन चन्द्रगुप्तेन प्रतिभणितः श्रेष्ठी विष्णुदासः 'न मयार्थस्य कारणेन चन्दनदासः संयमितः, किंतु प्रच्छादितोऽनेनामात्यराक्षसस्य गृहजन इति बहुशो ज्ञातम्। तेनापि बहुशो याचितेनापि न समर्पितः।

---

पितॄनिति। तदिति सामान्ये नपुंसकं तद्योसद्यो इति अनुप्रासलोभेन प्रयुक्तमग्रे सोऽर्थ इति पुल्लिङ्गेन निर्देशात्। तमर्थं व्यसनमिव स्त्रीद्यूतपानादिव्यसनमिव। तद्धि व्यसनिभिरतिप्रियतया दुस्त्यजमिति भावः। वणिक्त्वेऽपि वणिजामर्थलोभः सहजो दोष इति भावः ॥ १७ ॥

---

१ N. reads भ्रातॄन् here and मनुजाः for पितरो; R. has this after पुत्रान्; for अभिहिंसन्ति B. reads अभिसंधाय. २ B. N. समुज्झन्ति; G. घनमुज्झन्ति G. ३ प्रियं सद्यस्त्यक्तं व्यसनिनि वयस्ये व्यवसितः B; our text agrees with G. except that G. has सद्यो for तद्यो and व्यवसितिः for व्यवसितः; E. has प्रियं सन्तं त्यक्तुम् &c. as in B.; प्रियं तं संत्यक्तुं व्यसनमिव यस्य व्यवसितः (सितिः?) N. ४ Om. R. P.; सता before किम् B. N. ५ A. P. om. अज्ज तदो; M. R. om. तदो; R. reads एव्वं; M.R.om. भणिदेण...पडि; G. reads भणिदो(?) for भणिदेण, E. चन्दगुत्ते°, B. N. om. सेट्ठी and B. E. N. add जिण्णुदास before णमए. ६ कालणे° B. N.; कारणे M.R. G.; कारणेन P; R. reads अत्थस्य; B. E. N. add सेट्ठी before संज° after which B. N. read चन्दनदासो; R. G. E. read संजमिदो; for किंदु B. E. N. G. read किंतु. ७ °दिदोणेण P.; °दिदूणेन R.; °इदो G.

बहुसो जाणिदं। तेण वि[1] बहुसो जाचिदेण ण समप्पिदो। ता जदि तं समप्पेदि तदो अत्थि से मोक्खो। अण्णहा[2] पाणहरो से दण्डो' त्ति भणिअ वज्झट्ठाणं[3] आणविदो चन्दणदासो। तदो जाव वअस्सचन्दणदासस्स असुणिदव्वं ण सुणोमि[4] ताव जलणं पविसामित्ति सेट्ठी विह्णुदासो णअरादो णिक्कन्दो। अहंवि[5] विह्णुदासस्स असुणिदव्वं जाव ण सुणोमि तावं[6] उब्बन्धिअ अत्ताणं वावादेमि त्ति इदं[7] जिण्णुज्जाणं आअदो। (क)

---

तद्यदि तं समपर्यति तदस्ति अस्य मोक्षः। अन्यथा प्राणहरोऽस्य दण्डः' इति भणित्वा वध्यस्थानमानयितश्चन्दनदासः। ततो यावदस्य चन्दनदासस्याश्रोतव्यं न शृणोमि तावज्ज्वलनं प्रविशामीति श्रेष्ठी विष्णुदासो नगरान्निष्क्रान्तः। अहमपि विष्णुदासस्याश्रोतव्यं यावन्न शृणोमि तावदुद्बन्ध्यात्मानं व्यापादयामीतीमं जीर्णोद्यानमागतः।

---

१ त्ति...वि om. B. E. N. G; for जाचि° R. reads याचि°, M. आचि°, G. जाचअंतेण वि; जाचियंतेण वि in E. which also adds वि after बहुसो; B. N. read जाचिदेणावि, also त्ति after समप्पिदो. For णं...दो G. reads अमच्चरक्खसर(? घर) जणो ण समप्पिदो; जइ for जदि B. N.; यदि E. For तं B. N. read अमच्चरक्खसस्स घरअणे; P. om. से before मोक्खो. २ अण्णधा B. N.; अण्णत्था E; अण्णहाच (?) G.; प्पाण B. N. G. After दण्डो and before त्ति B. E. N. G. read अह्मकोपं ( वंG. ) पडिमाणेदु (माज्जेदु E., वज्जेदु G.) त्ति; B. N. add further अण्णो वि जणो एवं ण करइस्सदित्ति. ३ वज्झस्सेठाणे A; for आणविदो G. has अज्जआणत्तो; B. N. आणीदो omitting च...सो; for वज्झ... तदो E. reads तवयस्सोतदो (?) For वअस्सच...स्स A. P. read अस्स; B. N. E. पिअवअस्सस्स च...स्स. ४ सुणेमि B. E. N. After ताव B. N. read जेव (जेव्व E.) अत्ताणअंवावादेमित्तिज°; E. om. all from जेव to णिक्कन्दो. For जलणं R. G. have जलणं, B. N. जलणे; for प...त्ति B. N. read पविसिदुकामो, A. पविशामित्ति; for णिक्कन्दो B. N. read णिग्गदो. ५ G. om. वि; B. N; read पिजावपिअवअस्सस्स जिण्णु°; G. E. जावजिणु; B. E. N. G. om. जाव in our text; G. om. ण also; B. N. A. P. read सुणेमि. ६ दाव R; उब्बन्धिअ om. E; for अत्ताणं B. N. have अत्ताणअं, E. अत्ताणयं; for वावा...मि R. has वामेवि (?), E. परिव्वायामि. For त्ति P. has इति. ७ इमं B. N. G. for आअदो B. N. E. read आगदोह्मि, G. आगदो.

**राक्षसः**—भद्रं[1], न खलु व्यापादितश्चन्दनदासः ।

**पुरुषः**—अज्ज दाव[2] वावादीअदि । सो खु संपदं पुणो पुणो अमच्चरक्खसस्स घरअणं[3] जाचीअदि । ण खु सो मित्तवत्सलदाए समप्पेदि[4] ता एदिणा कालणेण ण करेमि मरणस्स कालहरणं । (क)

**राक्षसः**—(सहर्षमात्मगतम् ।)साधु वयस्य चन्दनदास, साधु[5] ।

> शिबेरिव समुद्भूतं शरणागतरक्षया[6] ।
> निचीयते[7] त्वया साधो यशोऽपि सुहृदा विना ॥ १८ ॥

(प्रकाशम् ।) भद्र, गच्छ[8] गच्छेदानीम् । शीघ्रं विष्णुदासं ज्वलनप्रवेशान्निवारय । अहमपि चन्दनदासं मरणान्मोचयामि ।

---

(क) अद्य तावद्व्यापाद्यते । स खलु सांप्रतं पुनः पुनरमात्यराक्षसस्य गृहजनं याच्यते । न खलु स मित्रवत्सलतया समर्पयति । तदेतेन कारणेन न करोमि मरणस्य कालहरणम् ।

---

शिबेरिवेति । शिबेरिवेतीवशब्दो भिन्नक्रमः यशसा संबध्यते । शरणागतरक्षया हेतुना समुद्भूतं समुत्पन्नं शिबेर्यश इव त्वया यशो निचीयते संपाद्यते । 'शिबिनेव' इति तृतीयान्तः पाठः सुगमः । तेन हि शरणागतस्य सन्निधावेव स्वविनाशोऽभ्युपगतः । त्वया तु सुहृदा विनापि । अपिशब्दो भिन्नक्रमः । ममासंनिधान इदं यशो निचीयत इत्यहो शिबेरपि त्वमधिकगुणः श्लाघ्योऽसीति भावः ॥ १८ ॥

---

१ भद्र भद्र G.; om. in B. N. R. २ ण before this B. E. N.; जाव P.; वावादीयदि G. E., °दयदि R. (?) ३ घरजणं B. N. G.; घरयणं E. For जाची° M. R. read आर्ची°, E. या°, M. आच°; B. E. N. om. खु; for वत्सल R. has अच्छले, G. reads °लदाये. ४ Before this B. N. read जाचीअन्तोपि तं. For कालणेन E. has कारणेण. For ण करेमि B. N. read होदि से, E. भोदि से, G. होदि; G. R. read मलणस्स and B. N. read हलणं. ५ om. E; before च ...स. G.; twice here B. N. ६ रक्षणात् N. E. ७ नदीयते N.; विचीयते B.; नन्नीयते (?) E. ८ B. N. read भद्र भद्र गच्छ शीघ्रमिदानीम्.

पुरुषः—अह[1] उण केण उवाएण तुमं चन्दणदासं मरणादो मोचेसि। (क)

राक्षसः—(खड्गमाकृष्य।) नन्वनेन[2] व्यवसायसुहृदा निस्त्रिंशेन। पश्य[3]।

निस्त्रिंशोऽयं सजलजलदव्योमसंकाशमूर्ति-[4]
युद्धश्रद्धापुलकित इव प्राप्तसख्यः करेण।
सत्त्वोत्कर्षात्समरनिकषे दृष्टसारः परैर्मे
मित्रस्नेहाद्विवशमधुना[5] साहसे मां नियुङ्क्ते॥ १९॥

---

(क) अथ पुनः केनोपायेन त्वं चन्दनदासं मरणान्मोचयसि।

---

निस्त्रिंशोऽयमिति। व्यवसायः उत्साहः। पौरुषमिति यावत्। तदेकसहायेन खड्गेन तत्सर्वं मौर्यबलमुत्साद्य सुहृदं मोचयामीत्यर्थः। सजलः जलधारासहितश्चासौ जलदव्योमसंकाशमूर्तिश्चेति विशेषणकर्मधारयः नैल्यनैर्मल्यगुणाभ्यां जलदव्योमदृष्टान्तः। धाराजलसहितत्वादेव युद्धश्रद्धापुलकित इवेत्युत्प्रेक्षा धाराजलकणिकानां पुलकसादृश्यसंभवात्। सत्त्वोत्कर्षान्मम कर इवायमपि सत्त्वोत्कर्षशालीत्यर्थः। परैः समरनिकषदृष्टसारः बहुशोऽकुण्ठितशक्तित्वेनानुभूत इत्यर्थः। मित्रस्नेहाद्विवशं मित्रस्नेहाधीनतया कार्याकार्यविचारविमुखं मां साहसे नियुङ्क्ते। 'हिताहितानपेक्ष्य यत्कर्म तत्साहसं विदुः'॥ १९॥

---

१ अथ E.; अध B.N.; केणउण B. N. E. For तुमं B. E. N. read अज्जो; M. G. R. omit it. R. reads मलणादो; G. मरणात्; B. E. N. G. read मोचेदि. २ R. by mistake om. राक्ष...न्वनेन and reads व्यवसायि for व्यवसाय; E. has व्यसन for it and खड्गेन for निस्त्रिंशेन. ३ P. has पश्य पश्य; B. N. ननु पश्य. ४ विगत B. E. G. for जलदव्योम; N. reads जलदाकाश. ५ °हाविरसम् N.; °हाविवशम् G; for अधुना B. E. N. G. read अथवा.

पुरुषः—अज्ज, [1]एवं सेट्ठिचन्दणदासजीविदप्पदाणपिसुणिदं [2]विसमदसाविपाकणिपडिदं साधु ण सक्कणोमि तुमं णिण्णीअ पडिवत्तुं किं सुगिहीदणामहे[3]आ अमच्चरक्खसपादा तुह्मे दिट्ठिआ दिट्ठा। (इति पादयोः पतति।) (क)

राक्षसः—उत्तिष्ठोत्ति[4]ष्ठ। अलमिदानीं कालहरणेन। निवेद्यतां विष्णुदासाय ए[5]ष राक्षसश्चन्दनदासं मरणान्मोचयति। (इति 'निस्त्रिंशोऽयम्' (६।१८) इति[6] पठन्नाकृष्य खड्गं परिक्रामति।)

पुरुषः—ता करेहि मे[7] पसादं संदेहणिण्णएण। (ख)

---

(क) आर्य, एवं श्रेष्ठिचन्दनदासजीवितप्रदानपिशुनितं विषमदशाविपाकनिपतितं साधु न शक्नोमि त्वां निर्णीय प्रतिपत्तुं किं सुगृहीतनामधेया अमात्यराक्षसपादा यूयं दिष्ट्या दृष्टाः।

(ख) तत्कुरु मे प्रसादं संदेहनिर्णयेन।

---

१ एव्वं R.; सेट्ठि चन्दणदासस्स जी° E. For प्पदाणपि B. E. N. G. read होदित्ति before which G. reads जीविदव्ववत्तापि for जीविदं. For पिसुणिदं G. has सुणिदा, B. E. N. सुणिदं. २ For विसम R. has एस. For विपा...दं B. N. read विभागपरिणामपडिदो, G. विभागणिपडिदो. For साधु R. has साहु, G. ताउ (?); For तुमं ...किं B. N. read निच्चिदपदं भणिदुं। विलोक्य पादयोर्निपत्य। अध, G. तुमं णिज्झिपदं भणिदुं; E. has भुवनमुत्तिर्यं जीवितरक्षणेन पिशुनिदा विशमदशा विभागपडिदान दकुणोमि गिच्छिदपदं भणिदुं किंनु गिहिदणाम &c. ३ °धेया B. E. N. G. For दि...ट्ठा B. N. read त्ति ता करेहि मे पसादं संदेहणिण्णएण and om. इ...ति. Then comes राक्ष०। भद्र सोहम्, &c. पुरु०। सहर्षम् &c. to...कदत्थोस्मि. राक्ष०। उत्तिष्ठोत्तिष्ठ &c. पुरु०। पादयोः &c. पसीदन्तु &c. For दिट्ठि...ट्ठा G. has त्तिदिट्ठिआ. ४ E. has भद्र here, B. N. at the beginning of speech; and B. E. N. G. read कृतम् for अलम् and G. reads it after इदानीम्. ५ B. N. R. have यथा before this. ६ °मित्यादि B. N.; °शोयोमेति E; for आकृष्य खड्गम्. B. N. read आकृष्टखड्गः, E. आकृष्टखड्गम्. ७ M. R. read मह for मे; E. has करेह and G. करेध for करेहि.

**राक्षसः**—सोऽहमनुभूतभर्तृविनाशः सुहृद्विपत्तिहेतुरनार्यो दुर्गृहीतनामधेयो यथार्थो राक्षसः।

**पुरुषः**—( सहर्षं पुनः पादयोः पतित्वा। ) ही हीमाणहे। दिट्ठिआ दिट्ठोसि। पसीदन्दु अमच्चपादा। अत्थि दाव एत्थ पढमं चन्दउत्तहदएण अज्जसअडदासो वज्झट्ठाणं आणत्तो। सो अ वज्झट्ठाणादो केणवि अवहरिअ देसन्तरं णीदो तदो चन्दउत्तहदएण कीस एसो प्पमादो किंदोत्ति अज्जसअडदासे समुज्जलिदो कोववन्ही घादअजणणिहणेण निव्वाविदो। तदो पहुदि घादआ

---

(क) आश्चर्यम्। दिष्ट्या दृष्टोऽसि। प्रसीदन्त्वमात्यपादाः। अस्ति तावदत्र प्रथमं चन्द्रगुप्तहतकेनार्यशकटदासो वध्यस्थानमाज्ञप्तः। स च वध्यस्थानात्केनाप्यपहृत्य देशान्तरं नीतः। ततश्चन्द्रगुप्तहतकेन कस्मादेष प्रमादः कृत इति आर्यशकटदासे समुज्ज्वलितः कोपवह्निर्घातकजननिधनेन निर्वापितः।

---

चन्दउत्तेति। चन्द्रगुप्तहतकेनेति आर्यशकटेति च वचनं स्वस्य नन्दकुलपक्षपातित्वद्योतनार्थम्।

---

१ A. P. seem to read राक्षसोह &c.; B. E. N. read भद्रसोह &c.; and add वंश before विनाश; B. N. read विनाश for विपत्ति. २ B. N. read °र्यो-गृही°; R. G. B. read °नामा for °नामधेयो; E. om य...सः. ३ G.E. om. पुनः; B. E. N. read निपत्य for पतित्वा; G. पतति. For ही B. N. read पसीदधपसीदध; R. reads हि; E. om. ही; A.P. have ही...हे twice. ४ B.E.N. read कदत्थोह्मि; P. has दिट्ठा; पुरु०। पादयोर्निपत्य। पसीदन्तु before पसीदन्दु (न्तु) B. N; do omitting पुरु. E; रक्खस before पादा: B. N; णअरे before पढमं B. N; पुढमं M.; पुडमं R; for what follows E. reads चन्दउत्तेण, G. च...हदगेण. ५ °सस्सवधो B. N.; °सवहो A. P; B. E. N. read केणावि after अ instead of after व...दो; R. M. A. om. अ, E. has वि for it; P. reads ट्ठाणदोपरिहरिअ. ६ अबवाहिदो B. N. E.; हरिदो; G. For हदएण E. has हदयेगेण, G. हदजेण; E. om. कीस; A. reads कुदो ईसोप; B. E. N. G. om. एसो. ७ कदोB. E. N. G; om P. For अ...से B. N. read अ...दासबधवज्झणाए; E. agrees and om. वध and reads वज्झणं for वज्झणाए. For स...दो M. R. read समुजलन्तो. ८ रोसग्गीB. E. N. G. For णिहणेण B. E. N. G. read वधजले; M. P. read णिव्वाविदो; E. reads पभुदि; or घादआ B. E. N. G. read घातआ.

जं कंवि[1] गिहिदसत्थं अपुव्वं पुरुसं पिट्ठदो वा अग्गदो वा पेक्खन्ति तदो अत्तणो[2] जीविदं परिरक्खन्तो अप्पमत्ता वज्झट्टाणे[3] वज्झं वावादेन्ति । एवं च गिहिदसत्थेहिं अमच्चपादेहिं गच्छन्तेहिं सेट्ठिचन्दणदासस्स वहो तुवरिदो होदि । (निष्क्रान्तः ।) (क)

राक्षसः—( स्वगतम् । ) अहो दुर्बोधश्चाणक्यबटोर्नीतिमार्गः[4] ॥ कुतः ।

> यदि च[5] शकटो नीतः शत्रोर्मतेन ममान्तिकं
> किमिति निहतः क्रोधावेशाद्वधाधिकृतो[6] जनः ।

---

ततः प्रभृति घातका यं कमपि गृहीतशस्त्रमपूर्वं पुरुषं पृष्ठतो वाग्रतो वा प्रेक्षन्ते तदात्मनो जीवितं परिरक्षन्तोऽप्रमत्ता वध्यस्थाने वध्यं व्यापादयन्ति । एवं च गृहीतशस्त्रैरमात्यपादैर्गच्छद्भिः श्रेष्ठिचन्दनदासस्य वधस्त्वरायितो भवति ।

---

यदि चेति । शत्रोर्मतेन मौर्यानुमत्या छद्मना यदि शकटदासो ममान्तिकं प्रापितस्तर्हि घातकवधपर्यवसायी क्रोधावेशो न घटेत । अथ घातकवधान्यथानुपपत्त्या कृतकं नेति तदीयं पलाय्यागमनं कृतकं छद्मरूपं न भवति । परमार्थत एव शकटदासः सिद्धार्थकस्य तात्त्विकसाहसोपकारेण पलाय्य गतः स्यात्तदा तादृकष्टं कुत्सितं स्वहस्तलेखमुद्राङ्कनादिरूपं स्वामिद्रोहं शकटदासः कथं नु भावयेत्कर्तव्यत्वेन कथं चिन्तयेत्

---

१ पि ग° B. E. N.; चि A. M. R. For अपुव्वं° E. has अमच्चपुरिसं; P. also reads पुरिसं; A. om. वा before अग्गदो; B. E. N. om. पिट्ठदोवा and have पच्चादो (पत्थदो E.) after अग्गदो. २ अद्धवधेज्जेव before this B. E. N.; तदा for तदो P.; परि om. E.; रक्खन्ता G. ३ एदे अवासव.. णं B. N.; एव अवास° E.; °ट्ठाणं G; वावादेन्दि M. R; ता before एवं B. N. G; च om. B. N.; अ for it P.; गहिदसत्तेहि B. N.; ताहिं after अमच्चपादेहिं B. N. E.; सेट्ठि om. P; वहे M., वज्झो G. for वधो. For तुवरिदो G. has तुरविदो, B. N. तुवराइदो; तुविहो E. which also reads भोदि for which A. has होइस्सदि, P. भविस्सदि; A. P. G. E. om. निष्क्रान्तः. ४ R. has °धाश्चा° and मार्गाः; M. om. कुतः. ५ स B. N.; हि E. ६ °तस्तेन क्रोधाद्वधा° B. G. (omitting तेन); °तस्तेनैवायं क्रुधाधि° N. For वधाधि° E. has वनाधि.° For निहतः P. विहितः.

अथ नं[1] कृतकं तादृक्कष्टं कथं नु विभावये-
दिति मम मतिस्तर्कारूढा[2] न पश्यति निश्चयम् ॥ २० ॥

(विचिन्त्य[3] ।)

नायं निस्त्रिंशकालः प्रथममिह कृते[4] घातकानां विघाते
नीतिः कालान्तरेण प्रकटयति फलं किं तया[5] कार्यमत्र ।
औदासीन्यं न युक्तं प्रियसुहृदि गते मत्कृतामेव[6] घोरां
व्यापत्तिं ज्ञातमस्य[7] स्वतनुमहमिमां निष्क्रयं कल्पयामि ॥२१॥

( इति निष्क्रान्ताः सर्वे । )

( [8]षष्ठोऽङ्कः । )

---

आचरेदित्यर्थः । चिन्तनमपि तस्यानुचितं किमुताचरणमिति भावः । इत्यादितर्कारूढो न कमपि निश्चयं प्राप्नोमीत्यहो दुर्बोध्यश्चाणक्यनीतिमार्ग इत्यर्थः । स्वहस्तलेखात्स्वामिद्रोहरूपं कर्मातिकुत्सितं वाचा वक्तुमयोग्य-मिति तादृक्कष्टमित्युक्तम् । 'तादृग्लेखः' इति क्वचित्पाठः ॥ २० ॥

नायमिति । प्रथमं पूर्वं छलतः परमार्थतो वा घातकानां विघाते कृते त्वरिततरं चन्दनदासघातनप्रसक्तिभयान्निस्त्रिंशधारणमनुचितम् । नीत्या-चरणं तु शिरसि भयं दूरे तत्प्रतीकार इति न्यायेनानुपपन्नम् । सुहृद्विना-शोपेक्षणं तु कृतघ्नतादिमहादोषमापादयेत् । अतश्चन्द्रगुप्ताय दासीभावेना-त्मानं निष्क्रीयैव सुहृद्विमोचनं न्याय्यत्वेन गले पतितमिति ज्ञातं निश्चित-मिति भावः ॥ २१ ॥

इति श्रीत्र्यम्बकप्रभुवर्ययज्वाश्रितढुण्ढिराजव्यासयज्वविरचिते मुद्राराक्षसनाटकव्याख्याने षष्ठोऽङ्कः समाप्तिमगमत् ॥

---

१ B. E. have सकृत°; R. M. स न कृतम्; A. has नकृतके. For कष्टम् B. E. read लेखम्; P. G. omit it; N. has जातम् and कथं न विभा°; E. has विलासयेत्. २ चक्रारूढा N. ३ तस्मात् after this B. N. ४ गते N. ५ तथा G. ६ मत्कृते चातिघोराम् B. N. ७ °मस्मिन् B. N; जातम् for ज्ञातम् before this in E; for निष्क्रयम् R. reads निष्क्रियाम्. ८ B. N. read इति, P. इति मुद्राराक्षसनाटके before this.

# मुद्राराक्षसम्।



## सप्तमोऽङ्कः।

( ततः प्रविशति [1]चण्डालः। )

**चण्डालः**—ओसलेह[2] ओसलेह । अवेह अवेह ।

जइ[3] इच्छह लक्खिदव्वे प्पाणे विहवे कुले कलत्ते अ ।
ता पलिहलह विसमं[4] लाआपत्थं सुदूलेण ॥ १ ॥ (क)

(क) अपसरत अपसरत । अपेत अपेत ।

यदि इच्छत रक्षितव्याः प्राणा विभवः कुलं कलत्रं च ।
तत्परिहरत विषमं राजापथ्यं सुदूरेण ॥ १ ॥

इत्थं षष्ठेनाङ्केन राक्षसवशीकरणरूपं प्रधानकार्यं बीजवद्भिर्यथायथं विप्रकीर्णैरत्रैकार्थीभावमुपनीतैर्मुखसंध्याद्यर्थैर्निर्व्यूढम् । अथ राक्षसेन चन्द्रगुप्तसाचिव्यग्रहणद्वारा तल्लक्ष्मीस्थिरीकरणरूपस्य नाटकस्य प्रधानतमं फलमुपगमयितुं सप्तमोऽङ्क आरभ्यते । पूर्वाङ्के रज्जुहस्तेन पुरुषेण निवेदितं चन्दनदासस्य वध्यस्थाननयनं श्रुत्वा राक्षसः ससंभ्रमं शस्त्रमुत्सृज्य

१ °चा° P. G. E. २ P. om. ओ...ह; A. om. अ...ह; ओसलध B. E. N. G; between the two B. E. N. add अज्जा; for अवेह B. E. N. read अवेध and add माणेहे between the two. ३ A. P. read here बज्जेह लाइदव्वं विसव्व पलिहलह सव्ववसणाई (णंई P.). एदेखुवद्द(ट्ठ)माणस्सदोदि दुल (ह्ल P.) हो ण ( om. P. ) विणवादो (विणवाणवादो P.) For this B. E. N. R. read जइ महह लक्खिदुं निअप्पाणे &c.; E. जादि महहलक्खिजे जीअं विहवं कुलं कलत्रं च; G. जइमहहलक्खिदुं सेपाणे विहाविहंवे कुले &c.; B. N. read च for अ, om. ता and read पलिहलध for which G. has पतिहरध, P. पलीहलह. ४ विसमे A. M.; विसमिव B.N.G.; विसंविव E; for लाआ° P. has लायापथ्ये; E. लाआपत्थं; R. M. लाआपत्थे; B. N. read पअत्तेण; E. सुदूहेण अ; G. सुदूलेण अ.

अवि अ ।

होदि[1] पुलिसस्स वाही मलणं वा सेविदे अपत्थम्मि ।

लाआपत्थे[2] उण सेविदे सअलं वि कुलं मलदि ॥ २ ॥ (क)

ता जदि[3] ण पतिज्जह ता एह पेक्खह एअं लाआपत्थका-लिणं सेट्ठिचन्दणदासं सउत्तकलत्तं[4] वज्झट्ठाणं णीअमाणम् । (आकाशे श्रुत्वा[5] ।) अज्जा, किं भणह—'अत्थि से कोवि मोक्खोवाओ'

---

(क) अपि च ।

भवति पुरुषस्य व्याधिर्मरणं वा सेविते अपथ्ये ।

राजापथ्ये पुनः सेविते सकलमपि कुलं म्रियते ॥ ९ ॥

(ख) तद्यदि न प्रतीथ तदत्र प्रेक्षध्वमेनं राजापथ्यकारिणं श्रेष्ठिचन्दनदासं सपुत्रकलत्रं वध्यस्थानं नीयमानम् । आर्याः, किं भणथ—'अस्त्यस्य

---

वध्यस्थानं प्रति निष्क्रान्त इत्युक्तम् । संप्रति स एव चन्दनदासवृत्तान्तोऽस्मिन्नङ्के प्रपञ्च्यत इति । इदमङ्कावतरणम्—'यत्र स्यादुत्तराङ्कार्थः पूर्वाङ्कार्थानुसंगतः' इति तल्लक्षणात् ।

---

१ भोदि G. E; for पु° R. पुरुसस्स, E. पुल°; G. पुरि°; व्वाही for वाही. B. N. G.; वावाही (?) R.; व्याधी E.; वाहि P; मलणे for मलणं P; for अप° B. E. N. read अवत्थम्मि, G. अवत्थह्मि. २ लावापच्छे G.; पुण सेविदम्मि E; वि om. B. E. N.; पि G; उलं B. N.; om. P; for मलदि R. M. read मिअदि. ३ जइ B. N.; ताजदि R. G. E. For पतिज्जहता एह &c. B. N. read पत्तिआअध तदपेक्खध एदं लावावत्थ°; E. पत्तिआह ता पेक्खध एदं लाआवत्थ°; G. पत्तिज्जह-तापेक्ष ( ? ) ह एअं लायापत्थ; M. reads पदिज्जहदा, R. पडिजहहता. ४ सपु° B. E. N. G. and after णीअमाणं for which B. N. read आणीआमाणं; G. E. णीयमाणं. ५ Om. B. N.; before आ° E; from णीअमाणं to घरअणं om. P; for अज्जा A. G. E. read अज्ज. For भणह E. has भणेहा, B. N. भणध. For अत्थिसेकोवि B. N. read अत्थि किं चन्दणदासस्स, G. E. read स for से in our text.

त्ति । अज्जा, अत्थि[1] अमच्चरक्खसस्स घरअणं जइ समप्पेदि । (पुनराकाशे ।) किं भणह[2]—'एसे सलणागदवच्छले अत्तणो जीविदमेत्तस्स[3] कालणे इदिसं अकज्जं ण कलिस्सदि' त्ति । अज्जा, तेण[4] हि अवधालेह से सुहां गदिम् । किं दाणिं तुह्माणं एत्थ पडिआरविआरेण । (ख)

(ततः प्रविशति द्वितीयचण्डालानुगतो[5] वध्यवेशधारी शूलं स्कन्धेनादाय कुटुम्बिन्या पुत्रेण चानुगम्यमानश्चन्दनदासः ।)

---

कोऽपि मोक्षोपाय इति । आर्याः, अस्त्यमात्यराक्षसस्य गृहजनं यदि समर्पयति । किं भणथ । एष शरणागतवत्सल आत्मनो जीवितमात्रस्य कारणे ईदृशमकार्यं न करिष्यतीति । आर्याः, तेन हि अवधारयतास्य सुखां गतिम् । किमिदानीं युष्माकमत्र प्रतीकारविचारेण ।

---

सलणागदवच्छलेति । इत्यादिपौरवचनेनास्य शरणागतरक्षणबिरुदं लिखितपठितत्वेन सकललोकप्रसिद्धमित्युक्तं भवति । सुखां गतिं शरणागतरक्षणपुण्येनोत्तमलोकप्राप्तिमिति बहिरर्थः । राक्षसप्राप्त्या बन्धमोचनात्सुखप्राप्तिमिति गूढम् ।

---

१ B. N. om. अज्जा and before this read कुदो से अधणस्स मोक्खोबाओ त्ति । एदं उण and after this से जइ; E.too has जादि, G. जइ after this, and not before समप्पोदि. For घरअणं G.reads परिअणं, E. मच्चलयणं omitting स्स just before the घरअणं; R.reads जदि for जइ and G. adds त्ति after समप्पेदि. २ भणाह E.; भणाध B. N.; पुन...शे before this om. G. E. (which adds ण before एसे.) For वच्छले P. has वत्सले, E. वत्थले. ३ B. E. N. om. मेत्त. For इदिसं R. has ईरिसं, E. इसं,M. ईदिशं; B. N. have ण before this not before कलिस्सदि for which E. reads कलइस्सदि. A. P. read अज्ज for अज्जा. ४ जइएवं before this B. N. For what follows B. N. read अवधाणेध से असुभगादिं, A. अवधालएह ससुहां, P. °लएहसेअसुहां, G. धाणेधसेसुहां गादिं, E. अवधा लेह से षुगदि एत्थके दाणिं एत्थ तुह्माणं पदीकालो; for किं &c.B. N.read एत्तिके दाणीं तुह्माणं पडीआले. For किं G. has एत्थ किं; for दाणिं P.R. N. दाणीं, R. M. om. एत्थ. A. reads विआरणेण and F. एत्थपदीका विरहो. ५ चा° P. G. E.; °नुगम्यमानो E.; वेष P. G. E.; स्कंधेन वहन् E.

**चन्दनदासः**—( सवाष्पम्[1] । ) हद्धी हद्धी । अह्मारिसाणं विणिचं चारित्तभङ्गभीरूणं चोरजणोचिदं[2] मरणं होदि त्ति णमो किदन्तस्स । अहं[3] वा ण णिसंसाणं उदासीणेसु इदरेसु वा विसेसो त्थि । तह हि । ( क )

मोत्तूणं[4] आमिसाइं मरणभएण तिणेहिं जीवन्तम् ।
वाहाणं मुद्धहरिणं[5] हन्तुं को णाम णिब्बन्धो ॥ ३ ॥ ( ख )

( समन्तादवलोक्य । ) भो[6] पिअवअस्स विह्नुदास, कहं पडि-

---

(क) हा धिक् हा धिक् । अस्मादृशानामपि नित्यं चारित्रभङ्गभीरूणां चोरजनोचितं मरणं भवतीति नमः कृतान्तस्य । अथवा न नृशंसानां उदासीनेषु इतरेषु वा विशेषोऽस्ति । तथा हि ।

(ख) मुक्त्वा आमिषाणि मरणभयेन तृणैर्जीवन्तम् ।
व्याधानां मुग्धहरिणं हन्तुं को नाम निर्बन्धः ॥ ३ ॥

(ग) भो प्रियवयस्य विष्णुदास, कथं प्रतिवचनमपि न मे प्रतिप-

---

1 For चन्द...म्. B. E. N. R. read कुट्ठ°; R. om. one हद्धी. For चन्द...द्धी E. reads दच्छी (?); P. has अह्मालिसाणं. For णिच्चं B. N. read कधं, E. णि; G.E. after वि read जहिं. For चारित्त B.N. have चारित्र, P. चालित्त. 2. °जणाणं विअ B. N.; °णोच्छिदं R.; °णोविअ G. For मरणं R. has मलणं. For होदि G. has होइ, A. P. भोदि; B. N. पत्तंतिणमोणमोकदन्तस्स; E. has °णंवुप्पणं मोकदन्थतस्स; R. reads किदन्दस्स; G. किवंतस्स. 3 अथवा G. E.; ण om. B. N. For उदासीणे° M. has उदाहीणे°; for इतरे° G. reads इअरे°, E. इपेरसु°, A. has षु for सु in both places here. P. reads विशेसो. For त्थि B. E. N. G. read अत्थि and they also read तथा for तह. 4 मौहुण B.N. For आमि° B. N. P. read आमिसाई; R. M. P. read मलण; P. om. भएण; G. reads भयेण; E. नएनं. For तिणेहिं E. has तिणिहिं, P. तिणंहि. For जीवन्तम् B. E. N. G. M. जीवन्ति. 5 हरेण (?) F.; हन्दुं M. For णिब्बन्धो G. has णिष्टान्धो. 6 भाव B. E. N. G; हद्धी before this R; while A. M. have विष्हु° before पिअ°; B.E.N.G. have कधं for कहं; E. has अवन्तरे (?) for भो.

वअणं[1] वि ण मे पडिवज्जसि । अह वा दुल्लहा ते क्खु माणुसा जे एदस्सिं[2] काले दिट्ठिपथे वि चिट्ठन्ति । ( सबाष्पम् ।) एदे अह्मपिअवअस्सा अंसुपादमेत्तकेण किदणिवावसलिला विअ कहं वि पडिणिव्वत्तमाणा सोअदीणवअणा[3] वाहगुरुआए दिट्ठीए मं अणुगच्छन्दि । (इति परिक्रामति ।) ( ख )

**चाण्डालः**—अज्ज[4] चन्दणदास, आअदोसि वज्झट्ठाणं । ता विसज्जेहि पलिअणम् । ( क )

---

द्यसे । अथवा दुर्लभास्ते खलु मानुषा य एतस्मिन्काले दृष्टिपथेऽपि तिष्ठन्ति । एतेऽस्मत्प्रियवयस्या अश्रुपातमात्रेण कृतनिवापसलिला इव कथमपि प्रतिनिवर्तमानाः शोकदीनवदना बाष्पगुर्व्या दृष्ट्या मामनुगच्छन्ति ।

(क) आर्य चन्दनदास, आगतोऽसि वध्यस्थानम् । तद्विसर्जय परिजनम् ।

---

१ वयणं E. For वि G. E. have पि; B. N. read मे ण, E. मा for णमे; B. N. add त्ति after °ज्जसि. For अहवा B. N. read अधवा, E. अथवा. For ते... °णुसा B. N. read क्खुते पुरिसा, E. क्कुतेमणुस्सा. २ इमस्सिं B. E. N.; अस्सिं G. For पथे R. has पहे, M. E. वहे, A पत्थे; M. R. G. om वि; M. R. P. read चिट्ठन्दि; E. चिहन्ति; चन्दन° before सबाष्पम् in B. N. For एदे E. has एते, A. एदेअ. For अंसु° E. has अंसुवावअमित्तकेण; A. P. read अस्सुपादमत्त;° B. N. G. read बाद for पाद; M. has मेत्तएण. after किद (for which P. has किद and E. has कय); B. N. read पदीआरा स्वसरीरेहिं णिवत्तमाणा परिवड्ढमाणसोअ &c; ( G. E. om. स्व, G. reads अत्त, E. यत्ताय for °वत्त,° G. पडिनियन्तमाणशोअ for परि...णसोअ and E. परिवत्तियस्सट्ठामविस्वेखत्तिदीण &c. as in the text ); M. R. read पदिणिवट्टमाणा. ३ वदणा A. P. For बाह° P. has बाप्फ,° B. N. बापागरु°; गच्छन्ति B. E. N. G. omitting इति...ति. ४ B. N. read चान्डालौ परिक्रम्यावलोक्य च; G. E. read परिक्रम्य चण्डाले; M. has अज्ज च...से. For आअ° B.N. read पच्चागदो°, E. परागदो°, G. अगदो,° B. N. read वज्झट्टणं, E. व...दाणं. For पलिअणं B. E. N. read घरअणं.

**चन्दनदासः**—कुटुम्बिणिं, णिवत्तेहि संपदं सपुत्ता। ण जुत्तं क्खु अदोवरं अणुगच्छिदुम्। (क)

**कुटुम्बिनी**—(सबाष्पम्।) परलोअं पत्थिदो अज्जो ण देसन्तरं। (ख)

**चन्दनदासः**—अज्जे, अअं मित्तकज्जेण मे विणासो ण उण पुरिसदोसेण। ता अलं विसादेण(ग)

**कुटुम्बिनी**—अज्ज, जइ एव्वं ता दाणिं अकालो कुलजणस्स णिवट्टिदुम् (घ)

**चन्दनदासः**—अहं किं ववसिदं कुडुम्बिणीए। (ङ)

---

(क) कुटुम्बिनि, निवर्तस्व सांप्रतं सपुत्रा। न युक्तं खल्वतोऽपरमनुगन्तुम्।

(ख) परलोकं प्रस्थित आर्यो न देशान्तरम्।

(ग) आर्ये, अयं मित्रकार्येण मे विनाशो न पुनः पुरुषदोषेण। तदलं विषादेन।

(घ) आर्य, यद्येवं तदिदानीमकालः कुलजनस्य निवर्तितुम्।

(ङ) अथ किं व्यवसितं कुटुम्बिन्या।

---

परलोअं इति। देशान्तरं प्रस्थितं बन्धुं नानुगच्छेदिति शास्त्रम्। परलोकं प्रस्थितस्य त्वनुगमनमुचितमेवेति भावः।

---

१ B. E. N. G. have अज्जे before this; A. reads कुडु° and P. कुटुम्बिनी. For णि...दं. B.N. read णिवत्तस्सतुमं, G.reads णिवत्तसंपदं, E. simply संपदं. For ण...क्खु B. N. वजट्ठाणं क्खु एदं; R. om. from this to P.302.; B. N read अवरं अभूमिअनुग;° G. अवरं भूमि क्खु अणु;° E. अपरं अभूमी अणु.° २ पहिओ E; B.N. have उण after ण; A.reads देशान्तरं; M. देसन्दरं; E.has पच्छिदो after this; B. E. N. add ताअजोग्गो दाणिं (अकालो दाणिं E.) एसो कुलज (य E.) णस्य णिव (य E.) त्तिदुं. ३ अये P; this and next speech om. in E; सच्चं for अअं; मम for मे B.N. which om. उण also; M.om. मे, for ता...ण; B. N. read ता किं हरिसट्ठाणे वि रोदिसि त्ति.; G. ता अलं आनन्दट्ठाणे विसादेन. ४ °व्वं P.; अकालो om. and अणुच्छिदं before दाणिं B. N.; दाणीं B.N. P; कुलअणस्स B. N. G.; कुलअणस° P. For णिवट्टिदुं B. N. have णिवत्तिदुं. ५ अध B. N.; विवसिदं G. For कु° P. G. read कुटु,° B. N. अज्जाए.

**कुडुम्बिनी**—[1]भत्तुणो चलणे अणुगच्छन्तीए अप्पाणुग्गहो होदित्ति। (क)

**चन्दनदासः**—[2]अज्जे, दुव्ववसिदं एदं तुए। अअं पुत्तओ असुणिदलोअसंववहारो बालो अणुगह्णिदव्वो। (ख)

**कुडुम्बिनी**—अणुगिह्णन्दु[3] णं पसण्णाओ देवदाओ। जाद पुत्तअ, पत पच्चिमेसु पिदुणो पादेसु। (ग)

**पुत्रः**—(पादयोर्निपत्य।) ताद, किं दाणिं[4] मए तादविरहिदेण अणुचिट्ठिदव्वम्। (घ)

---

(क) भर्तुश्चरणावनुगच्छन्त्या आत्मानुग्रहो भवतीति।

(ख) आर्ये, दुर्व्यवसितमिदं त्वया। अयं पुत्रकोऽश्रुतलोकसंव्यवहारो बालोऽनुगृहीतव्यः।

(ग) अनुगृह्णन्त्वेनं प्रसन्ना देवताः। जात पुत्रक, पत पश्चिमयोः पितुः पादयोः।

(घ) तात किमिदानीं मया तातविरहितेनानुष्ठातव्यम्।

---

पश्चिमेष्विति। अतःपरं द्रष्टुमशक्येष्वित्यर्थः।

---

१ B. N. read सबाष्पम् before this and चलणमणु°; P. has °च्छन्दीए. For अप्पाणु° E. has अत्ताणु,° G. अप्प्य,° B.N. अज्जा°; G. reads भोदु; B. N.E. होदु. २ om. E. For एदं तुए B.N. have एदं ते, E. इदं ते, G. ते एदं after which B. N. have ता दाणीं अज्जाए अअं (om. पुत्तओ) agrees reading इदाणिं for ता दाणीं; B. N. read °व्ववहारो for संववहारो; B. N. read कुमारो, E. पुत्तको for बालो; B. N. read त्ति after अणुगह्णिदव्वो for which P.E. °गिह्णि; °B.N. °गेह्णि,° G. M. गेहि°. ३ °गेह्णन्तु B. N.; गेहन्तु G.; °गिह्णन्तु E.; गेह्णन्दु A; A P. om. णं; B. N. have भअवदीओ कुल before देवदाओ for which E. has देवयाओ. For पत...देसु B. N. have पणमअ अपच्छिमस्स पिदुणो पाएसु.; G. पतस्व पडसु अपत्थितेसु विदुणो पाएसु. E. agrees with G. reading पिडणो पादेसु. ४ B. N. om. किंदाणि and have किं before अणु;° G. reads दाणिं only and has किं ( ? कु G. ) where B. has it, E. has इदाणिं and किं where B. has it.

**चन्दनदासः**—पुत्त, चाणक्कवि[1]रहिदे देसे वसिदव्वम् । (क)

**चाण्डालः**—अज्ज चन्दण[2]दास, णिखादे शूले, ता सज्जो होहि । (ख)

**कुटुम्बिनी**—अज्जा[3], परित्ताअध परित्ताअध । (ग)

**चन्दनदासः**—अज्जे, अह[4] किं एत्थ आक्कंदसि । सग्गं गदाणं दाव देवा दुखिअं परिअणं अणुकम्पन्दि । अण्णं अ[5] मित्तकज्जेण मे विणासो ण अजुत्तकज्जेण । ता किं हरिसट्ठाणे वि रोदीअदि । (घ)

---

(क) पुत्र, चाणक्यविरहिते देशे वस्तव्यम् ।

(ख) आर्य चन्दनदास, निखातः शूलः । तत्सज्जो भव ।

(ग) आर्याः, परित्रायध्वं परित्रायध्वम् ।

(घ) आर्ये, अथ किमत्र आक्रन्दसि । स्वर्गं गतानां तावद्देवा दुःखितं परिजनमनुकम्पन्ते । अन्यच्च मित्रकार्येण मे विनाशो नायुक्तकार्येण । तत्किं हर्षस्थानेऽपि रुद्यते ।

---

चाणक्क इति । अनेन चाणक्यस्यात्यन्तं क्रौर्यमुक्तम् ।

आक्रन्दसीति । शोकावेशेन नीचान्प्रति किमाक्रन्दसि सुचरितानुकम्पिनो देवा एव शरणीकरणीया इत्यर्थः ।

मित्रकज्जेणेति । मित्रकार्येण मरणात्स्वस्य स्वर्गो निश्चित इति भावः ।

---

१ G. om. वि°. २ °नदास A. P. For णिखादे N. has णिखत्ते, E. णिक्खदे, A. M. णिखाते; M. P. has सूले; E. सूले. For होहि G. E. read भोहि and B. E. N. G. have दाणिं before it. ३ Twice in M. G. E.; for परि° P; has पलि°; E. reads परित्रायध; A. M. °अह; P. °अहा. ४ B. N. read भद्दमुह मुहुत्तअं चिट्ठ । अइ जीविदवच्छले किं &c. M. has only अइ before किं and G. अइदुल्लहे, E. अइजीविदवच्छले; M. reads अत्थ for एत्थ; G. om. आ in आक्कन्दसि; E. has सव्वे for सग्गं; B. E. N. G. read after that गदा क्खु (om. G.) ते देवा णन्दा जे दुखिदं (G. om. दं) इत्थीजणं (परिजणं E. अणं G.) पइदिणं (om. G. E.) अणुकम्पन्ति (°कंवन्ति E.); B. N. om. what follows; M. reads वरिअणं for परिजणं. ५ E. has अन्यच्च for this; G. om. मे; G. and E. have ण पुरिसदोसेण for ण अजुत्तकज्जेण; G. has एदं after किं and रोदिअसि for रोदीअदि; M. has रोदीयदि.

प्रथमश्चण्डालः[1]—अले विल्लपत्त, गेह्ण चन्दणदासं । सअं एव्व परिअणो गमिस्सदि । (क)

द्वितीयश्चण्डालः—अले[2] वज्जलोमा, एस गेह्णामि । (ख)

चन्दनदासः— भद्द, मुहत्तं चिट्ठ[3] जाव पुत्तअं सन्तआमि । (पुत्रं मूर्ध्नि आघ्राय ।) जाद, अवस्सं[4] भविदव्वे विणासे मित्तकज्जं समुव्वहमाणो विणासमणुभवामि । (ग)

पुत्रः—ताद, किं[5] एदं वि भणिदव्वं । कुलधम्मो क्खु एसो अह्माणं । (इति पादयोः पतति ।) (घ)

---

(क) अरे बिल्वपत्र, गृहाण चन्दनदासम् । स्वयमेव परिजनो गमिष्यति ।

(ख) अरे वज्रलोमन्, एष गृह्णामि ।

(ग) भद्रा, मुहूर्तं तिष्ठ यावत्पुत्रकं सान्त्वयामि । जात, अवश्यं भवितव्ये विनाशे मित्रकार्यं समुद्वहमानो विनाशमनुभवामि ।

(घ) तात, किमिदमपि भणितव्यम् । कुलधर्मः खल्वेषोऽस्माकम् ।

---

अणुभवामीति । अतस्त्वया न शोचितव्यमिति भावः । अत्र करुणः स्थायी शोकदीनवचनादिभिर्विभावैरनुभावैश्च पुष्कलः ।

---

१ E. has before this the speech of पुत्र further on. For विल्लपत्त B. N. read वेणुवेत्तका, G. विल्लवत्तआ, E. विल्लपद्का. For गेह्ण E. has गिह्णहि, M. अङ्केहि, after which B. N. have इमं; B. N. read घलअणो सअंज्जेव for स...णो; M. reads परिजणो; G. पलिअणो (reading ज्जेव्व for एव्व). २ अये E.; वज्जलोमगा G.; व...मकां B. N. E.; एसे for एस B. N.; एसो E. which also reads गिह्णामि. ३ भद्दमुह चिट्ठ, मुहुत्तअं B. N. E.; पुत्तं for पुत्तअं G. E. For सन्तआमि B. N. have परिस्सआमि, G. परिस्सज्जामि, E. परिष्वजामि (before पुत्तं); B. N. read इति पुत्रं परिष्वज्य मूर्ध्नि समा°; E. agrees with text but reads समाघ्राय; G. E. have पुत्त; B. N. पुत्तअ after जाद. ४ अवस्स E; वि before विणासे B. N; कज्जे for कज्जं P; उव्व° for समुव्व° E.; °णुभवामो E.; °णुभवेहि G. ५ ताद एदं क्खु भणितव्वं किं B. N.; तात A. P. For वि G. has पि; E. has ताय किं एयं पि भणितव्वं. For धम्मो B. E. N. read क्कमो.

**चाण्डालः**—अले, गेह्ण[1] एणं । (क)

**कुटुम्बिनी**—(सोरस्ताडम्[2] ।) अज्ज, परित्ताहि परित्ताहि । (ख)

( प्रविश्य पटाक्षे[3]पेण )

**राक्षसः**—भवति, न भेतव्यम् । भो भोः शूलायतनाः, न खलु व्यापादयितव्यश्चन्दनदासः ।

येन स्वामिकुलं रिपोरिव कुलं दृष्टं[4] विनश्यत्पुरा
मित्राणां व्यसने महोत्सव इव स्वस्थेन येन स्थितम् ।
आत्मा यस्य वधाय वः परिभव[5]क्षेत्रीकृतोऽपि प्रिय-
स्तस्येयं मम[6] मृत्युलोकपदवी वध्यस्रगाबध्यताम् ॥ ४ ॥

**चन्दनदासः**—(सबाष्पं[7] विलोक्य ।) अमच्च, किं एदं । (ग)

---

(क) अरे, गृहाणैनम् ।

(ख) आर्य, परित्रायस्व परित्रायस्व ।

(ग) अमात्य, किमिदम् ।

---

प्रविश्य पटाक्षेपेणेति । असूचितस्य सहसा संभ्रमेण प्रवेशः पटाक्षेपः ।

शूलायतना इति । शूलमायतनं जीवनाश्रयो येषां ते तथोक्ताः ।

येनेति । महोत्सव इवेति सप्तम्यन्तम् । यस्य मम परिभवक्षेत्रीकृतोऽपि । एतादृशं परिभवमनुभवन्नपि आत्मा शरीरं वपुः युष्मादृशां वधाय वधार्थं प्रियो जातः यदर्थं किल चाणक्येन कौलूतादयः युष्मादृशा घातकाश्च छलेन वृथा व्यापादिताः एतादृशपातकनिमित्तभूतोऽप्यात्मा येन मया न परित्यक्त इत्यात्मोपलम्भः ॥ ४ ॥

---

१ गेह्णिआणं (?) R.; गेह्ण वज्झलोमआ B. N.; गिह्णले गिह्ण E. G. (this latter add सअं पलिजणो गमिस्सदि). After this speech B. N. have चाण्डालैः गृहीतश्चन्दनदासमारोपयितुं शूले. २ Om. B. E. N. G.; अज्जा B. N.; अज्जो M.; परित्राअध E.; परित्ताअस्स G. E.; पलित्ताहि P.; परित्ताअहि M; परित्ताहि om. R. ३ अपटीक्षे° B. N. which add भतव्यम् after the भेतव्यम् in our text. G. has न भेतव्यं. २ For शूलायतनाः B. E. N. read सेनापते, G. भो शूलपाते, G. also reads व्यापारनीयः and B. E. N. G. add कुतः after चन्दनदासः. ४ वृष्टम् G. ५ °भवे E. ६ किल A. P. ७ वि...स...B. E. N. G.; इदं for एदं G.; निमं (?) E; B. N. add after it दे व्ववसिदम्.

राक्षसः—त्वदीय[1]सुचरितैकदेशस्यानुकरणं किलैतत् ।

चन्दनदासः—अमच्च, सव्वं वि[2] इमं पआसं णिप्फलं करन्तेण तुए किं अणुचिट्ठिदं । (क)

राक्षसः—सखे, स्वार्थ एवानुष्ठितः[3] । कृतमुपालम्भेन । भद्रमुख, निवेद्यतां दुरात्मने चाणक्याय ।

वज्रलोमा—किं[4] त्ति । (ख)

राक्षसः—

दुष्कालेऽपि कलावसज्जनरुचौ प्राणैः परं रक्षता
नीतं येन यशस्विनाति[5]लघुतामौशीनरीयं यशः ।
बुद्धानामपि चेष्टितं सुचरितैः क्लिष्टं वि[6]शुद्धात्मना
पूजार्होऽपि स[7] यत्कृते तव गतः शत्रुत्वमेषोऽस्मि सः ॥ ५ ॥

---

(क) अमात्य, सर्वमपीमं प्रयासं निष्फलं कुर्वता त्वया किमनुष्ठितम् ।
(ख) किमिति ।

---

सखे स्वार्थ एवेति । इदं त्वत्संरक्षणं ममात्मरक्षणादप्यभ्यर्हितं श्रेयस्करमिति भावः ।

दुष्कालेऽपीति । शिबिना पुण्ये कृतयुगे तत्कृतमिति नात्र चित्रम् । पापे कलियुग ईदृशं कर्म कुर्वाणस्ततोऽप्यतिशयितो यश्चन्दन-

---

१ °दीयस्य B. N. G. which and E. om. last एतत्. २ पि for वि G. E.; णिप्फलं before इमं G.; मे णिप्फलं एदं (इमं E.) पआसं B. N. E.; करणेण E. For तु...किं. B. E. N. read ण मेपिअं and add अमच्चेण after °चिट्ठिदं; G. reads तुए ण मे पिअं अणुचिट्ठिदं. ३ B. E. N. G. read सखे चन्दनदास (G. om. this ) कृतमुपालम्भेन (G. has तत् and E. तत्र before कृतम् and both read कृत° after जीवलोकः) स्वार्थप्रधानो हि जीवलोकः (G. has °यं for हि, E. om. it) भद्रमुख अयमर्थो (om. G. E.) निवेद्यतां तावद्दुरात्मने (G. om. तावत्) चाणक्याय; R. has दुरात्मने after चाणक्याय in our text; R. M. read तत् before कृतमुपालम्भेन. ४ B. N. have अध; G. E. जधा before किं. ५ पि for ति N.; प्र B. N. E.; प्रलपताम् (?) G. ६ च शुद्धा° P. which also has बद्धा° for बुद्धा.° ७ च for स P. and for गतः शत्रुत्वम् B. N. गतोवध्यत्वम्.

प्रथमः—अले विल्लपत्तअ[1], तुमं दाव चन्दणदासं गेह्णिअ इह[2] एदस्स मसाणपादपस्स छाआए मुहुत्तं चिट्ठ जाव अहं चाणक्कस्स णिवेदेमि गिहीदो अमच्चरक्खसोत्ति । (क)

द्वितीयः—अले वज्जलोमा[3], गच्छ । (ख)

( इति[4] सपुत्रदारेण चन्दनदासेन सह निष्क्रान्तः । )

प्रथमः—एदु अमच्चो[5] । (राक्षसेन सह परिक्रम्य । ) अत्थि

---

(क) अरे बिल्वपत्रक, त्वं तावच्चन्दनदासं गृहीत्वैहैतस्य श्मशानपादपस्य छायायां मुहूर्तं तिष्ठ यावदहं चाणक्यस्य निवेदयामि गृहीतोऽमात्यराक्षस इति ।

(ख) अरे वज्रलोमन्, गच्छ ।

(ग) एत्वमात्यः । अस्त्यत्र कोऽपि निवेदयत तावन्नन्दकुलनगकु-

---

दासः स त्वयात्यर्थमर्चनीयोऽपि यस्य मम कृत ईदृशीं विपत्तिमनुनीतः सोऽयं तव विधेयोऽस्मीत्यर्थः। बुद्धा अत्यन्तदयालव इति प्रसिद्धं तेषामपि चेष्टितं दयालुत्वं क्लिष्टं कृशीकृतमित्यर्थः ॥ ५ ॥

---

१ विपत्तअ M.; विलपत्ता G.; विल्लवत्तका E. For दाव A. E. read ताव after which B. N. read सेट्ठि before चन्दण°. २ B. E. N. G. om. इह; B. E.N. read इमस्स for एदस्स and A. P. समसाण for मसाण. For पादपस्स B. E. N. G. read पादवस्स; for मुहुत्तं B. E. N, A. read मुहुत्तअं; याव. E; अज्ज before चाणक्क° B. E. N. चाणक्काय G.; For गिहि° R. reads गिहि°, B. N. G. गहि°, E. गहिए; B. N. G. read लक्खसो; E. लक्खसे. ३ अये A. P; वज्जलूम M.; वज्जलोमका. G. E.; वज्जलोमआ B. N. For गच्छ B. has एवं होदु; N. एवं कलेमि. ४ Om. R. G.; तथा for it E; निष्क्रामति G. which adds इदं चाणक्कगेहं पुरु° परिक्रम्य । अत्थि &c. omitting प्रथम...म्य. ५ ए ...च्चो Om. B. E. N. G.; निष्क्रम्य for परिक्रम्य M. For अ...वि. B. N. read के के एत्थ दुआलिआणं, E. को एत्थ दुआ°. Before अ...वि M. R. read एदं चाणक्क (क्य R.) गेहं । परिक्रम्य (om. R.); for एत्थ M. reads अत्थ.

एत्थ कोवि णिंवेदेह[1] दाव णन्दकुलणगकुलिसस्स मौलिअकुलपडिट्ठावकस्स[2] अज्जचाणक्कस्स । (ग)

राक्षसः—(स्वगतम् ।) एतदपि नाम[3] श्रोतव्यम् ।

चाण्डालः—एसो[4] अज्जणीदिसंजमिदबुद्धिपलिसले गिहीदे अमच्चरक्खसे त्ति । (क)

( ततः प्रविशति जवनिका[5]वृतशरीरो मुखमात्रदृश्यश्चाणक्यः ।)

चाणक्यः—भद्र, कथय कथय[6] ।

केनोत्तुङ्ग[7]शिखाकलापकपिलो बद्धः पटान्ते शिखी
पाशैः[8] केन सदागतेरगतिता सद्यः समासादिता ।

---

लिशस्य मौर्यकुलप्रतिष्ठापकस्यार्यचाणक्यस्य ।

(क) एष आर्यनीतिसंयमितबुद्धिपरिसरो गृहीतोऽमात्यराक्षस इति ।

---

एष आर्यनीतीति ।आर्यचाणक्यस्य नीत्या संयमितः कुण्ठीकृतः बुद्धिपरिसरो यस्य सः ।

केनेति । सदागतेर्वायोरगतिता गतिनिरोधः पाशैः सूक्ष्मरशनाभिः केन समासादितः कृत इत्यर्थः । सोऽपि झटिति कृत इत्याश्चर्यं भित्तिति-

---

१ णिवेदेध. B.N. For णग B. has सेण्णसंचअचूण्णण, N. simply संचूण्णणकुलिसह, E. शेह्म (ण्ण°) संवन्दलचूल (ण्ण?) नकुलिशाय; G. reads णगकुलिसाह. २. For पडि° B. N. read पदिट्ठाविदधम्मसंच्चअस्स (अह N.); G. पडिट्ठावकाहपउलधम्मसंचआह; E. पइट्ठापकायगाह (?) पउलधम्मसंचआह अज्जाह चाणक्काह. G. also reads चाणक्काहः. ३ राक्षसेन after this in B. E. N. and E. has आत्मगतम् for स्वग°; this speech and all that follows down to विगुणीकृत &c. (P. 310) are wanting in R. ४ एसोक्खु B. E. N. G. which last further on reads णीइ and G. E. read णिअल after it, B. N. reading णिअम; E. reads संजाणिद. for सजमिद. For पलिसले M. P. read परिसले, G. पुरिसआले, B. E. N. पुलिसआले. For गिहीदे B. E. N. read गहिदे; G. E. read लक्खसे for रक्ख°. ५ यवनिका. A. M.; यमनिका. E. Before चाण° B. N. read सहर्षः. P. reads °दृश्य चाणक्यः. ६ E. om. one कथय. ७ °त्तुंस (°त्तंस) E. ८ पाणौ P.; समापादिता G. E.

केनानेकपदानवासितसटः[1] सिंहोऽर्पितः पञ्जरे
भीमः केन च नैकनैक[2]मकरो दोर्भ्यां प्रतीर्णोऽर्णवः ॥ ६ ॥

चाण्डालः—[3]णीदिणिउणबुद्धिणा अज्जेण। (क)

चाणक्यः—मा मैवम्। नन्दकुलविद्वेषिणा[4] दैवेनेति ब्रूहि।

राक्षसः—(स्वगतम्[5]।) अयं दुरात्मा अथ वा महात्मा कौटिल्यः।
[6]आकरः सर्वशास्त्राणां रत्नानामिव सागरः।
गुणैर्न परितुष्यामो यस्य मत्सरिणो वयम् ॥ ७ ॥

चाणक्यः—(विलोक्य[7] सहर्षं स्वगतम्।) अये, अयमसावमात्यराक्षसः। येन महात्मना
गुरुभिः कल्पनाक्लेशैर्दीर्घ[8]जागरहेतुभिः।
चिरमायासिता सेना वृषलस्य मतिश्च मे ॥ ८ ॥

---

(क) नीतिनिपुणबुद्धिनार्येण।

---

रस्करिणीबन्धनादिना क्रमेण चिरात्कथंचित्कर्तुं शक्य इत्यर्थः। एवं दुष्कर-राक्षसवशीकारः केन कृत इति रूपकातिशयोक्त्या स्वात्मगुणश्लाघा। इयमद्भुतार्थप्राप्तिरुपगूहनं नामाङ्गम् ॥ ६ ॥

नन्दकुलेति। नन्दकुलं सर्वं दैवेन निपातितमिति निरवलम्बतया निर्व्यवसायोऽयमेवं वशीभूत इत्यर्थः।

गुरुभिरिति। सेनायां कल्पनाक्लेशाः सदासंनहनादयः। मतौ क-

---

१ For सटः, B. reads शठः, M. सठी. २ चलैकनक्र B. N.; निकरो for मकरो P.; दोष्णा for दोर्भ्याम् M. ३ णं before this B. E. N. G. For णिउण P. has णिवुण; B. N. add ज्जेव्व after अज्जेण. ४ B. E. N. G. begin this speech with भद्र and B. E. N. om. वि and E. om. इति before ब्रूहि. ५आत्मगतम् E.; after this B. E. N. G. read अये before अयम्; B. E. N. read स before दुरात्मा and अयं स before महात्मा. P. reads चाणक्यः after दुरात्मा. ६ यतः before this B.; N. has विद्यानाम् for शास्त्राणाम्. ७ A. P. om. विलोक्य. M. P. om. स्वग° for which E. reads आत्मगतम्; E. om. अये; B. N. M. read अयममात्यरा°. ८ दीपजागर N.

( जवनिकां [1]करेणापनीयोपसृत्य च । ) भो अमात्यराक्षस, विष्णुगुप्तोऽहमभिवादये ।

**राक्षसः**—(स्व[2]गतम् । ) अमात्य इति लज्जाकरमिदानीं विशेषणम् । (प्रकाशम् । ) विष्णुगुप्त, न मां चाण्डालस्पर्शदूषितं स्प्रष्टुमर्हसि ।

**चाणक्यः**—भो[3] अमात्यराक्षस, नेमौ चाण्डालौ । अयं खलु दृष्ट एव भवता सिद्धार्थको नाम राजपुरुषः । योऽप्यसौ द्वितीयः सोऽपि समिद्धार्थ[4]को नाम राजपुरुष एव । शकटदासोऽपि तपस्वी तं तादृशं ले[5]खमजानन्नेव कपटलेखं मया लेखित इति ।

**राक्षसः**—(स्व[6]गतम् । ) दिष्ट्या शकटदासं प्रत्यपनीतो विकल्पः ।

---

ल्पनाक्लेशा ऊहापोहादयः । यन्मतिपौरुषभयान्मौर्यसैन्येन मया चाहर्निशं जाग्रता महानायासोऽनुभूत इति भावः । इदं दुःखप्रशमनं समयः ॥ ८ ॥

---

१ करेण om. in B. E. N. G.; जवनिकान्तरेण A.; ज...कांच करेण &c. P.; यवनिका° M; च before भो om. P; भो twice B. E. N. which read also विष्णुगुप्तोभिवादयते. २ आत्मग°. E.; before इदानीम् B. N. read इदम्; G. E. read it after इदा°; B. E. N. G. read विशेषणपदम्; G.om. प्रकाशम्; B. N. read भो भो after प्रका°. For चाण्डाल B. E. N. G. read श्वपाक; P. has मां not before चा° but after दूषितम्. ३ Om. B. N. For ने...लौ G. has नेमौश्वपाकौ, B. E. N. नायं श्वपाकः. For दृष्ट B. N. read दृष्टपूर्व, E. पूर्वदृष्ट omitting the following एव. For सि...म B. N. read सिद्धार्थकनामा. ४ स...कनामा B. N.; समिद्धार्थनामा G. For एव after पुरुष E. has च after which B. N. have ताभ्यामेव सह सौहार्दमुत्पाद्य शकट &c. ५ B. E. N. om. लेखम्; B. N. read °न्नेव कपटलेखं मयैव लेखितः; E. °दृशं कपटलेखमजानन्नेव मयैव लेखितः. ६ आत्मग° B. E. N.; सहर्षम् before स्वग° M. E.; after it G; प्रत्युपनीतो P; before विकल्पः G. E. add मे.

**चाणक्यः**—किं बहुना । एष[1] संक्षेपतः कथयामि ।

भृत्या[2] भद्रभटादयः स च तथा लेखः स सिद्धार्थक-
स्तच्चालंकरणत्रयं स भवतो मित्रं भदन्तः किल ।
जीर्णोद्यानगतः स चापि पुरुषः[3] क्लेशः स च श्रेष्ठिनः
सर्वं मे—
(इत्यर्धोक्ते[4] लज्जां नाटयति ।)
वृषलस्य[5] वीर भवता संयोगमिच्छोर्नयः ॥ ९ ॥

तदयं[6] वृषलस्त्वां द्रष्टुमिच्छति ।

**राक्षसः**—(स्वगतम्[7] । ) का गतिः । एष पश्यामि ।

(ततः प्रविशति राजा[8] विभवतश्च परिवारः ।)

**राजा**—(स्वगतम्[9] ।) विनैव युद्धादार्येण जितं दुर्जयं परबलमिति लज्जित[10] एवास्मि । मम हि

---

भृत्या इति । भवतो मित्रं किल अलीकमित्यर्थः । सर्वमिति । 'नपुंसकमनपुंसकेन' इत्येकशेषः। जातावेकवचनं च । ते भद्रभटादयो भृत्याः स लेखः इत्याद्येवंजातीयं सर्वमुपायजातं वृषलस्य भवत्साचिव्यमिच्छोर्मम नयो नीतिप्रकार इति संक्षेपः । त्वत्संग्रहार्थमेतावान्मया नयः कृत इत्यर्थः । अतिशूरः साहसी भवान्विक्रमादिना मलयकेतुवन्निग्रहीतुं न शक्य इति ध्वनयितुं वीरेति संबोधनम् । इदं बीजवतां मुखाद्यर्थानां विप्रकीर्णानां ऐक्यार्थोपनयनं कार्यार्थोपसंहृतिः संहारो नामाङ्गं नवमम् ॥ ९ ॥

---

१ B. N. om. एष; M. E. G. read संक्षेपः for संक्षे...यामि. २ For भृत्या B. N. read येते. ३ सचार्तपु°. B. N. ४ सर्वोसौ मम B. E. N; इति om. E. which adds न after °क्ते;M. °क्तौ;A.P. read नाटयन् for नाटयति. ५ Before this B. G. N. read सर्वोसौ, G. सर्वं मे; for संयोग P. has साचिव्य and E. reads संयोगमिच्छेमितिः. ६ तदेष. B. N. which read आगच्छति for इच्छति. B. E. N. G. add पश्यैनम् after it. ७ आत्मग°. E; B. N. after गतिः read प्रकाशम् । य एष &c. M. agrees omitting य. ८ B. N. read सेवकैरनुगम्यमानो before राजा and om. what follows; A. P. read च after not before परिवार. ९ आत्म°. E.; om. in M ; पराजितम् for जितम्. B. E. N. G. For परबलम् E. has रिपुबलम्; B. N. अरिकुलम्. १० यत्सत्यं before this in B. E. N. which also read इव for एव; M. om. ममहि; B. E. N. om. हि.

फलयोगमवाप्य सायकानां विधियोगेन[1] विपक्षतां गतानाम् ।
न शुचेव भवत्यधोमुखानां निजतूणीशयनव्रतं प्रतुष्ट्यै ॥ १० ॥

अथवा ।

विगुणीकृतकार्मुकोऽपि जेतुं भुवि जेतव्यमसौ समर्थ एव
स्वपतोऽपि[2] ममेव[3] यस्य तन्त्रे गुरवो जाग्रति कार्यजागरूकाः ॥ ११ ॥

(चाणक्यमुपसृत्य ।) आर्य[4], चन्द्रगुप्तः प्रणमति ।

**चाणक्यः**—[5]संपन्नास्ते सर्वाशिषः । तदभिवादयस्व तत्रभवन्तममात्यमुख्यम् ।

---

फलयोगमिति । विधियोगेन सुदैवप्रसादेन फलयोगं कार्यसिद्धिप्राप्तिमन्यत्र शल्ययोगं प्राप्यापि विपक्षतां विरोधितां गतानामिति विरोधाभासः । वीनां कङ्कानां पक्षा येषामिति बहुव्रीहिः । तेषां भावस्तत्तां गतानां विशिष्टकङ्कपत्रवतामिति वा । इति विरोधपरिहारः । शुचेव विपक्षताप्राप्तिजातया शुचेवेति हेतूत्प्रेक्षा अधोमुखानां सायकानां निजतूणीशयनमेव व्रतं सर्वदा तत्रैवावस्थाननियमरूपं प्रतुष्ट्यै संतोषाय न भवति । 'अनियोगेन विलक्षतां गतानाम्' इति पाठे नियोगो युद्धादौ विनियोगस्तदभावः तेन लज्जितानामित्यर्थो वर्णनीयः ॥ १० ॥

इत्येवं प्रकारेण लज्जित्वा पुनरपि समाधत्ते—विगुणीकृतेति । विगुणीकृतं ज्यारहितं प्रयोजनाभाववच्च कृतं कार्मुकं यस्य । इयं वाञ्छितार्थप्राप्तिरानन्दः ॥ ११ ॥

---

१ अनियोगेन for विधियोगेन. B. E. N. which read विलक्षताम् for विपक्षताम्. २ स्वप्तु°. B. N. For the last word B. reads शयनव्रतप्रतिष्ठा; N. E. श...तस्य निष्ठा, G. तूणीरशयनव्रतप्रतिष्ठा, A. P. read शयनं निजप्रतुष्ट्यै. ३ ममैव G. E. ४ अये. G.; च...सोभिवादयते. E. ५ वृषल before this B. E. N. G.; मम after ते E., after सर्वा G. For तत्रभ° G. E. have अत्रभवन्तम्. For अ...ख्यम् B.N. read अमात्यराक्षसं पैतृकस्तवायममात्यमुख्यः, G. अमात्यराक्षसमयं च ते पैतृकोमात्यमुख्यः, E. अमात्यराक्षसमयं पैतृकोमात्यः ।

**राक्षसः**—(स्वगतम्[1] ।) योजितोऽनेन संबन्धः ।

**चाणक्यः**—(राजानमुपसृत्य[2] ।)अयममात्यराक्षसः प्राप्तः प्रणमैनम् ।

**राजा**—(राक्षसमुपसृत्य[3] ।) आर्य, चन्द्रगुप्तः प्रणमति ।

**राक्षसः**—(विलोक्य स्वगतम् ।) अये, चन्द्रगुप्तः[4] । य एष

बाल एव हि लोकेऽस्मिन्[5]संभावितमहोदयः ।
क्रमेणारूढवान्राज्यं यूथैश्वर्यमिव[6] द्विपः ॥ १२ ॥

( प्रकाशम् ।) राजन्, विजयस्व ।

**राजा**—आर्य

जगतः किं न विजितं मयेति प्रविचिन्त्यताम् ।
गुरौ षाड्गुण्यचिन्तायामार्ये चार्ये[7] च जाग्रति ॥ १३ ॥

**राक्षसः**—(स्वगतम्[8] ।) स्पृशति मां भृत्यभावेन कौटिल्यशिष्यः । अथवा विनय एवैष[9] चन्द्रगुप्तस्य मत्सरस्तु मे विपरीतं कल्पयति । सर्वथा स्थाने यशस्वी चाणक्यः । कुतः[10] ।

---

बाल एवेति । बाल्यमारभ्यैव राजलक्षणलक्षिततया महोन्नतो भविष्यतीति संभावित इत्यर्थः ॥ १२ ॥

जगत इति । जगत इति शेषे षष्ठी । जगति किं न विजितमित्यर्थः ॥ १३ ॥

कौटिल्यशिष्य इति । स्वाभाविक एवैष विनय इत्यर्थः ।

---

१ आत्म° G.; this speech is om. in R. E.; and in M. this speech and the two preceding ones are omitted. २ This speech is wanting in B. E. N.G; before अयम् R. has वत्स. ३ E. om. राजा up to this. For च…ति B. E. N. read चन्द्रगुप्तोहम (E. om. अहम्) भिवादये (°यते E.). ४ अयम् before this B. E. N. G. ५ लोकेन for लोकेस्मिन् B. E. N; N. reads महोन्नतिः for महोदयः. ६ °र्य इव A. P. ७ चाग्रे A. P.; कार्ये E.; त्वयि B. N. ८ आत्मग°. E.; कौटिल्यशिष्यो before भृत्य° B. N. ९ G. om. एव; E. om. एष and मे further on; कलयति for कल्पयति. B. N. M.; विकल्पयति E. १० Om. M. R. G.

द्रव्यं जिगीषुमधिगम्य जडात्मनोऽपि
नेतुर्यशस्विनि पदे नियतं[1] प्रतिष्ठा ।
अद्रव्यमेत्य भुवि शुद्ध[2]नयोऽपि मन्त्री
शीर्णा[3]श्रयः पतति कूलजवृक्षवृत्त्या ॥ १४ ॥

**चाणक्यः**—अमात्य राक्षस, ई[4]ष्यते चन्दनदासस्य जीवितम् ।

**राक्षसः**—भो विष्णुगुप्त, कुतः[5] संदेहः ।

**चाणक्यः**—अमात्य राक्षस, अगृहीतशस्त्रेण भवता[6]नुगृह्यते वृषल इत्यतः संदेहः । तद्यदि सत्यमेव चन्दनदासस्य जीवितमिष्यते ततो गृह्यतामिदं शस्त्रम्[7] ।

**राक्षसः**—भो विष्णुगुप्त, मा मैवम्[8] । अयोग्या वयमस्य विशेषतस्त्वया गृहीतस्य ग्रहणे ।

---

द्रव्यमिति । द्रव्यं भव्य इति निपात्यते । द्रव्यं श्रेयःप्राप्तियोग्यं जिगीषुं जयोद्योगिनमधिगम्य जडात्मनो मन्दबुद्धेरपि नेतुरमात्यस्य यशस्विपदे स्थाने प्रतिष्ठा नियतमवश्यं भवति किमुतोदारबुद्धेरमात्यस्य । अयोग्यप्रभोराश्रयेण विशुद्धनयोऽपि मत्री अहमिव शीर्णाश्रयः सन्पतति नदीकूलगतवृक्ष इवेत्यर्थः ॥ १४ ॥

एवं मनसि विचारयन्तं राक्षसं चन्द्रगुप्तसाचिव्याभ्युपगमाय प्रवणयति—अमात्येत्यादि । साचिव्यमनभ्युपगम्य ताटस्थ्येन वृषलानुग्रहः अप्रयोजक इति भावः ।

---

१ नियता B. N. २ For भु...द्ध B. N. read तु विविक्त, E. भुवि चित्र, M. तु विशुद्ध. ३ जीर्णा° R.; for वृत्त्या A. has रीत्या, G. तत्या?, E. त्योपा? ४ B. N. read अपि before this. ५ कः for कुतः B. N.; अत्रकः E; this and next speech are wanting in G. ६ °ता नानु°. B. E. N. G. ७ After this A. P. read राक्षसश्चिन्तयति ॥ चाण° । तपोवनं यामि (ततो विनयामि P.) विहाय मौर्यं । त्वां चाधिकारे ह्यधिकृत्य मुख्यम् ॥ त्वयि स्थिते वाक्यानि (वाक्पति P.) बद्धबुद्धौ भुनक्तु गामिन्द्र इवैष (व P.) चन्द्रः ॥ पुनस्तदेव पठति. The Alvar Ms. reads राज्यनिबद्ध; &c. in the third line. ८ मामैवम् twice A. M. P. For अस्य &c. B. N. read एतस्य ग्रहणे वि...स्य शस्त्रस्य; R. reads अयोग्यमयस्य (?) &c. as in text except परिगृहीतस्य for गृहीतस्य.

**चाणक्यः**—राक्षस[1], योग्योऽहं न त्वं योग्य इति किमनेन । पश्य ।

अश्वैः सार्द्धमजस्रदत्तकविकैः[2] क्षामैरशून्यासनैः
स्नाना[3]हारविहारपानशयनस्वेच्छासुखैर्वर्जितान् ।
माहात्म्यात्तव[4] पौरुषस्य मतिमन्दृप्तारिदर्पच्छिदः
पश्यैतान्परिकल्पना[5]व्यतिकरप्रोच्छूनवंशान्गजान् ॥ १५ ॥

अथवा किं बहुना[6] । न खलु भवतः शस्त्रग्रहणमन्तरेण चन्दनदासस्य जीवितमस्ति ।

**राक्षसः**—( स्वगतम्[7] । )

---

अश्वैरिति । स्नानाहारादिवर्जनादेव क्षामैः कृशैरजस्रदत्तकविकैरशून्यासनैः अनपनीतखलीनपल्याणैः सदा संनद्धैरित्यर्थः । परिकल्पनाव्यतिकरेण सदा संनाहप्रसङ्गेन पल्याणापनयाभावात्प्रोच्छूनाः शोफरुजा व्याप्ता वंशाः पृष्ठास्थिभागा येषां तान्पश्येति । आदरेण पुनः पश्येति प्रयोगः । मतिमतः दृप्तारिदर्पच्छिदः पौरुषशालिनश्च तव माहात्म्यादिति साचिव्याय त्वमेव योग्य इति प्रवणीकर्तुं प्रशंसा ॥ १५ ॥

किं बहुनेति अस्मत्परिक्लेशकथनेन किं प्रयोजनम् । साचिव्यपदं भवतावश्यमङ्गीकर्तव्यमित्याह—न खल्विति ।

---

१ अमात्य before राक्षस B. E. N.; for राक्षस P; for what follows B. N. read योग्योहमयोग्यो भवानिति कथमेतत्; E. reads न योग्योहं त्वं योग्य इति किमनेन । पश्य नाम. २ विका B. N. E. G.; कलिकैः R.; °न्यासनान् B. N. ३ नानाहार G.; विनोद for विहार N.; शयनैः A. P.; °खैर्निर्जितान्. M. R. ४ °त्म्याददतिपौरुषस्य भवतो दृ° B.; °त्म्यं तव &c. as in text G. ५ कल्पन A. P. ६ किमनेन B. E. N. G.; अस्ति at the end om. in E. ७ Om. G.

नन्दस्नेहगुणाः[1] स्पृशन्ति हृदयं भृत्योस्मि तद्विद्विषां
ये सिक्ताः स्वयमेव वृद्धिमगमंश्छिन्नास्त[2] एव द्रुमाः ।
शस्त्रं मित्रशरीररक्षणकृते[3] व्यापारणीयं मया
कार्याणां गतयो विधेरपि न यन्त्याज्ञाकरत्वं चिरात्[4] ॥ १६ ॥

(प्रकाशम् ।) विष्णुगुप्त[5], नमः सर्वकार्यप्रतिपत्तिहेतवे सुहृत्स्नेहाय । का गतिः । एष प्रह्वो[6]ऽस्मि ।

चाणक्यः—( सहर्षम् । ) वृषल[7] वृषल, अमात्यराक्षसेनेदानीमनुगृहीतोऽसि[8] । दिष्ट्या वर्द्धते भवान् ।

राजा—आर्यप्रसाद एष चन्द्रगुप्तेनानुभूयते ।

---

नन्देति। ये नन्दाः स्वयमेव मया सिक्ताः गर्भपतनात्प्रभृति तैलद्रोणीनिधानादिना महता परिक्लेशेन परिपालिताः सन्तः वृद्धिमगमंस्ते संप्रति नष्टाः तद्गुणाकृष्टहृदयस्यापि मम तेषां विद्विषो मौर्यस्य भृत्यत्वं मित्रशरीररक्षणार्थमवश्यमभ्युपेयत्वेन प्रसक्तमित्यहो कार्याणां गतिवशाद्विधिविलसितमप्यन्यथाभवतीति खिद्यते । कार्याणां गतयः विधेरप्याज्ञाकरत्वं चिरान्न यन्ति । अतिप्रबलोऽपि विधिः कार्यगतिवैचित्र्यात्कार्यगतिकिंकर इव भवतीत्यर्थः ॥ १६ ॥

एष प्रह्वोऽस्मीति । इदं प्राप्तकार्यानुमोदनमाभाषणमङ्गम् ॥

आर्यप्रसाद एष इति । इदं लब्धस्थिरीकरणं कृतिर्नामाङ्गम् ॥

---

१ For गुणाः B. N. G. read कणः; for हृदयं, हृदये; for °द्विषो, °द्विषाम्. २ For वृ...न्ना B. N. read पाणिपयसा छेद्या. ३. B. N. read °रीरकेषु सरुषा; and सदा for मया; G. reads °रीरकेषु परुषम्. ४ चिरम् G; for यन्त्या...त् B. N. read यान्त्यालोचनागोचरम्. ५ भो before this B. E. N. G. and उपानय खड्गम् after it B. N; from स्वग° प्रकाशम् om. in E. ६ सज्जो B. N.; प्रसह्वेमि (?) E. ७ शस्त्रमर्पयित्वा after सहर्षम् B. N.; one वृषल om. R. ८ B. N. om. °सि. and read गृहीतशस्त्रेण before अनुगृहीतो; E. reads गृहीताधिकारेण and om. सि; G. agrees with our text and reads स्मि° for सि; P. also reading °पि for °सि.

( प्रविश्य )

पुरुषः[1]—जेदु अज्जो । एसो क्खु भद्दभटभाउराअणप्पमुहेहिं संजमिदकलचलणो मलअकेदू पडिहारभूमिं उवट्ठिदो । एदं[2] सुणिअ अज्जो प्पमाणम् । (क)

चाणक्यः—भद्र[3], निवेद्यताममात्यराक्षसाय । सोऽयमिदानीं जानीते ।

राक्षसः—(स्वगतम्[4] ।) दासीकृत्य मामिदानीं विज्ञापनायां मुखरीकरोति कौटिल्यः । का गतिः । (प्रकाशम् ।) राजन् चन्द्रगुप्त, विदितमेव ते[5] यथा वयं मलयकेतौ कंचित्कालमुषितास्तत्परिरक्ष्यन्तामस्य प्राणाः ।

( राजा चाणक्यमुखमवलोकयति )

चाणक्यः—प्रति[6]मानयितव्योऽमात्यराक्षसस्य प्रथमः प्रणयः ।

---

(क) जयत्वार्यः । एष खलु भद्रभटभागुरायणप्रमुखैः संयमितकरचरणो मलयकेतुः प्रतिहारभूमिमुपस्थितः । इदं श्रुत्वा आर्यः प्रमाणम् ।

---

भद्र, निवेद्यतामिति । इदमिष्टकार्यदर्शनं पूर्वभावो नामाङ्गम् ॥ प्रतिमानयितव्य इति । यद्यपि शत्रुशेषं न शेषयेदिति शास्त्रान्मलयकेतुर्न

---

१ पु…प्रविश्य. G.; for जेदु B. N. read जअदु जअदु; G. E. जयदु जयदु. For अज्जो A. P. read अमच्चो after which B. E. N. read अज्ज; P. om. क्खु; B. E. N. G. read भद्दभड; A. reads भागुराअण; R. E. भागुरायण. For संजिमिद E. has °मिय; B. N. °मिअ; E. om. कलचलणो; P. reads कलचरणो. For मलअ. B. E. N. read मलय°; P. मलए (?); G. reads परिहारभूमीए पत्थविदो; for उवट्ठिदो B. N. have अवत्थापिदो; E. उवट्ठविदा. २ ता एव B. N.; एह E.; after सुणिअ B. N. read एत्थ. ३ आ श्रुतम् before this B. N.; राक्षसस्य E; the MS. G. stops at राक्षसाय; B. E. N. om. सः; B. N. read राजकार्यं करिष्यति; E. जानाति for जानीते. ४ आत्मग°. E.; कथम् after it B. E. N.; for दासी° E. has वशी° &c.; B. N. om. माम् ; for विज्ञा° E. has वि…य; B. N. add माम् after वि…य. ५ B. N. om. ते and B. E. N. read किंचित्कालान्तरम्; for °रक्ष्यन्ता° E. has °रक्षणीयाः. ६ B. E. N. read वृषल before and अयम् after this.

(पुरुषं प्रति[1]।) भद्र असमद्वचनादुच्यन्तां भद्रभटप्रमुखा यथा—'अमात्यराक्षसेन विज्ञापितो देवश्चन्द्रगुप्तः प्रयच्छति मलयकेतवे पित्र्यमेव विषयम् । अतो गच्छन्तु भवन्तः सहानेन । प्रतिष्ठिते चास्मिन्पुनरागन्तव्यम्' इति ।

पुरुषः—जं अज्जो[2] आणवेदि त्ति । (परिक्रामति ।) (क)

चाणक्यः—भद्र[3], तिष्ठ तिष्ठ । अपरं च वक्तव्यो दुर्गपालः—'अमात्यराक्षसलाभेन सुप्रीतश्चन्द्रगुप्तः समाज्ञापयति[4] य एष श्रेष्ठी चन्दनदासः स पृथिव्यां सर्वनगरश्रेष्ठिपदमारोप्यतामिति ।

---

(क) यदार्य आज्ञापयतीति ।

---

मोक्षणीय इति, तथापि राक्षसस्य साचिव्यग्रहणप्रथमप्रार्थनावश्यं मानयितव्येत्यर्थः ।

भद्रभटप्रमुखा इति । भद्रभटादयः राक्षसस्य साचिव्यनिर्वाहाध्यवसाये संदिहानास्तद्वचनं चन्द्रगुप्तवचनं च न प्रमाणीकरिष्यन्तीत्यस्मद्वचनादित्युक्तम् । किंच । अमात्यराक्षसेन विज्ञापित इति वचनं स्वयं तथापकृतेनापि राक्षसेन स्वस्मिन्नेवमुपकृतमिति राक्षससौजन्यं मलयकेतुना ज्ञातव्यमिति ।

---

१ For प्रति B. E. N. have अवलोक्य. For असद्व° B. N. read मद्व°. E. has °द्व° simply. For प्रमुखा B. N. E. read प्रभृतयः omitting यथा; B. E. N. also read राक्षसविज्ञा° for राक्षसेन विज्ञा°. For पित्र्य° P. seems to read °पि स्वमेव. B. N. om. final इति. २ देवो M. R.; the whole speech om. E.; परिक्रा° om. in B. N.; °वेदीति परि°. P. ३ B. N. read तिष्ठ तावत् । भद्र भद्र एवमपरमुच्यतां विजयपालो दुर्गपालश्च; E. has अपरमुच्यतां विजयो दुर्गपालः; P. reads अपरं वक्तव्यं दुर्गपालः; R. om. one तिष्ठ and reads दुर्गपाल्यः; R. om. राक्षस; B. E. N. read अमात्यराक्षसस्य गृहीतशस्त्रस्य प्रीत्या देवश्च° &c. ४ A. M. P. read सोयमाज्ञा°; R. आज्ञा°; E. om. all from अमात्य down to this; B. E. N. R. om. यः and सः further on; E. om. श्रेष्ठी; B. E. N. read तावत् after एष; For सर्वनगर B. N. read सर्वेषु नगरेषु, E. सर्वनगरेषु.

अपि[1] च विना वाहनहस्तिभ्यः क्रियतां सर्वमोक्षः' इति। अथवामात्य-राक्षसे नेतरि किमस्माकं प्रयोजनमिदानीम् ।

विना[2] वाहनहस्तिभ्यो मुच्यतां सर्वबन्धनम् ।
पूर्णप्रतिज्ञेन मया केवलं बध्यते[3] शिखा ॥ १७ ॥

पुरुषः—जं अज्जो आणवेदि त्ति । (निष्क्रान्तः ।) (क)

चाणक्यः—भो राजन् चन्द्रगुप्त, भो[4] अमात्य राक्षस, उच्यतां किं वां भूयः प्रियमुपकरोमि ।

---

(क) यदार्य आज्ञापयतीति ।

---

विना वाहनहस्तिभ्य इति । ततः प्रविशति मुक्तां शिखां परिमृशन्निति मुखसंधावुपक्षिप्तस्य बीजस्यैव मया निर्वहणं कृतमित्याह—'तीर्णप्रतिज्ञेन मया केवलं बध्यते शिखा' इति ।

भो राजन्निति । इदानीं चन्द्रगुप्तस्य राज्यलक्ष्मीस्थिरीकरणाध्यवसायाद्वृषलशब्दमपहाय राजन्निति संबोधनम् । किंच मलयकेतुनिग्रहराक्षससंग्रहरूपं चन्द्रगुप्तस्य प्रियं कृतं मलयकेतुजीवनदानस्वराज्यप्रतिष्ठापनरूपचन्दनदासबन्धमोचनसकलनगरश्रेष्ठिपदलाभरूपं च राक्षसस्य महत्प्रियमनुष्ठितम् । अतोऽप्यधिकं युवयोः प्रियं किं करोमीत्याह—किं वां भूय इति ।

---

1 B. E. om. अपि च and have instead पुरु° । जं अमच्चो ( अज्जो E. ) आणवेदित्ति निष्क्रान्तः चाण°. चन्द्रगुप्त° किं ते भूयः प्रियं करोमि ॥ राजा । किमत &c. as on next page चाण° विजये उच्यतां दुर्गपालो विजयपालश्च अमात्यराक्षसपरिग्रहेण प्रीतो देवश्चन्द्रगुप्तः समाज्ञापयति विना &c. N. has अन्यच्च for अपि च; for वा...भ्यः B. N. read हस्त्यश्वम्, P. वा...भ्याम्, E. वा...हस्तिभ्यः; B. E. N. add बन्ध before मोक्ष and E. om. इति. For अस्माकम् B. N. read हस्त्यश्वेन, E. हस्तिभिः; E. om. इदानीम्, B. N. have तत् before it. 2 सह B. N.; for हस्तिभ्यो B. N. read हस्तिभ्याम्, E. युग्येभ्यो; E. also reads पूर्व for सर्व before बन्धनम्; A. P. read तीर्णप्रतिज्ञेन. 3 B. N. read इति शिखां बध्नाति before this, and for पुरु B. reads प्रति°; N. om. this speech and E. also; P. reads °वेदीति नि°; B. reads निष्क्रान्ता. 4 B. E. om. भो ...भो and read तदुच्य° for उच्य° and ते (भूय) for वाम्; P. reads भूयः before किम् and M. R. read उपहरामि for उपकरोमि.

(पुरुषं प्रति[1]।) भद्र अस्मद्वचनादुच्यन्तां भद्रभटप्रमुखा यथा—'अमात्यराक्षसेन विज्ञापितो देवश्चन्द्रगुप्तः प्रयच्छति मलयकेतवे पित्र्यमेव विषयम्। अतो गच्छन्तु भवन्तः सहानेन। प्रतिष्ठिते चास्मिन्पुनरागन्तव्यम्' इति।

पुरुषः—जं अज्जो[2] आणवेदि त्ति। (परिक्रामति।) (क)

चाणक्यः—भद्र[3], तिष्ठ तिष्ठ। अपरं च वक्तव्यो दुर्गपालः—'अमात्यराक्षसलाभेन सुप्रीतश्चन्द्रगुप्तः समाज्ञापयति[4] य एष श्रेष्ठी चन्दनदासः स पृथिव्यां सर्वनगरश्रेष्ठिपदमारोप्यतामिति।

---

(क) यदार्य आज्ञापयतीति।

---

मोक्षणीय इति, तथापि राक्षसस्य साचिव्यग्रहणप्रथमप्रार्थनावश्यं मानयितव्येत्यर्थः।

भद्रभटप्रमुखा इति। भद्रभटादयः राक्षसस्य साचिव्यनिर्वाहाध्यवसाये संदिहानास्तद्वचनं चन्द्रगुप्तवचनं च न प्रमाणीकरिष्यन्तीत्यस्मद्वचनादित्युक्तम्। किंच। अमात्यराक्षसेन विज्ञापित इति वचनं स्वयं तथापकृतेनापि राक्षसेन स्वस्मिन्नेवमुपकृतमिति राक्षससौजन्यं मलयकेतुना ज्ञातव्यमिति।

---

१ For प्रति B. E. N. have अवलोक्य. For अस्मद्व° B. N. read मद्व°. E. has °द्व° simply. For प्रमुखा B. N. E. read प्रभृतयः omitting यथा; B. E. N. also read राक्षसविज्ञा° for राक्षसेन विज्ञा°. For पित्र्य° P. seems to read °पि स्वमेव. B. N. om. final इति. २ देवो M. R.; the whole speech om. E.; परिक्रा° om. in B. N.; °वेदीति परि°. P. ३ B. N. read तिष्ठ तावत्। भद्र भद्र एवमपरमुच्यतां विजयपालो दुर्गपालश्च; E. has अपरमुच्यतां विजयो दुर्गपालः; P. reads अपरं वक्तव्यं दुर्गपालः; R. om. one तिष्ठ and reads दुर्गपाल्यः; R. om. राक्षस; B. E. N. read अमात्यराक्षसस्य गृहीतशस्त्रस्य प्रीत्या देवश्च° &c. ४ A. M. P. read सोयमाज्ञा°; R. आज्ञा°; E. om. all from अमात्य down to this; B. E. N. R. om. यः and सः further on; E. om. श्रेष्ठी; B. E. N. read तावत् after एष; For सर्वनगर B. N. read सर्वेषु नगरेषु, E. सर्वनगरेषु.

अपि च[1] विना वाहनहस्तिभ्यः क्रियतां सर्वमोक्षः' इति। अथवामात्यराक्षसे नेतरि किमस्माकं प्रयोजनमिदानीम्।

विना[2] वाहनहस्तिभ्यो मुच्यतां सर्वबन्धनम्।
पूर्णप्रतिज्ञेन मया केवलं बध्यते[3] शिखा ॥ १७ ॥

पुरुषः—जं अज्जो आणवेदि त्ति। (निष्क्रान्तः।) (क)

चाणक्यः—भो राजन् चन्द्रगुप्त, भो[4] अमात्य राक्षस, उच्यतां किं वां भूयः प्रियमुपकरोमि।

(क) यदार्य आज्ञापयतीति।

विना वाहनहस्तिभ्य इति। ततः प्रविशति मुक्तां शिखां परिमृशन्निति मुखसंधावुपक्षिप्तस्य बीजस्यैव मया निर्वहणं कृतमित्याह—'तीर्णप्रतिज्ञेन मया केवलं बध्यते शिखा' इति।

भो राजन्निति। इदानीं चन्द्रगुप्तस्य राज्यलक्ष्मीस्थिरीकरणाध्यवसायाद्वृषलशब्दमपहाय राजन्निति संबोधनम्। किंच मलयकेतुनिग्रहराक्षससंग्रहरूपं चन्द्रगुप्तस्य प्रियं कृतं मलयकेतुजीवनदानस्वराज्यप्रतिष्ठापनरूपचन्दनदासबन्धमोचनसकलनगरश्रेष्ठिपदलाभरूपं च राक्षसस्य महत्प्रियमनुष्ठितम्। अतोऽप्यधिकं युवयोः प्रियं किं करोमीत्याह—किं वां भूय इति।

१ B. E. om. अपि च and have instead पुरु°। जं अमच्चो (अज्जो E.) आणवेदित्ति निष्क्रान्तः चाण°. चन्द्रगुप्त° किं ते भूयः प्रियं करोमि ॥ राजा। किमत &c. as on next page चाण° विजये उच्यतां दुर्गपालो विजयपालश्च अमात्यराक्षसपरिग्रहेण प्रीतो देवश्चन्द्रगुप्तः समाज्ञापयति विना &c. N. has अन्यच्च for अपि च; for वा...भ्यः B. N. read हस्त्यश्वम्, P. वा...भ्याम्, E. वा...हस्तिभ्यः; B. E. N. add बन्ध before मोक्ष and E. om. इति. For अस्माकम् B. N. read हस्त्यश्वेन, E. हस्तिभिः; E. om. इदानीम्, B. N. have तत् before it. २ सह B. N.; for हस्तिभ्यो B. N. read हस्तिभ्याम्, E. युग्येभ्यो; E. also reads पूर्व for सर्व before बन्धनम्; A. P. read तीर्णप्रतिज्ञेन. ३ B. N. read इति शिखां बध्नाति before this, and for पुरु B. reads प्रति°; N. om. this speech and E. also; P. reads °वेदीति नि°; B. reads निष्क्रान्ता. ४ B. E. om. भो ...भो and read तदुच्य° for उच्य° and ते (भूय) for वाम्; P. reads भूयः before किम् and M. R. read उपहरामि for उपकरोमि.

